# HAḌDARŚANA-SAMUCHCHAYA

BY

HARIBHADRA

WITH

GUṆARATNA'S COMMENTARY
TARKARAHASYA-DĪPIKĀ.

EDITED BY

LUIGI SUALI, PH.D.

OF

BOLOGNA.

CALCUTTA:
PRINTED AT THE BAPTIST MISSION PRESS,
AND PUBLISHED BY THE
ASIATIC SOCIETY, 57, PARK STREET.
1905.

## PRELIMINARY NOTICE.

In preparing this edition I have made use of the fo[llowing]
material :—

I. For the text of the sūtras of Haribhadra alone.

A.—This MS. contains the sūtras and an avacū[rṇi]
3 folios. The text, in the middle of the pages,
11 lines, × 47 akṣaras.

G.—MS. of the Library of the Deccan College. See R[.]
Bhandarkar's Report on the search for Sanskrit M[a]nuscripts in the Bombay Presidency during th[e]
years 1884-85, 1885-86 and 1886-87, No. 1387.
3 folios. Text with avacūrṇi. Text: 10—13 lines
× 42-49 akṣaras The avacūrṇi is in both these MS.
the same, but I have not found the name of the
author. The age of the MS. in not easy to determine,
but A seems to be older than G.

D.—MS. of the Library of the Deccan College. See
Bhandarkar, loc. cit. No. 1386—24 f. × 17 l. × 52
akṣ. This MS. contains the text of Haribhadra
with a çommentary that is but an abstract of the
commentary of Guṇaratnasûri. No date.

E.—An old MS. of 27 fol. × 15 l. × 58 akṣ. It contains,
fol. 1-25ᵃ, the sūtras of Haribhadra and the same
commentary as D.

E¹.—The folios 25ᵃ—27 of the MS. E. containing Haribhadra's text only.

II. For the sūtras of Haribhadra and the commentary of
Guṇaratna :—

B.—An old and carefully written MS. in the Library
of the University of Berlin. See A. Weber Verzeichniss der Sanskrit-und Prâkrit Handschriften, etc.

[I] vol., p. 180—182, No. 1610 (=MS. or fol. 741). I first used a beautiful photograph of this MS. taken by Professor Count F. L. Pullé, and afterwards compared doubtful passages of it with the original. B is the best and oldest of my MSS.; together with Y it forms the basis of the present edition—85 f. × 17 l. × 49 akshara. No date.

[Y]—A good and old MS. 61 fol. × 19 l. × 65 aksh. Belonging to Professor Hermann Jacobi. No date.

P.—A modern MS. 63 f. × 18 l. × 62—[6]9 aksh. Samvat 1956.

K.—Fol. 98 × 15 l. × 53 aksh. This MS. bears no date, but it seems to be old.

The MSS. A, E, P and K have been procured and kindly lent me by Vakil Keshavlal Premchand B.A. LL.B., of Ahmedabad. I have much pleasure in publicly aknowledging my indebtedness to him for his unselfish endeavours in the interest of this work. My best thanks are due, besides, to the authorities of the Berlin Library for lending me MS. B, and especially to my teacher Professor Dr. Hermann Jacobi, who not only lent me his MS. and afforded me an opportunity of comparing the above mentioned MSS of the Deccan College Library, but also, by his advice and assistance, most effectually aided me in preparing the text of this edition.

LUIGI SUALI.

*Bonn a/Rh., 20th May*, 1905.

# प्रथमोऽधिकारः ।

जयति विजितरागः केवलालोकशाली
सुरपतिकृतसेवः श्रीमहावीरदेवः ।
यदुसमसमयाब्धिश्लाघ्यगाम्भीर्यभाजः
सकलनयसमूहा बिन्दुमात्रं भजन्ते ॥ १ ॥

श्रीवीरः स जिनः श्रिये भवतु यत्स्याद्वाददावानले
भस्मीभूतकुतर्ककाष्ठनिकरे तृप्यन्ति सर्वेऽप्यहो ।
संगीतिव्यवहारलुब्धव्यतिकरानिष्ठाविरोधप्रभा-
वाद्यासंभवसंकरप्रभृतयो दोषाः परै रोपिताः ॥ २ ॥

वाग्देवी संविदे नः स्यात्सदा या सर्वदेहिनाम् ।
चिन्तितार्थान् पिपर्तीह कल्पवल्लीव सेविता ॥ ३ ॥ 10

नत्वा निजगुरून् भक्त्या षड्दर्शनसमुच्चये ।
टीकां संक्षेपतो कुर्वे स्वान्योपकृतिहेतवे ॥ ४ ॥

इह हि जगति प्रौपचित्तवतां महतां परोपकारसंपादनमेव सर्वोत्तमा स्वार्थसंपत्तिरिति मत्वा परोपकारैकप्रवृत्तिसार-चतुर्दशशतसंख्यशास्त्रविरचनाजनितजगज्जन्तूपकारः श्रीजिन- 15 शासनप्रभावनाप्रभाताविर्भावविभाभास्करो याकिनीमहत्तरावचना-नवबोधसंबोधितबन्धुरो भगवान् श्रीहरिभद्रसूरिः सद्बुद्धी

वाच्यस्वरूपं जिज्ञासूनां तत्तदीयग्रन्थविस्तरावधारणाशक्तिविकलानां सकलानां विनेयानामनुग्रहं विधित्सया स्वल्पग्रन्थं महार्थं सद्भूतनामान्वयं षड्दर्शनसमुच्चयं शास्त्रं प्रारभमाणः शास्त्रकृन्मङ्गलाभिधेययोः साक्षादभिधानाय संबन्धप्रयोजनयोश्च संसूचनाय प्रथमं श्लोकमेनमाह ॥

**सद्दर्शनं जिनं नत्वा वीरं स्याद्वाददेशकम् ।**
**सर्वदर्शनवाच्योऽर्थः संक्षेपेण निगद्यते ॥ १ ॥**

सत् प्रशस्यमानं क्षायिकज्ञानापेक्षया प्रशस्तं वा दर्शनमुपलब्धिर्ज्ञानं केवलाख्यं यस्य, स सद्दर्शनः । अथवा सत्प्रशस्तं दर्शनं केवलदर्शनं तदव्यभिचारित्वात्केवलज्ञानं च यस्य, स सद्दर्शनः, सर्वज्ञः सर्वदर्शी चेत्यर्थः, तम् । अनेन विशेषणेन श्रीवर्धमानस्य भगवतो ज्ञानातिशयमाविरभवत् । अथवा सदर्चितं सकलसुरासुरेन्द्रादिभिरभ्यर्चितं दर्शनं मतं यस्य, स सद्दर्शनस्तम् । अनेन च तदीयदर्शनस्य त्रिभुवनपूज्यतामभिदधानः श्रीवर्धमानस्य त्रिभुवनविभोः सुतरां त्रिभुवनपूज्यतां व्यनक्तीति पूजातिशयं प्राचीकटत् । तथा जयति रागद्वेषादिशत्रूनिति जिनस्तम् । अनेनापायापगमातिशयमुदबीभवत् ॥ तथा [illegible]सर्वदर्शनसंमतसद्भूतवस्त्वंशानां मिथः सापेक्षतया वदनं स्याद्वादः । सदसन्नित्यानित्यसामान्यविशेषाभिलाप्यानभिलाप्योभयात्मानेकान्त इत्यर्थः ॥ ननु कथं सर्वदर्शनानां परस्परविरुद्धभाषिणामभीष्टा वस्त्वंशाः सद्भूताः

संभवेयुः येषां मिथःसापेक्षतया स्याद्वादः सम्यग्वादः स्यादिति
चेत् । उच्यते । यद्यपि दर्शनानि निजनिजमतभेदेन परस्परं
विरोधं भजन्ते, तथापि तैरुच्यमानाः सन्ति तेऽपि वस्त्वंशा
ये मिथःसापेक्षाः सन्तः सम्यक्त्वोन्नततामश्नुवन्ति । तथाहि । सौगतै-
रनित्यत्वं, सांख्यैर्नित्यत्वं, नैयायिकवैशेषिकैश्च परस्परविविक्ते
नित्यानित्यत्वे सदसत्त्वे सामान्यविशेषौ च, मीमांसकैः
स्याच्छब्दवर्जं भिन्नाभिन्ने नित्यानित्यत्वे सदसदंशौ सामान्य-
विशेषौ शब्दस्य नित्यत्वं च, कैश्चित्कालस्वभावनियतिकर्म-
पुरुषादीनि जगत्कारणानि, शब्दब्रह्मज्ञानाद्वैतवादिभिश्च शब्द-
ब्रह्मज्ञानाद्वैतानि चेत्यादयो ये ये वस्त्वं[illegible] परैः स्वीक्रियन्ते, ते
सर्वेऽपि सापेक्षाः सन्तः परमार्थसत्यतां प्रतिपद्यन्ते निरपेक्षा-
स्त्वन्योन्येन निरस्यमाना नभोनलिनायन्ते इत्यलं विस्तरेण ॥

स्याद्वादस्य देशकः सम्यग्वक्ता स्याद्वाददेशकस्तम् । अनेन
वचनातिशयमचकथत् । तदेवं चत्वारोऽप्यतिशयाः शास्त्रकृता
साक्षादाविरकारि । तेषां हेतुहेतुमद्भाव एवं भाव्यः । यत एव
निःशेषदोषविजेता, तत एव सर्वज्ञः । यत एव सर्वज्ञस्तत एव
सद्भूतार्थवादी । यत एव सद्भूतार्थवादी, तत एव त्रिभुवनाभ्यर्च्य
इति । एवमतिशयचतुष्टयीप्रवरं वीरं महावीरं वर्तमानतीर्था-
धिपतिं श्रीवर्धमानापराभिधानं मत्वा मनसा तदतिशय-
चिन्तनेन वाचा तदुच्चारणेन कायेन भूमौ शिरोलगनेन च 20
प्रणिधायेत्यर्थः । एतेनादिमं मङ्गलमभिदधौ । मध्यमङ्गलं
तु "जिनेन्द्रो देवता तत्र रागद्वेषविवर्जितः" इत्यादिना

जिनमतकीर्तनेन कीर्तयिष्यति । अन्त्यमङ्गलं पुनरभिधेय-
तात्पर्यार्थः पर्यालोच्यः सुबुद्धिभिरित्यत्र सुबुद्धिशब्दसंशब्दनेन
वक्ष्यति । तस्य त्रिविधस्यापि फलमिदम् ।

तं मंगलमाईए मज्झे पज्जंतए य सत्थस्स ।
पढमं सत्थत्थाविग्घपारगमणाए निद्दिट्ठं ॥
तस्सेवाविग्घत्थं मज्झिमयं अंतिमं च तस्सेव ।
अव्वोच्छित्तिनिमित्तं सिस्सपसिस्साइवंसस्स ॥

वीरं नत्वेत्युक्तं. तत्र क्त्वाप्रत्ययस्योत्तरक्रियासापेक्षत्वान्नि-
गद्यत इति क्रियापदमत्र संबन्धनीयम् । को निगद्यते ; सर्व
10 दर्शनवाच्योऽर्थः । सर्वाणि मूलभेदापेक्षया समस्तानि यानि
दर्शनानि बौद्धादीनि तैस्तेषां वा वाच्योऽभिधेयोऽर्थो देव
तत्त्वप्रमाणादिलक्षणः संक्षेपेण समासेन निगद्यतेऽभिधीयते ।
मयेत्यनुक्तमप्यत्रार्थाद् गम्यते । एतेन साक्षादभिधेयमभ्यधात् ॥

संबन्धप्रयोजने तु सामर्थ्यादवसेये । सर्वदर्शनवाच्यदेव-
15 तत्त्वादिज्ञानमुपेयं, इदं शास्त्रं तस्योपायः, एवमुपायोपेयलक्षणः
संबन्धः सूचितो द्रष्टव्यः । प्रयोजनं तु द्वेधा, कर्तुः श्रोतुश्च ।
द्वयमपि द्वेधा, अनन्तरं परंपरं च । कर्तुरनन्तरं प्रयोजनं
सत्त्वानुग्रहः । श्रोतुरनन्तरं सर्वदर्शनाभिमतदेवतत्त्वप्रमाणादि-
ज्ञानम् । द्वयोरपि परंपरं पुनर्हेयोपादेयदर्शनानि ज्ञात्वा
20 हेयान्यपहायोपादेयं चोपादाय परंपरयानन्तचतुष्टयात्मिका
सिद्धिरिति ॥ नन्वयं शास्त्रकारः सर्वदर्शनसंबन्धीनि शास्त्राणि
सम्यक्परिज्ञायैव परोपकाराय प्रस्तुतं शास्त्रं दृब्धवान्, तत्कथ-

अनेनैवेदं नाभिदधे अमुकममुकं दर्शनं हेयममुकं चोपादेय-
मिति चेत् । उच्यते । इह सर्वदर्शनान्यभिधेयतया प्रक्रान्तानि,
तानि माध्यस्थ्येनैवाभिदधानोऽचौचितीं नातिक्रामति । इदमिदं
हेयमिदं चोपादेयमिति ब्रुवाणस्तु प्रत्युत सतां सर्वदर्शनानां
चानादेयवचनो वचनीयतामश्नुति ॥ नन्वेवं तर्ह्यस्याचार्यस्य न 5
परोपकारार्था प्रवृत्तिः । कुत एवं भाषसे । शृण्वेष दर्शयामि ।
ये केचन मादृशाः श्रोतारः स्वयमल्पबुद्धित्वेन हेयोपादेय-
दर्शनानां विभागं न जानीयुस्तेषां सर्वदर्शनसतत्त्वं निशम्य
प्रत्युतेत्थं बुद्धिर्भवेत् । सर्वदर्शनानि तावन्मिथो विरुद्धाभि-
धायीनि । तेषु च कतरत्परमार्थसदिति न परिच्छिद्यते । 10
तत्किमेतैर्दर्शनैर्दृष्टैः प्रयोजनम् । यदेव हि स्वस्मै रोचते
तदेवानुष्ठेयमिति । एवंविधाश्चाविभागज्ञा अस्मिन्काले भूयां-
सोऽनुभूयन्ते । तदेवं शास्त्रकारस्य सूरेरुपकाराय प्रवृत्तस्य
प्रत्युत प्रभूतानामपकारायापि प्रवृत्तिः प्रबभूव, ततश्च लाभ-
मिच्छतो मूलहानिरजनिष्टेति चेत् । न, शास्त्रकारस्यैवोप-
कारायैव प्रवृत्तत्वात्कस्याप्यपकारासिद्धेः, विशेषणद्वारेण हेयो-
पादेयविभागस्यापि कतिपयपदद्वयसंवेद्यस्य संसूचनात् ।
तथाहि । सद्दर्शनं जिनं नत्वा । सदित्यमाने सत्ये च
प्रशस्तार्चितसाधुष्वित्यनेकार्थनाममालावचनात् । सत्सत्यं न
पुनरसत्यं दर्शनं मतं यस्य तम् । जिनमिति विशेष्यम् । 20
चतुर्विंशतेरपि जिनानामेकतरं रागादिशत्रुजयात्सान्वयनामानं
जिनं वीतरागं नत्वा । एतेन पदद्वयेन, चतुर्विंशतेरपि जिनाना-

मन्योन्यं मतभेदो नास्तीति सूचितम्। तर्हि श्वेताम्बरदिगम्बराणां कथं मिथो मतभेद इति चेत्। उच्यते। मूलतोऽमीषां मिथो न भेदः किंतु पाश्चात्य एवेति॥ कीदृशं जिनम्। वीरम्। अः स्वयंभूः, वः कृष्णः, ईर ईश्वरः। अ, व, ई इति स्वरत्रयसंयोगे वीरिति सिद्धम्। तानीरयति तत्तत्पापासनेन प्रेरयतीत्यर्थेऽप्रत्यये वीरम्। सृष्ट्यादिकर्तृब्रह्मकृष्णेश्वरदेवताभिमतमतानां निरासकमित्यर्थः॥

तथा स्याद्वाददेशकम्। स्याद्वादं कन्ति छिन्दते "कचित्" इति कप्रत्यये स्याद्वादकाः सदसद्भूतविरोधादिदूषणोद्घोषणैः स्याद्वादस्य च्छेदिन इत्यर्थः। तेषां ईं लक्ष्मीं महिमानं वा श्यति तत्तदीयमतापासनेन तनूकरोति यत्स्याद्वाददेशम्। कै गै रै शब्दे। कै कायतीति "कचित्" इति डे कं वचनम्। स्याद्वाददेशं कं वचनं यस्य तत्। अनेन विशेषणेन प्रागुक्तानामशेषाणां बौद्धादीनां संभवेतिह्यकाणादिचरकप्रमुखाणां च मतानामुच्छेदकारि वचनमित्यर्थः। जिनं नत्वा मया सर्वदर्शनवाच्योऽर्थो निगद्यत इत्युक्तं ग्रन्थकृता। अत्र च नमनक्रिया प्राक्कालसंबन्धिनी क्त्वाप्रत्ययस्य प्राक्कालवाचकत्वात्, निगदनक्रिया तु वर्तमानजा। ते चैकेनैव ग्रन्थकृता क्रियमाणे नानुपपन्ने, अपरथा सकलव्यवहारोच्छेदप्रसङ्गात्। न चैवं भिन्नकालयोः क्रिययोरेककर्तृकता बौद्धमते संभवति, तेन क्षणिकत्वस्याभ्युपगमात्॥

ततः कश्चिद्बौद्धमतस्य प्रस्तुतग्रन्थस्यादावुल्लेखोपादेयता

स्यात् । तन्निवारणाय प्रागुक्तविशेषणसंगृहीतमपि बौद्धमत-
निरासं पुनरिह सूचितं द्रष्टव्यम् । एतेषां परदर्शनानां निर-
सनप्रकारो ग्रन्थान्तरादवसेयः । तदेवं जिनस्य विशेषद्वारेण
सत्यदर्शितां सर्वपरदर्शनेष्ववचनतां चाभिदधताखिलान्य-
दर्शनानां हेयता जैनदर्शनस्योपादेयता सूचिता मन्तव्या ।
ततो ग्रन्थकारात्सत्यासत्यदर्शनविभागानभिज्ञानामप्युपकारः
कश्चन संभवतीति, तद्विभागस्यापि सूचितत्वात् ॥ तत्रापरः
कश्चिदाह । ननु येषां सत्यासत्यमतविभागाविर्भाविके
ग्रन्थकारवचसि सम्यगास्था न भविनी, तेषां का वार्तेति ।
उच्यते । येषामास्था न भाविनी, ते द्वेधा । एके रागद्वेषा-
भावेन मध्यस्थचेतसः, अन्ये पुना रागद्वेषादिकालुष्यकलुषितत्वा-
द्दुर्बोधचेतसः । ये दुर्बोधचेतसस्तेषां सर्वज्ञेनापि सत्यासत्य-
विभागप्रतीतिः कर्तुं दुःशका, किं पुनरपरेणेति तानवगणय्य
मध्यस्थचेतस उद्दिश्य विशेषणद्वारेण सत्यासत्यमतविभागज्ञान-
स्योपायमाह । सद्दर्शनमिति । वीरं कथंभूतम् । सद्दर्शनम् ।
सन्तः साधवो मध्यस्थचेतस इति यावत्, तेषां दर्शनं
ज्ञानमर्थात्सत्यासत्यमतविभागज्ञानं यथावदाप्तत्वपरीक्षादमलेन
यस्माद्वीरात्स सद्दर्शनस्तम् । एतेन श्रीवीरस्य यथावदाप्तत्वा-
दिस्वरूपमेव परीक्षणीयमिति सूचितम् । अथवा सतां
साधूनां दर्शनं तत्त्वार्थश्रद्धानलक्षणं यस्मात्स सद्दर्शनः । अथवा
सन्तो विद्यमाना जीवादयः पदार्थास्तेषां दर्शनं यथावद-
वलोकनं यस्माद्वीरात्स सद्दर्शनस्तम् । कुत एवंविधम् । यतः

स्याद्वाददेशकं, प्रागुक्तस्याद्वादभाषकम् । एवंविधमपि कुत इत्याह । यतो जिनं रागद्वेषादिजयनशीलम् । जिनो हि वीतरागत्वादसत्यं न भाषते, तत्कारणाभावादिति भावः । शेषश्लोकव्याख्यानं प्राग्वत् ॥ एवं चात्रेदमुक्तं भवति । ये हि श्रीवीरस्य यथावदाप्तत्वादिपरीक्षां विधास्यन्ति स्याद्वादं च तत्प्रणीतं मध्यस्थतया सम्यगवलोक्य पश्चात्परमतान्यथालोकयिष्यन्ति, ते सत्यासत्यदर्शनविभागमपि स्वयमेवावभोत्स्यन्ते । किमस्माकमनस्यास्याः करणानुकरणेनेति । एतेन ग्रन्थकृता सर्वथार्थे माध्यस्थ्यमेव दर्शितं द्रष्टव्यं, सत्यासत्यदर्शनविभागपरिज्ञानो-
10 पायश्च हितबुद्ध्याभिहितोऽवगन्तव्यः, पुरातनैरपीत्थमेव सत्यासत्यदर्शनविभागस्य करणात् । तदुक्तं पूज्यश्रीहरिभद्रसूरिभिरेव लोकतत्त्वनिर्णये ।

बन्धुर्न नः स भगवान् रिपवोऽपि नान्ये
साक्षान्न दृष्टचर एकतरोऽपि [illegible]म् ।
15 श्रुत्वा वचः सुचरितं च पृथग्विशेषं
वीरं गुणातिशयलोलतया श्रिताः स्मः ॥ १ ॥
पक्षपातो न मे वीरे न द्वेषः कपिलादिषु ।
युक्तिमद्वचनं यस्य तस्य कार्यः परिग्रहः ॥ २ ॥

प्रभुश्रीहेमसूरिभिरप्युक्तं वीरस्तुतौ ।

न श्रद्धयैव त्वयि पक्षपातो न द्वेषमात्रादरुचिः परेषु ।
यथावदाप्तत्वपरीक्षया तु त्वामेव वीर प्रभुमाश्रिताः स्मः ॥ १ ॥

इति ॥

अन्यच्च सर्वदर्शनवाच्योऽर्थो वक्तुं प्रक्रान्तः, स च सङ्ख्याति-
क्रान्तः। तत्कथं स्वल्पीयसाऽनेन प्रस्तुतशास्त्रेण सोऽभिधातुं
शक्यो, जैनादन्यदर्शनानां परसमयापरनामधेयानामसंख्यातत्वात्।
तदुक्तं सम्मतिसूत्रे श्रीसिद्धसेनदिवाकरेण

> जावइया वयणपहा तावइया चेव हुंति नयवाया। 5
>
> जावइया नयवाया तावइया चेव परसमया ॥ १ ॥

व्याख्या॥ अनन्तधर्मात्मकस्य वस्तुनो य एकदेशोऽन्यदेश-
निरपेक्षस्तस्य यदवधारणं सोऽपरिशुद्धो नयः। स एव च
वचनमार्ग उच्यते। एवं चानन्तधर्मात्मकस्य सर्वस्य वस्तुन
एकदेशानामितरांशनिरपेक्षाणां यावन्तोऽवधारणप्रकाराः संभ- 10
वन्ति, तावन्तो नया अपरिशुद्धा भवन्ति। ते च वचनमार्गा
इत्युच्यन्ते॥ ततोऽयं गाथार्थः। सर्वस्मिन् वस्तुनि यावन्तो
यावत्संख्या वचनपथा वचनानामन्योन्यैकदेशवाचकानां शब्दानां
मार्गा अवधारणप्रकारा भवन्ति, तावन्त एव भवन्ति नयवादाः,
नयानां तत्तदेकदेशावधारणप्रकाराणां वादाः प्रतिपादकाः 15
शब्दप्रकाराः। यावन्तो नयवादा एकैकांशावधारणवाचक-
शब्दप्रकाराः, तावन्त एव परसमया परदर्शनानि भवन्ति,
स्वेच्छाप्रकल्पितविकल्पनिबन्धनत्वात्परसमयानां विकल्पानां
चासंख्यत्वात्। अयं भावः। यावन्तो जने तत्तदपरापरवस्त्वेक-
देशानामवधारणप्रतिपादकाः शब्दप्रकारा भवेयुस्तावन्त एव 20
परसमया भवन्ति। ततस्तेषामपरिमितत्वमेव स्वकल्पनाशिल्पि-
घटितविकल्पानामनियतत्वात् तदुत्थप्रवादानामपि तत्संख्या-

परिमाणत्वादिति । तदेवं गणनातिगाः परसमया भवन्ति । अथवा सूत्रकृताख्ये द्वितीयेऽङ्गे परप्रवादुकानां त्रीणि शतानि त्रिषष्ठ्यधिकानि परिसंख्यायन्ते । तदर्थसंग्रहगाथेयं ।

असिइसयं किरियाणं अकिरियवाईण होइ चुलसीई ।
अन्नाणिअ सत्तट्ठी वेणइयाणं च बत्तीसं ॥ १ ॥

अस्या व्याख्या ॥ अशीत्यधिकं शतम् । किरियाणंति क्रियावादिनाम् ॥ तत्र क्रियां जीवाद्यस्तित्वं वदन्तीत्येवंशीलाः क्रियावादिनः, मरीचिकुमारकपिलोलूकमाठरप्रभृतयः । ते पुनरमुनोपायेनाशीत्यधिकशतसंख्या विज्ञेयाः । जीवाजी-
10 वास्रवबन्धसंवरनिर्जरापुण्यापुण्यमोक्षाख्यान् नव पदार्थान् परिपाट्या पट्टिकादौ विरचय्य जीवपदार्थस्याधः स्वपरभेदावुपन्यसनीयौ । तयोरधो नित्यानित्यभेदौ, तयोरप्यधः कालेश्वरात्मनियतिस्वभावभेदाः पञ्च न्यसनीयाः । ततश्चैवं विकल्पाः कर्तव्याः । तद्यथा ॥

15 अस्ति जीवः स्वतो नित्यः कालत इत्येको विकल्पः । अस्य च विकल्पस्यायमर्थः । विद्यते खल्वयमात्मा स्वेन रूपेण नित्यश्च कालतः कालवादिनो मते । कालवादिनश्च नाम ते मन्तव्या ये कालकृतमेव जगत्सर्वं मन्यन्ते । तथा च ते प्राहुः । न कालमन्तरेण चम्पकाशोकसहकारादिवनस्पतिकुसुमोद्गमफल-
20 बन्धादयो हिमकणानुषक्तशीतप्रपातनक्षत्रगर्भाधानवर्षादयो वर्तुविभागसंपादिता बालकुमारयौवनवलिपलितागमादयो वावस्थाविशेषा घटन्ते, प्रतिनियतकालविभागत एव तेषा-

मुपलभ्यमानत्वात्। अन्यथा सर्वमव्यवस्थया भवेत्। न चैतद्दृष्टमिष्टं वा। अपि च। मुद्गपक्तिरपि न कालमन्तरेण लोके भवन्ती दृश्यते। किं तु कालक्रमेण। अन्यथा स्थालीन्धनादिसामग्रीसंपर्कसंभवे प्रथमसमयेऽपि तस्या भावो भवेत्। न च भवति। तस्माद्यत्कृतकं तत्सर्वं कालकृतमिति। तथा चोक्तम्।

न कालव्यतिरेकेण गर्भबालशुभादिकम्।
यत्किंचिज्जायते लोके तदसौ कारणं किल॥ १॥
किं च कालादृते नैव मुद्गपक्तिरपीक्ष्यते।
स्थाल्यादिसंनिधानेऽपि ततः कालादसौ मता॥ २॥
कालाभावे च गर्भादि सर्वं स्यादव्यवस्थया।
परेष्टहेतुसद्भावमात्रादेव तदुद्भवात्॥ ३॥
कालः पचति भूतानि कालः संहरते प्रजाः।
कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः॥ ४॥

अत्र परेष्टहेतुसद्भावमात्रादिति पराभिमतवनितापुरुषसंयोगादिरूपहेतुसद्भावमात्रादेव तदुद्भवादिति गर्भाद्युद्भवप्रसङ्गात्। तथा कालः पचति, परिपाकं नयति परिणतिं नयति भूतानि पृथिव्यादीनि। तथा कालः संहरते प्रजाः, पूर्वपर्यायात्प्रच्याव्य पर्यायान्तरेण प्रजा लोकान्स्थापयति। तथा कालः सुप्तेषु जागर्ति, काल एव सुप्तं जनमापद्भ्यो रक्षतीति भावः। तस्माद्धि स्फुटं दुरतिक्रमोऽपाकर्तुमशक्यः काल इति॥

अनेनैव प्रकारेण द्वितीयोऽपि विकल्पो नवरं कालवादिन

इति वक्तव्य ईश्वरवादिन इति वक्तव्यम्। तद्यथा। अस्ति जीवः स्वतो नित्यः ईश्वरतः। ईश्वरवादिनश्च सर्वं जगदीश्वरकृतं मन्यन्ते। ईश्वरं च सहसिद्धज्ञानवैराग्यधर्मैश्वर्यरूपचतुष्टयं प्राणिनां च स्वर्गापवर्गयोः प्रेरकमिति। तदुक्तम्।

5 ज्ञानमप्रतिघं यस्य वैराग्यं च जगत्पतेः।
ऐश्वर्यं चैव धर्मश्च सहसिद्धं चतुष्टयम् ॥ १ ॥
अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः।
ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा ॥२॥ इत्यादि।

तृतीयो विकल्प आत्मवादिनाम्। आत्मवादिनो नाम
10 पुरुष एवेदं सर्वमित्यादि प्रतिपन्नाः ॥

चतुर्थो विकल्पो नियतिवादिनाम्। ते ह्येवमाहुः। नियतिर्नाम तत्त्वान्तरमस्ति यद्वशादेते भावाः सर्वेऽपि नियतेनैव रूपेण प्रादुर्भावमश्नुवते, नान्यथा। तथाहि। यद्यदा यतो भवति तत्तदा तत एव नियतेनैव रूपेण भवदुपलभ्यते।
15 अन्यथा कार्यकारणव्यवस्था प्रतिनियतरूपव्यवस्था च न भवेत्, नियामकाभावात्। तत एवं कार्यनैयत्यतः प्रतीयमानामेनां नियतिं को नाम प्रमाणपथकुशलो बाधितुं क्षमते। मा प्रापदन्यत्रापि प्रमाणपथव्याघातप्रसङ्गः। तथा चोक्तम्

नियतेनैव रूपेण सर्वे भावा भवन्ति यत्।
20 ततो नियतिजा ह्येते तत्स्वरूपानुवेधतः ॥ १ ॥
यद्यदैव यतो यावत्तत्तदैव ततस्तथा।
नियतं जायते न्यायात् क एनां बाधितुं क्षमः ॥ २ ॥

पञ्चमो विकल्पः स्वभाववादिनाम् । स्वभाववादिनो ह्येवमाहुः । इह वस्तुनः स्वत एव परिणतिः स्वभावः । सर्वे भावाः स्वभाववशादुपजायन्ते । तथाहि । मृदः कुम्भो भवति न पटादिः । तन्तुभ्योऽपि पट उपजायते न घटादिः । एतच्च प्रतिनियतं भवनं न तथा स्वभावतामन्तरेण घटासङ्गमाटीकते । 5
तस्मात्सकलमिदं स्वभावकृतमवसेयम् । तथा चाहुः ।

कः कण्टकानां प्रकरोति तैक्ष्ण्यं
विचित्रभावं मृगपक्षिणां च ।
स्वभावतः सर्वमिदं प्रवृत्तं न
कामचारोऽस्ति कुतः प्रयत्नः ॥ १ ॥ 10

बदर्याः कण्टकस्तीक्ष्ण ऋजुरेकश्च कुञ्चितः ।
फलं च वर्तुलं तस्या वद केन विनिर्मितम् ॥२॥ इत्यादि ।

अपि च । आस्तामन्यत्कार्यजातमिह मुद्गपक्तिरपि न स्वभावमन्तरेण भवितुमर्हति । तथाहि । स्थालीन्धनकालादि सामग्रीसंभवेऽपि न कंकटुकमुद्गानां पक्तिरुपलभ्यते । 15
तस्माद्यद्भावे न भवति तत्तदन्वयव्यतिरेकानुविधायि तत्कृतमिति । स्वभावकृता मुद्गपक्तिरेष्टव्या । ततः सकलमेवेदं वस्तुजातं स्वभावहेतुकमवसेयमिति ॥

तदेवं स्वत इति पदेन लब्धाः पञ्च विकल्पाः । एवं च परत इत्यनेनापि पञ्च लभ्यन्ते । परत इति परेभ्यो व्यावृत्तेन 20
रूपेणात्मा विद्यते । यतः प्रसिद्धमेतत् । सर्वपदार्थानां परपदार्थस्वरूपापेक्षया स्वस्वरूपपरिच्छेदो यथा दीर्घत्वाद्यपेक्षया

कुडलादिपरिच्छेदः । एवमात्मनि सुखादीन्समीक्ष्य तद्व्य-
तिरिक्तबुद्धिः प्रवर्तते । अतो यदात्मनः स्वरूपं तत्परत एवा-
वधार्यते, न स्वत इति । एवं नित्यत्वापरित्यागेन दश विकल्पा
लब्धाः । एवमनित्यपदेनापि सर्वेऽपि मिलिता विंशतिः । एते
5 च जीवपदार्थेन लब्धाः । एवमजीवादिष्वष्टसु पदार्थेषु प्रत्येकं
विंशतिर्विंशतिर्विकल्पा लभ्यन्ते । ततो विंशतिर्नवगुणिता
शतमशीत्युत्तरं क्रियावादिनां भवति ॥

तथा न कस्यचित्प्रतिक्षणमवस्थितस्य पदार्थस्य क्रिया
संभवति, उत्पत्त्यनन्तरमेव विनाशादित्येवं ये वदन्ति त
10 अक्रियावादिन आत्मादिनास्तित्ववादिन इत्यर्थः । ते च
कोक्कुल काण्ठेविद्धिरोमकसुगतप्रमुखाः । तथा चाहुरेके ।

क्षणिकाः सर्वसंस्कारा अस्थिराणां कुतः क्रिया ।
भूतिर्येषां क्रिया सैव कारणं सैव चोच्यते ॥ १ ॥

एतेषां चतुरशीतिर्भवति । सा चामुनोपायेन द्रष्टव्या ।
15 पुण्यापुण्यवर्जितशेषजीवाजीवादिपदार्थसप्तकन्यासः । तस्य चाधः
प्रत्येकं स्वपरविकल्पोपादानम् । असत्त्वादात्मनो नित्यानित्यवि-
कल्पौ न स्तः । कालादीनां पञ्चानामधस्तात्षष्ठी यदृच्छा
न्यस्यते । इह यदृच्छावादिनः सर्वेऽप्यक्रियावादिनस्ततः
प्राग्यदृच्छा नोपन्यस्ता । तत एवं विकल्पाभिलापः । नास्ति
20 जीवः स्वतः कालत इत्येको विकल्पः । अयं भावः । इह
पदार्थानां लक्षणतः सत्ता निश्चीयते कार्यतो वा । न
चात्मनस्तादृशमस्ति लक्षणं, येन तत्सत्तां प्रतिपद्येमहि [illegible]ापि

कार्यमणूनामिव महीध्रादि संभवति । अतो नास्त्यात्मेति ।
एवमीश्वरादिवादिभिरपि यदृच्छापर्यन्तो विकल्पा वाच्या ।
सर्वेऽपि मिलिताः षड्विकल्पाः । अमीषां च विकल्पा-
नामर्थः प्राग्वद्भावनीयः । नवरं यदृच्छात इति यदृच्छा-
वादिनां मते । यदृच्छा ह्यनभिसंधिपूर्विकार्थप्राप्तिः ॥ अथ
के ते यदृच्छावादिनः । उच्यते । इह ये भावानां सन्ताना-
पेक्षया न प्रतिनियतं कार्यकारणभावमिच्छन्ति, किं तु
यदृच्छया, ते यदृच्छावादिनः, ते चैवमाहुः । न खलु
प्रतिनियतो वस्तूनां कार्यकारणभावस्तथा प्रमाणेनाग्रहणात् ।
तथाहि । शालूकादपि जायते शालूको । गोमयादपि
जायते शालूकः । वह्नेरपि जायते वह्निररणिकाष्ठादपि ।
धूमादपि जायते धूमोऽग्नीन्धनसंपर्कादपि । कन्दादपि जायते
कन्दलो बीजादपि । वटादयो बीजादुपजायन्ते शाखैकदेशा-
दपि । गोधूमबीजादपि जायन्ते गोधूमा वंशबीजादपि ।
ततो न प्रतिनियतः कश्चिदपि कार्यकारणभाव इति । यदृच्छातः
कश्चित्किंचिद्भवतीति प्रतिपत्तव्यम् । न ह्यन्यथा वस्तुसद्भाव
पश्यन्तोऽन्यथात्मानं प्रेक्षावन्तः परिक्लेशयन्ति । यदुक्तम् ।

अतर्कितोपस्थितमेव सर्वं
चित्रं जनानां सुखदुःखजातम् ।
काकस्य तालेन यथाभिघातो
न बुद्धिपूर्वोऽस्ति वृथाभिमानः ॥ १ ॥

इत्यादि । दृष्टमेव सर्वं जातिजरामरणादिकं लोके काक-

नास्तीभ्यामिति । तथा च स्वतः षड्विकल्पा लब्धास्तथा नास्ति परतः काल इत्येवमपि षड्विकल्पा लभ्यन्ते । सर्वेऽपि मिलिता द्वादश विकल्पा जीवपदेन लब्धाः । एवमजीवादिष्वपि षट्सु पदार्थेषु प्रत्येकं द्वादश विकल्पा लभ्यन्ते । तती द्वादशभिः सप्त गुणिताश्चतुरशीतिर्भवन्त्यक्रियावादिनां विकल्पाः ॥

तथा कुत्सितं ज्ञानमज्ञानं तदेषामस्तीत्यज्ञानिकाः । ततोऽनेकस्वरादिति मत्वर्थीय इकप्रत्ययः । अथवाज्ञानेन चरन्तीत्यज्ञानिकाः, असंचिन्त्यकृतकर्मबन्धवैफल्यादिप्रतिपत्तिलक्षणाः साकल्यसात्यमुग्रिमौदपिप्पलादबादरायणजैमिनिवसुप्रभृतयः । ते ह्येवं ब्रुवते । न ज्ञानं श्रेयः, तस्मिन् सति विरुद्धप्ररूपणायां विवादयोगतश्चित्तकालुष्यादिभावस्ततो दीर्घतरसंसारप्रवृत्तेः । यदा पुनरज्ञानमाश्रीयते तदा नाहंकारसंभवो नापि परस्योपरि चित्तकालुष्यभावः, ततो न बन्धसंभवः । अपि च । यः संचिन्त्य क्रियते कर्मबन्धः स दारुणविपाकोऽत एवावश्यवेद्यस्तस्य तीव्राध्यवसायतो निष्पन्नत्वात् । यस्तु मनोव्यापारमन्तरेण कायवाक्कर्मवृत्तिमात्रतो विधीयते, न तत्र मनसोऽभिनिवेशस्ततो नासावपश्यं वेद्यो नापि तस्य दारुणो विपाकः । केवलमतिशुष्कसुधापङ्कधवलितभित्तिगतरजोमल इव स कर्मसङ्गः स्वत एव शुभाध्यवसायपवनविक्षोभितोऽपयाति । मनसोऽभिनिवेशाभावश्चाज्ञानाभ्युपगमे समुपजायते, ज्ञाने सत्यभिनिवेशसंभवात् । तस्मादज्ञानमेव मुमुक्षुणा-

युक्तिपथप्रवृत्तेनाभ्युपगन्तव्यं, न त्वागममिति ॥ अन्यच्च । भवेदुक्तो
ज्ञानस्याभ्युपगमो, यदि ज्ञानस्य निश्चयः कर्तुं पार्यते । यावता
स एव न पार्यते । तथाहि । सर्वेऽपि दर्शनिनः परस्परं भिन्नमेव
ज्ञानं प्रतिपन्नाः । ततो न निश्चयः कर्तुं शक्यते, किमिदं सम्य-
गुतेदमिति । अथ सकलवस्तुस्तोमसाक्षात्कारिभगवद्वर्धमानो- 5
पदिष्टादुपजायते ज्ञानं तत्सम्यग्नेतरत्, असर्वज्ञमूलत्वादिति चेत् ।
सत्यमेतत्, किं तु स एव सकलवस्तुस्तोमसाक्षात्कारी, न तु
सौगतादिसंमतः सुगतादिरिति कथं प्रतीयते, तद्ग्राहकप्रमाणा
भावादिति तदवस्थः संशयः । ननु यस्य दिवः समागत्य देवाः
पूजादिकं कृतवन्तः, स एव वर्धमानः सर्वज्ञो, न शेषाः सुगता- 10
दय इति चेन्न, वर्धमानस्य चिरातीतत्वेनेदानीं तद्भावग्राहक-
प्रमाणाभावात् । संप्रदायादवसीयत इति चेत् । ननु सोऽपि
संप्रदायो धूर्तपुरुषप्रवर्तितः किं वा सत्यपुरुषप्रवर्तित इति कथ-
मवगन्तव्यं, प्रमाणाभावात् । न चाप्रमाणकं वयं प्रतिपत्तुं क्षमाः ।
मा प्रापदतिप्रसङ्गः । अन्यच्च । मायाविनः स्वयमसर्वज्ञा अपि 15
जगति स्वस्य सर्वज्ञभावं प्रचिकटयिषवस्तथाविधेन्द्रजालवशाद्द-
र्शयन्ति देवानितस्ततः संचरतः स्वस्य पूजादिकं कुर्वतः । ततो
देवागमदर्शनादपि कथं तस्य सर्वज्ञत्वनिश्चयः । तथा चाह
जैन एव स्तुतिकारः समन्तभद्रः ।

देवागमनभोयानचामरादिविभूतयः । 20
मायाविष्वपि दृश्यन्ते नातस्त्वमसि नो महान् ॥ १ ॥

भवतु वा वर्धमानस्वामी सर्वज्ञस्तथापि तस्य सत्कोऽयमा-

पारमार्थिक उपदेशः, न पुनः केनापि धूर्तेन स्वयं विरचय्य प्रवर्तित इति कथमवसेयं, अतीन्द्रिये विषये प्रमाणाभावात् । भवतु वा तेनैवायमुपदेशस्तथापि तस्यायमर्थो नान्य इति न शक्यं प्रत्येतुं, नानार्था हि शब्दा लोके प्रवर्तन्ते, तथादर्शनात् ।
5 ततोऽन्यथाप्यर्थसंभावनायां कथं विवक्षितार्थे निश्चयः । छद्मस्थेन हि परचेतोवृत्तेरप्रत्यक्षत्वात् कथमिदं ज्ञायते "एष सर्वज्ञस्या-भिप्रायोऽनेन चाभिप्रायेणायं शब्दः प्रयुक्तो नाभिप्रायान्तरेण" इति । तदेवं दीर्घतरसंसारकारणत्वात् सम्यग्निश्चयाभावाच्च न ज्ञानं श्रेयः, किं त्वज्ञानमेवेति स्थितम् ॥

10 ते चाज्ञानिकाः सप्तषष्टिसंख्या अमुनोपायेन प्रतिपत्तव्याः । इह जीवाजीवादीन् पदार्थान्नवपट्टिकादौ व्यवस्थाप्य पर्यन्त उत्पत्तिः स्थाप्यते । तेषां च जीवादीनां नवानां प्रत्येकमधः सप्त सत्त्वादयो न्यस्यन्ते । तद्यथा । सत्त्वं १, असत्त्वं २, सदसत्त्वं ३, अवाच्यत्वं ४, सदवाच्यत्वं ५, असदवाच्यत्वं ६,
15 सदसदवाच्यत्वं ७ चेति । तत्र सत्त्वं स्वरूपेण विद्यमानत्वम् । १ । असत्त्वं पररूपेणाविद्यमानत्वम् । २ । सदसत्त्वं स्वरूपपर-रूपाभ्यां विद्यमानाविद्यमानत्वम् । ३ । तथा तदेव सत्त्वमसत्त्वं च यदा युगपदेकेन शब्देन वक्तुमिष्यते तदा तद्वाचकः शब्दः कोऽपि न विद्यत इत्यवाच्यत्वम् । ४ । यदा त्वेको भागः
20 सन्नपरश्चावाच्यो युगपद्विवक्ष्यते तदा सदवाच्यत्वम् । ५ । यदा त्वेको भागोऽसन्नपरश्चावाच्यस्तदाऽसदवाच्यत्वम् । ६ । यदा त्वेको भागः सन्नपरश्चासन्नपरश्चावाच्यस्तदा सदसद-

वाच्यत्वमिति । ७ । न चैतेभ्यः सप्तभ्यो विकल्पेभ्यो ऽन्यो विकल्पः संभवति, सर्वेषामेतेष्वेवान्तर्भावात् । ततः सप्त विकल्पा उपन्यस्ताः । सप्त च विकल्पा नवभिर्गुणिता जातास्त्रिषष्टिः ॥ उत्पत्तेश्चत्वार एवाद्या विकल्पाः । तद्यथा । सत्त्वमसत्त्वं सदसत्त्वमवाच्यत्वं चेति । शेषविकल्पत्रयं तूत्पत्त्युत्तरकालं पदार्थावयवापेक्षमतोऽत्रासंभवीति नोक्तम् । एते चत्वारो विकल्पास्त्रिषष्टिमध्ये प्रक्षिप्यन्ते ततः सप्तषष्टिर्भवन्ति । ततः को जानाति जीवः सन्नित्येको विकल्पः । न कश्चिदपि जानाति, तद्ग्राहकप्रमाणाभावादिति भावः । ज्ञातेन वा किं तेन प्रयोजनं, ज्ञानस्याभिनिवेशहेतुतया परलोकप्रतिपन्थित्वात् । एवमसदादयोऽपि विकल्पा भावनीयाः । उत्पत्तिरपि किं सतोऽसतः सदसतोऽवाच्यस्य वेति को जानाति, ज्ञातेन वा न किंचिदपि प्रयोजनमिति ॥

तथा विनयेन चरन्तीति वैनयिकाः, वसिष्ठपराशरवाल्मीकिव्यासेलापुत्रसत्यदत्तप्रभृतयः । एते चानवधृतलिङ्गाचारशास्त्रा विनयप्रतिपत्तिलक्षणा वेदितव्याः । ते च द्वात्रिंशत्संख्या अनेनोपायेन द्रष्टव्याः । सुरनृपतियतिज्ञातिस्थविराधममातृपितृष्वेतेष्वष्टसु स्थानेषु कायेन मनसा वाचा दानेन च देशकालोपपन्नेन विनयः कार्य इति चत्वारः कायादयः स्थाप्यन्ते । चत्वारोऽष्टभिर्गुणिता जाता द्वात्रिंशत् ॥

एवमेतानि त्रीणि शतानि त्रिषष्ट्यधिकानि परदर्शनानां भवन्ति ॥

अथवा लोकस्वरूपेऽप्यनेके वादिनोऽनेकधा विप्रवदन्ते । तद्यथा । केचिन्नारीश्वरजं जगन्निगदन्ति । परे सोमाग्निसंभवम् । वैशेषिका द्रव्यगुणादिषड्विकल्पम् । केचित्काश्यपकृतम् । परे दक्षप्रजापतीयम् । केचिद् ब्रह्मादित्रयैकमूर्तिसृष्टम् । वैष्णवा विष्णुमयम् । पौराणिका विष्णुनाभिपद्मजब्रह्मजनितमातृजम् । त एव केचिदवर्णम् । ब्रह्मणा वर्णादिभिः सृष्टम् । केचित्कालकृतम् । परे क्षित्याद्यष्टमूर्तीश्वरकृतम् । अन्ये ब्रह्मणो मुखादिभ्यो ब्राह्मणादिजन्मकम् । सांख्याः प्रकृतिभवम् । शाक्या विज्ञप्तिमात्रम् । अन्य एकजीवात्मकम् । केचिदनेकजीवात्मकम् । परे पुरातनकर्मकृतम् । अन्ये स्वभावजम् । केचिदक्षरजातभूतोद्भूतम् । केचिदण्डप्रभवम् । आश्रमी लहेतुकम् । पूरणो नियतिजनितम् । पराशरः परिणामप्रभवम् । केचिद्यादृच्छिकम् । नैकवादिनोऽनेकस्वरूपम् । तुरुष्का गोस्वामिनामैकदिव्यपुरुषप्रभवम् । इत्यादयोऽनेकवादिनो विद्यन्ते । एषां स्वरूपं लोकतत्त्वनिर्णयात् हारिभद्राद्यातथ्यम् । एवं सर्वगतादिजीवस्वरूपे ज्योतिश्चक्रादिचारस्वरूपे च नैके विप्रतिपद्यन्ते । तथा बौद्धानामष्टादशनिकायभेदा वैभाषिकसौत्रान्तिकयोगाचारमाध्यमिकादिभेदा वा वर्तन्ते । जैमिनेश्च शिष्यकृता बहवो भेदा ।

भोंबेकः कारिकां वेत्ति तन्त्रं वेत्ति प्रभाकरः ।
वामनस्तूभयं वेत्ति न किंचिदपि रेवणः ॥ १ ॥

अपरेऽपि बहूदककुटीचरहंसपरमहंसभाट्टप्रभाकरादयो-

ऽनेकेऽन्तर्भेदाः । सांख्यानां चरकादयो भेदाः । अन्येषामपि सर्वदर्शनानां देवतत्त्वप्रमाणमुक्तिप्रभृतिस्वरूपविषये तत्तदनेकशिष्यसंतानकृतास्तत्तद्ग्रन्थकारकृता वा मतभेदा बहवो विद्यन्ते । तदेवमनेकानि दर्शनानि लोकेऽभिधीयन्ते ॥ तानि च सर्वाणि देवतातत्त्वप्रमाणादिभेदेनाचाख्यीयसा प्रस्तुतग्रन्थेनाभिधातुमशक्यानि; तत्कथमचार्येणसर्वदर्शनवाच्योऽर्थो निगद्यत इत्येवं गदितुमशक्योऽर्थो वक्तुं प्रत्यज्ञायि, गगनाङ्गुलप्रमितिरिव पारावारोभयतटसिकताकणगणनमिवात्यन्तं दुःशक्योऽयमर्थः प्रारब्ध इति चेत् । सत्यमेतद्यद्यवान्तरतद्भेदापेक्षया वक्तुमेषोऽर्थः प्रक्रान्तः स्यात् । यावता तु मूलभेदापेक्षयैव यानि सर्वाणि दर्शनानि तेषामेव वाच्योऽत्र वक्तव्यतया प्रतिज्ञातोऽस्ति नोत्तरभेदापेक्षया, ततो न कश्चन दोषः । सर्वशब्दं च व्याचक्षाणैरस्माभिः पुराप्ययमर्थो दर्शित एव, परं विस्मरणशीलेन भवता विस्मारित इति ॥

एतमेवार्थं ग्रन्थकारोऽपि साक्षादाह

> **दर्शनानि षडेवात्र मूलभेदव्यपेक्षया ।**
> **देवतातत्त्वभेदेन ज्ञातव्यानि मनीषिभिः ॥ २ ॥**

अत्र प्रस्तुतेऽस्मिन्ग्रन्थे दर्शनानि षडेव मूलभेदव्यपेक्षया मूलभेदापेक्षया मनीषिभिर्मेधाविभिर्ज्ञातव्यानि । न पुनरवान्तरतद्भेदापेक्षयाधिकानि परमार्थतस्तेषामेष्वेवान्तर्भावात् । षडेवेति सावधारणं पदम् । येन हेतुना मूलभेदानां षोढात-

मित्याशङ्क्याह । देवतातत्त्वभेदेनेति । देवा एव देवताः, स्वार्थेऽत्र तप्रत्ययः । तत्त्वानि प्रमाणैरुपपन्नाः । परमार्थसन्तोऽर्थाः । द्वन्द्वे देवतातत्त्वानि, तेषां भेदेन पार्थक्येन । ततोऽयमर्थः । देवतातत्त्वभेदेन यतो दर्शनानां षडेव मूलभेदा भवेयुस्ततः 5 षडेवात्र दर्शनानि वक्ष्यन्ते, न पुनरुत्तरभेदापेक्षयाधिकानीति । एतेन प्राक्तनश्लोके सर्वशब्दग्रहणेऽपि षडेवात्र दर्शनानि वक्तुं प्रतिज्ञातानि सन्तीति ज्ञापितं द्रष्टव्यम् ॥

अथ षण्णां दर्शनानां नामान्याह

**बौद्धं नैयायिकं सांख्यं जैनं वैशेषिकं तथा ।**
**10 जैमिनीयं च नामानि दर्शनानाममून्यहो ॥ ३ ॥**

बुद्धाः सुगतास्ते च सप्त भवन्ति । विपश्यी १ शिखी २ विश्वभूः ३ क्रकुच्छन्दः ४ काञ्चनः ५ काश्यपः ६ शाक्यसिंहश्चेति ७ । तेषामिदं दर्शनं बौद्धम् ॥ न्यायं न्यायतर्कमक्षपादर्षिप्रणीतं ग्रन्थं विदन्त्यधीयते वेति नैयायिकास्तेषामिदं 15 दर्शनं नैयायिकम् ॥ संख्यां प्रकृतिप्रभृतितत्त्वपञ्चविंशतिरूपां विदन्त्यधीयते वा सांख्याः । यद्वा तालव्यादिरपि शांख्यध्वनिरस्तीति वृद्धाम्नायः । तत्र शंखनामा कश्चिदाद्यः पुरुषविशेषस्तस्यापत्यं पौत्रादिरिति गर्गादित्वात् यञ्प्रत्यये शांख्यास्तेषामिदं दर्शनं सांख्यं शांख्यं वा ॥ जिना ऋषभादयश्चतु- 20 र्विंशतिरर्हन्तस्तेषामिदं दर्शनं जैनम् । एतेन चतुर्विंशतेरपि जिनानामेकमेव दर्शनमभाणीह, न पुनस्तेषां मिथो मतभेदः

कोऽध्यायीदित्याचेदितं भवति ॥ नित्यद्रव्यवृत्तयोऽन्त्या विशेषा एव। वैशेषिकं, विनयादिभ्य इति स्वार्थे इकण्। तद्वैशेषिकं विदन्त्यधीयते वा, तदेत्यधीत, इत्यणि वैशेषिकास्तेषामिदं वैशेषिकम् ॥ जैमिनिराद्यः पुरुषविशेषस्तस्येदं मतं जैमिनीयं मीमांसकापरनामकम् ॥ 5

तथाशब्दश्चकारश्च समुच्चयार्थौ। एवमन्यत्राप्यवसेयम्। अमूनि यदपि दर्शनानां नामानि। अहो इति शिष्यामन्त्रणे। आमन्त्रणं च शिष्याणां चित्तव्यासङ्गत्याजनेन शास्त्रश्रवणाद्याभिमुखीकरणार्थमत्रोपन्यस्तम् ॥

---

## [ अथ बौद्धमतम् ]।

अथ यथोद्देशस्तथा निर्देश इति न्यायादादौ बौद्धमतमाचष्टे।

> तत्र बौद्धमते तावद्देवता सुगतः किल।
> चतुर्णामार्यसत्यानां दुःखादीनां प्ररूपकः ॥ ४ ॥

तत्रशब्दो निर्धारणार्थः, तावच्छब्दोऽवधारणे। तेषु दर्शनेष्वपराणि तावत्तिष्ठन्तु, बौद्धमतमेव प्रथमं निर्धार्योच्यत इत्यर्थः। अत्र चादौ बौद्धदर्शनोपलक्षणार्थं सुगतशिष्याणुपदाय बौद्धानां लिङ्गवेषाचारादिस्वरूपं प्रदर्श्यते। चमरो मौञ्जं 10

कृत्तिः कमण्डलुश्च लिङ्गम् । धातुरक्तमाशुल्कं परिधानं वेषः । शौचक्रिया बह्वी ।

मृद्वी शय्या प्रातरुत्थाय पेया भक्तं मध्ये पानकं चापराह्णे ।
द्राक्षाखण्डं शर्करा चार्धरात्रे मोक्षश्चान्ते शाक्यपुत्रेण दृष्टः ॥ १ ॥

5 मणुन्नं भोयणं भुच्चा मणुन्नं सयणासणं ।
मणुन्नंमि अगारंमि मणुन्नं झायए मुणी ॥ २ ॥

भिक्षायां पात्रे पतितं सर्वं शुद्धमिति मन्वाना मांसमपि भुञ्जते । ब्रह्मचर्यादिस्वकीयक्रियायां च भृशं दृढतमा भवन्ति । इत्यादिराचारः । धर्मबुद्धसङ्घरूपं रत्नत्रयम् । तारादेवी शासने 10 विघ्ननाशिनी । विपश्याद्यः सप्त बुद्धाः कण्ठे रेखात्रयाङ्किताः सर्वज्ञा देवाः । बुद्धस्तु सुगतो धर्मधातुरित्यादीनि तन्नामानि । भिक्षुसौगतशाक्यशौद्धोदनिसुगतताथागतशून्यवादिनामानो बौद्धाः । तेषां शौद्धोदनिधर्मोत्तरार्चटधर्मकीर्तिप्रज्ञाकरदिग्नागप्रमुखा ग्रन्थकारा गुरवः ॥

15 अथ प्रस्तुतश्लोकोऽग्रतो व्याख्यायते । बौद्धमते बौद्धदर्शने सुगतो बुद्धो देवता देवः । किलेत्याप्तप्रवादे । कीदृशः सः । चतुर्णामित्यादि । आराद्दूरायाताः सर्वहेयधर्मेभ्य इत्यार्याः । पृषोदरादित्वाद्रूपनिष्पत्तिः । सतां साधूनां पदार्थानां वा यथासंभवं मुक्तिप्रापकत्वेन यथावस्थितवस्तुरूपचिन्तनेन च 20 हितानि सत्यानि । अथवा सद्भ्यो हितानि सत्यानि । आर्याणां सत्यानि आर्यसत्यानि तेषामार्यसत्यानामित्यर्थः । चतुर्णां दुःखादीनां दुःखसमुदयमार्गनिरोधलक्षणानां तत्त्वानां

प्ररूपको देशकः ॥ तत्र दुःखफलभूताः पञ्चोपादानस्कन्धा
विज्ञानादयो वक्ष्यमाणाः । त एव तृष्णासहाया हेतुभूताः ।
समुदयः समुदेति स्कन्धपञ्चकलक्षणं दुःखमस्मादिति व्युत्प-
त्तेः । निरोधहेतुर्नैरात्म्याद्याकारश्चित्तविशेषो मार्गः । मार्गण्
अन्वेषणे, मार्ग्यतेऽन्विष्यते याच्यते निरोधार्थिभिरिति चुरा- 5
दिणिजन्तत्वेनात्प्रत्ययः । निःक्लेशावस्था चित्तस्य निरोधः ।
निरुध्यते रागद्वेषोपहतचित्तलक्षणः संसारोऽनेनेति करणे
घञि, मुक्तिरित्यर्थः । दुःखादीनामित्यत्रादिशब्दोऽनेकार्थोऽपि
व्यवस्थार्थो मन्तव्यः । यदुक्तम्

> सामीप्ये च व्यवस्थायां प्रकारेऽवयवे तथा । 10
> चतुर्ष्वर्थेषु मेधावी आदिशब्दं तु लक्षयेत् ॥ १ ॥

तत्रादिशब्दः सामीप्ये यथा ग्रामादौ घोष इति, व्यव-
स्थायां यथा ब्राह्मणादयो वर्णा इति, प्रकारे यथा आढ्या
देवदत्तादय इति देवदत्तसदृशा आढ्या इत्यर्थः, अवयवे यथा
स्तम्भादयो गृहा इति । अत्र तु व्यवस्थार्थः संगच्छते । दुःख- 15
मादि प्रथमं येषां तानि तथा तेषामिति बहुव्रीहिः ॥

अथ दुःखतत्त्वं व्याचिख्यासुराह ।

**दुःखं संसारिणः स्कन्धास्ते च पञ्च प्रकीर्तिताः ।**
**विज्ञानं वेदना संज्ञा संस्कारो रूपमेव च ॥ ५ ॥**

दुःखं दुःखतत्त्वं किमित्याह । संसरन्ति स्थानात्स्थानान्तरं 20
भवाद्भवान्तरं वा गच्छन्तीत्येवंशीलाः संसारिणः स्कन्धाः ।

सचेतना अचेतना वा परमाणुप्रचयविशेषाः। ते च स्कन्धाः पञ्च प्रकीर्तिताः। वाक्यस्य सावधारणत्वात्पञ्चैवाख्याताः। न त्वपरः कश्चिदात्माख्यः स्कन्धोऽस्तीति। के ते स्कन्धा इत्याह। विज्ञानमित्यादि। विज्ञानस्कन्धः, वेदनास्कन्धः, संज्ञास्कन्धः, संस्कारस्कन्धः, रूपस्कन्धश्च। एवशब्दः पूरणार्थे, चशब्दः समुच्चये। तत्र रूपविज्ञानं रसविज्ञानमित्यादि निर्विकल्पकं विज्ञानं विशिष्टज्ञानं विज्ञानस्कन्धः। निर्विकल्पकं च ज्ञानमेवंरूपमवसेयम्।

अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकं।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥ १ ॥ इति ॥

सुखा दुःखा अदुःखसुखा चेति वेदना वेदनास्कन्धः। वेदना हि पूर्वकृतकर्मविपाकतो जायते। तथा च सुगतः कदाचिद्भिक्षामटाट्यमानः कण्टकेन चरणे विद्धः प्राह।

इत एकनवते कल्पे शक्त्या मे पुरुषो हतः।
तत्कर्मणो विपाकेन पादे विद्धोऽस्मि भिक्षवः ॥ इति ॥

संज्ञानिमित्तोद्ग्रहणात्मकः प्रत्ययः संज्ञास्कन्धः। तत्र संज्ञा गौरित्यादिका। गोत्वादिकं च तत्प्रतिपत्तिनिमित्तम्। तयोरुद्ग्रहणा योजना, तदात्मकः प्रत्ययो नामजात्यादियोजनात्मकं सविकल्पकं ज्ञानं संज्ञास्कन्ध इत्यर्थः॥ पुण्यापुण्यादिधर्मसमुदायः संस्कारस्कन्धः, यस्य संस्कारस्य प्रबोधात्पूर्वानुभूते विषये स्मरणादि समुत्पद्यते॥ पृथिवीधात्वादयो रूपादयश्च रूपस्कन्धः। न चैतेभ्यो विज्ञानादिभ्यो व्यतिरिक्तः कश्चनात्माख्यः

पदार्थः सुखदुःखेच्छाद्वेषज्ञानाधारभूतोऽध्यक्षेणावसीयते। नाप्यनु-
मानेन, तदव्यभिचारिलिङ्गग्रहणाभावात्। न च प्रत्यक्षानुमान-
व्यतिरिक्तमर्थाविसंवादि प्रमाणान्तरमस्तीति। ते च पञ्च
स्कन्धाः क्षणमात्रावस्थायिन एव वेदितव्याः, न पुनर्नित्याः
कियत्कालावस्थायिनो वा। एतच्च क्षणिकाः सर्वसंस्कारा इत्यत्र 5
दर्शयिष्यते॥ दुःखतत्त्वं पञ्चभेदतयाभिधाय दुःखतत्त्वस्य
कारणभूतं समुदयतत्त्वं व्याख्याति।

समुदेति यतो लोके रागादीनां गणोऽखिलः।
आत्मात्मीयभावाख्यः समुदयः स उदाहृतः॥ ६॥

यतो यस्मात्समुदयाल्लोके लोकमध्ये रागादीनां रागद्वे- 10
षादिदोषाणां गणः समवायोऽखिलः समस्तः समुदेति
समुद्भवति। कीदृशो गण इत्याह। आत्मात्मीयभावाख्यः।
आत्मा स्वं, आत्मीयः स्वकीयः, तयोर्भावस्तत्त्वम्। आत्मात्मीय-
भावः अयमात्मा अयं चात्मीय इत्येवं संबन्ध इत्यर्थः। उप-
लक्षणादयं परोऽयं च परकीय इत्यादि संबन्धो द्रष्टव्यः। स 15
एवाख्या नाम यस्य स आत्मात्मीयभावाख्यः। अयं भावः।
आत्मात्मीयसंबन्धेन परपरकीयादिसंबन्धेन वा यतो रागद्वेषा-
दयः समुद्भवन्ति, समुदयो नाम तत्त्वम्। बौद्धमत उदाहृतः
कथितः। अथोत्तरार्धे मकाराक्षरपूरणे छन्दोन्तरसद्भावा-
च्छन्दोभङ्गदोषो न चिन्त्यः, आर्षत्वात्समस्तशास्त्रस्य॥ 20

अथ दुःखसमुदयतत्त्वयोः संसारनिमित्तयोर्विपक्षभूते मार्ग-निरोधतत्त्वे प्रपञ्चयन्नाह ।

**क्षणिकाः सर्वसंस्कारा इत्येवं वासना यका ।**
**स मार्ग इह विज्ञेयो निरोधो मोक्ष उच्यते ॥ ७ ॥**

5 परमनिकृष्टः कालः क्षणः । तत्र भवाः क्षणिकाः क्षणमात्राव-स्थितय इत्यर्थः । सर्वे च ते संस्काराश्च पदार्थाः सर्वसंस्काराः क्षणविनश्वराः सर्वे पदार्था इत्यर्थः ॥ तथा च बौद्धा अभिदधति । स्वकारणेभ्यः पदार्थ उत्पद्यमानः किं विनश्वरस्वभाव उत्पद्यते ऽविनश्वरस्वभावो वा । यद्यविनश्वरस्वभावः, तदा तद्व्यापिकायाः
10 क्रमयौगपद्याभ्यामर्थक्रियाया अभावात्पदार्थस्यापि व्याप्यस्याभावः प्रसजति । तथाहि । यदेवार्थक्रियाकारि तदेव परमार्थसदिति । स च नित्योऽर्थोऽर्थक्रियायां प्रवर्तमानः क्रमेण वा प्रवर्तेत यौग-पद्येन वा । न तावत्क्रमेण, यतो ह्येकस्या अर्थक्रियायाः करण-काले तस्यापरार्थक्रियायाः करणस्वभावो विद्यते न वा । यदि
15 विद्यते, कुतः क्रमेण करोति । अथ सहकार्यपेक्षया इति चेत्, तेन सहकारिणा तस्य नित्यस्य कश्चिदतिशयः क्रियते न वा । यदि क्रियते, तदा किं पूर्वस्वभावपरित्यागेन क्रियते ऽपरि-त्यागेन वा । यदि परित्यागेन, ततो ऽतादवस्थ्यापत्तेर-नित्यत्वम् । अथ पूर्वस्वभावापरित्यागेन, ततस्तस्य नित्यस्य
20 तत्कृतोपकाराभावात्किं सहकार्यपेक्षया कर्तव्यम् । अथाकिंचि-त्करो ऽपि सहकारी तेन विशिष्टकार्यार्थमपेक्ष्यते । तन्न ।

अपेक्ष्यते परः कश्चिद्यदि कुर्वीत किंचन।
यदकिंचित्करं वस्तु किं केनचिदपेक्ष्यते॥१॥

अथ तस्य प्रथमार्थक्रियाकरणकाले ऽपरार्थक्रियाकरणस्वभावो न विद्यते। तथा च सति स्पष्टैव नित्यताहानिः। अथासौ नित्यो ऽर्थां यौगपद्येनार्थक्रियां कुर्यात्। तथा सति प्रथमक्षण 5 एवाशेषार्थक्रियाणां करणाद्द्वितीयक्षणे तस्याकर्तृत्वं स्यात्। तथा च सैवानित्यतापत्तिः॥ अथ तस्य तत्स्वभावत्वात् ता एवार्थक्रिया भूयो भूयो द्वितीयादिक्षणेष्वपि कुर्यात्, तदसांप्रतं कृतस्य करणाभावादिति। किं च द्वितीयादिक्षणसाध्या अप्यर्थसार्थाः प्रथमक्षण एव प्राप्नुवन्ति, तस्य तत्स्वभावत्वात्, अतत्स्वभावे च 10 तस्यानित्यत्वप्राप्तिरिति। तदेवं नित्यस्य क्रमयौगपद्याभ्यामर्थक्रियाविरहात्स्वकारणेभ्यो नित्यस्योत्पाद इति॥ अथ विनश्वरस्वभावः समुत्पद्यते। तथा च सति विनाभावादायातमस्मदुक्तमशेषपदार्थजातस्य क्षणिकत्वम्। तथा चोक्तम्।

जातिरेव हि भावानां विनाशे हेतुरिष्यते। 15
यो जातश्च न च ध्वस्तो नश्येत्पश्चात्स केन वा॥१॥

नन्वनित्यत्वे सत्यपि यस्य घटादिकस्य यदैव मुद्गरादिसामग्रीसाकल्यं तदैव तद्विनश्वरमाकल्यते न पुनः प्रतिक्षणं, ततो विनाशकारणापेक्षाणामनित्यानामपि पदार्थानां न क्षणिकत्वमिति। तदेतदनुपासितगुरोर्वचः, यतो मुद्गरादिसन्निधाने 20 सति यो ऽस्य घटादिकस्यान्त्यावस्थायां विनाशस्वभावः स स्वभावस्तस्यैवोत्पत्तिसमये विद्यते न वा। विद्यते चेत्, आपतितं तर्हि

तदुत्पत्तिसमनन्तरमेव विनश्वरत्वम्। अथ न विद्यते स स्वभाव
उत्पत्तिसमये, तर्हि कथं पश्चाच्च भवेत्। अथेदृश एव तस्य
स्वभावो यदुत कियन्तमपि कालं स्थित्वा तेन विनंष्टव्यमिति
चेत्, तर्हि मुद्गरादिसंनिधाने ऽप्येष एव तस्य स्वभावः स्यात्।
5 ततो भूयो ऽपि तेन तावत्कालं स्थेयम्। एवं च मुद्गरादि-
घातशतपाते ऽपि न विनाशो भवेत्। जातं कल्पान्तस्थायित्वं
घटादेः। तथा च जगद्व्यवहारव्यवस्था विलोपपातकपङ्किलता।
इत्यभ्युपेयमनिच्छुनापि क्षणक्षयित्वं पदार्थानाम्। प्रयोगस्त्वेवम्।
यद्विनश्वरस्वभावं तदुत्पत्तिसमये ऽपि तत्स्वरूपं, यथान्त्यक्षण-
10 वर्तिघटस्य स्वरूपम्। विनश्वरस्वभावं च रूपरसादिकमुदयत
आरभ्येति स्वभावहेतुः। तदेवं विनाशहेतोरकिंचित्करत्वात्।
स्वहेतुत एव पदार्थानामनित्यानामेवोत्पत्तेः क्षणिकत्वमवस्थित-
मिति। ननु यदि क्षणक्षयिणो भावाः, कथं तर्हि स एवाय-
मिति ज्ञानम्। उच्यते। निरन्तरसदृशापरापरक्षणनिरीक्ष-
15 चैतन्योदयादविद्यानुबन्धाच्च पूर्वक्षणप्रलयकाल एव दीपकलि-
कायां दीपकलिकान्तरमिव तत्सदृशमपरं क्षणान्तरमुदयति।
तेन समानाकारज्ञानपरंपरापरिचयचिरतरपरिणामान्निरन्तरो-
दयाच्च पूर्वक्षणानामत्यन्तोच्छेदे ऽपि स एवायमित्यध्यवसायः
प्रबलं प्रादुर्भवति। दृश्यते च यथा लूनपुनरुत्पन्नेषु नखकेश-
20 कलापादिषु स एवायमिति प्रतीतिः, तथेहापि किं न
संभाव्यते सज्जनेन। तस्मात्स्थितमिदं यत्सत्तत्क्षणिकमिति।
अत एव युक्तियुक्तमेतत् क्षणिकाः सर्वसंस्कारा इति॥ अथ

प्रस्तुतं प्रदर्श्यते । क्षणिकाः सर्वसंस्कारा इत्यत्र इतिशब्दात्प्रका-
रार्थात् नास्त्यात्मा कश्चन, किं तु ज्ञानक्षणसंताना एव सन्ती-
त्यादिकमत्र ग्राह्यते । ततो ऽयमर्थः । क्षणिकाः सर्वे पदार्थाः,
नास्त्यात्मेत्याद्याकारा एवमीदृशी यका, स्वार्थे कप्रत्यये, या
वासना पूर्वज्ञानजनिता तदुत्तरज्ञाने शक्तिः क्षणपरंपराप्राप्ता 5
भावनी प्रतीतिरित्यर्थः ॥ स मार्गो नामार्यसत्यं, इह बौद्धमते,
विज्ञेयो ऽवगन्तव्यः । सर्वपदार्थक्षणिकत्वनैरात्म्याद्याकारश्चित्त-
विशेषो मार्ग इत्यर्थः । स च निरोधस्य कारणं द्रष्टव्यः ॥ अथ
चतुर्थमार्यसत्यमाह । निरोधो निरोधनामकं तत्त्वं, मोक्षो
ऽपवर्ग, उच्यते ऽभिधीयते । चित्तस्य निःक्लेशावस्थारूपो 10
निरोधो मुक्तिर्निगद्यत इत्यर्थः । एतानि दुःखादीन्यार्यसत्यानि
चत्वारि यानि ग्रन्थकृतानन्तरमेवोक्तानि सौत्रान्तिकमतेनैवेति
विज्ञेयम् । वैभाषिकादिभेदनिर्देशं विना सामान्यतो बौद्धमतेन
तु द्वादशैव ये पदार्था भवन्ति तानपि संप्रति विवक्षुः
श्लोकेनेनमाह । 15

पञ्चेन्द्रियाणि शब्दाद्या विषयाः पञ्च मानसम् ।
धर्मायतनमेतानि द्वादशायतनानि च ॥ ८ ॥

पञ्चसंख्यानीन्द्रियाणि श्रोत्रचक्षुर्घ्राणरसनत्वग्रूपाणि ।
शब्दाद्याः शब्दरूपरसगन्धस्पर्शाः पञ्च विषया इन्द्रियगोचराः ।
मानसं चित्तं तच्च शब्दायतनमिति नामान्तरम् । धर्माः 20
सुखदुःखादयस्तेषामायतनं स्थानं शरीरमित्यर्थः । एतान्यनन्तरो-

र्माणि द्वादशसंख्यानि आयतनानि आयतनसंज्ञानि तत्त्वानि, चः समुच्चये, न केवलं प्रागुक्तानि चत्वारि॰दुःखादीन्येव किं त्वेतानि द्वादशायतनानि च भवन्ति। एतानि चायतनानि क्षणिकानि ज्ञातव्यानि। यतो बौद्धा अत्रैवमभिदधते। अर्थ-
5 क्रियालक्षणं सत्त्वं प्रागुक्तन्यायेनाक्षणिकान्निवर्तमानं क्षणिके-ष्वेवावतिष्ठते। तथा च सति सुलभं क्षणिकत्वानुमानं यत्सत्तत्क्षणिकं, यथा प्रदीपकलिकादि। सन्ति च द्वादशा-यतनानीति। अनेन चानुमानेन द्वादशायतनव्यतिरिक्तस्याप रस्यार्थस्याभावात्, द्वादशस्वायतनेष्वेव क्षणिकत्वं व्यवस्थितं
10 भवतीति ॥

तदेवं सौत्रान्तिकमतेन चत्वारि दुःखादीनि तत्त्वानि, सामान्यतो बौद्धमतेन चायतनरूपाणि द्वादश तत्त्वानि प्रतिपाद्य संप्रति प्रमाणस्य विशेषलक्षणमत्राभिधानीयम्। तच्च सामान्य-लक्षणाविनाभावीति प्रथमं प्रमाणस्य सामान्यलक्षणमुच्यते।
15 प्रमाणमविसंवादि ज्ञानमिति। अविसंवादकं ज्ञानं प्रमाणम्। अविसंवादकत्वं चार्थप्रापकत्वेन व्याप्तमर्थाप्रापकस्याविसंवादित्वा-भावात्, केशोण्डुकज्ञानवत्। अर्थप्रापकत्वं च प्रवर्तकत्वेन व्यापि, अप्रवर्तकस्यार्थाप्रापकत्वात्। तद्वदेव प्रवर्तकत्वमपि विषयोप-दर्शकत्वेन व्याप्तं। न हि ज्ञानं हस्ते गृहीत्वा पुरुषं प्रवर्तयति,
20 स्वविषयं तूपदर्शयत्प्रवर्तकमुच्यते प्रापकं चेति। स्वविषयोप-दर्शकत्वव्यतिरेकेण नान्यत्प्रापकत्वम्। तच्च शक्तिरूपम्। उक्तं च "प्रापणशक्तिः प्रामाण्यं तदेव च प्रापकत्वम्" इति ॥

स्वविषयोपदर्शके च प्रत्यक्षानुमाने एव, न ज्ञानान्तरम्। अतस्ते एव लक्षणार्हे, तयोश्च द्वयोरप्यविसंवादकत्वमस्ति लक्षणम्। प्रत्यक्षेण ह्यर्थक्रियासाधकं वस्तु दृष्टतयावगतं सत्प्रदर्शितं भवति, अनुमानेन तु दृष्टलिङ्गाव्यभिचारितया- ध्यवसितं सत्प्रदर्शितं भवतीत्यनयोः स्वविषयप्रदर्शकत्वमेव 5 प्रापकत्वम्। यद्यपि च प्रत्यक्षस्य क्षणो ग्राह्यः स च निवृत्तत्वान्न प्राप्यते, तथापि तत्संतानो ऽध्यवसेयः। प्रवृत्तौ प्राप्यत इति, संतानविषयं प्रदर्शितार्थप्रापकत्वमध्यक्षस्य प्रामाण्यम्। अनु- मानस्य तु लिङ्गदर्शने विकल्प्यः स्वाकारो ग्राह्यो न बाह्यो ऽर्थः। प्राप्यस्तु बाह्यः। स्वाकाराभेदेनाध्यवसित इति। 10 तद्विषयमस्यापि प्रदर्शितार्थप्रापकत्वं प्रामाण्यम्। तदुक्तम् "न ह्याभासमर्थं परिच्छिद्य प्रवर्तमानो ऽर्थक्रियायां विसंवाद्यते" इति। प्राप्यमाणं च वस्तु नियतदेशकालाकारं प्राप्यत इति तथाभूतवस्तुप्रदर्शकयोः प्रत्यक्षानुमानयोरेव प्रामाण्यं, न ज्ञानान्तरस्य। तेन पीतशङ्खादिविज्ञानानामपि प्रापकत्वा- 15 त्प्रामाण्यप्रसक्तिर्न भवति, तेषां प्रदर्शितार्थाप्रापकत्वात्। यद्देशकालाकारं हि वस्तु तैः प्रदर्शितं, न तत्तथा प्राप्यते। यच्च यथा प्राप्यते, न तैस्तत्तथा प्रदर्शितं, देशादिभेदेन वस्तुभेदस्य निश्चितत्वादिति न तेषां प्रदर्शितार्थप्रापकता। ततो न प्रामाण्यमपि॥ नापि प्रमाणद्वयव्यतिरिक्तं शब्दादिकं 20 प्रदर्शितार्थप्रापकत्वेन प्रमाणं, तत्प्रदर्शितस्य देशाद्यनियत- स्यार्थस्यासत्त्वेन प्राप्तुमशक्तेः। तत्प्रदर्शितार्थस्यानियतत्वं च

साक्षात्पारंपर्येण वा प्रतिपाद्यादेरर्थानुपपत्तेः। ततः स्थितं
प्रदर्शितार्थप्रापणशक्तिस्वभावमविसंवादकत्वं प्रामाण्यं द्वयोरेव,
प्रापणशक्तिश्च प्रमाणस्यार्थाविनाभावनिमित्तदर्शनपृष्ठभाविना
विकल्पेन निश्चीयते। तथाहि। प्रत्यक्षं दर्शनापरनामकं यतो
5 ऽर्थादुत्पन्नं तद्दर्शकमात्मानं स्वानुरूपावसायोत्पादनाभिमुख्य-
दर्थाविनाभावित्वं प्रापणशक्तिनिमित्तं प्रामाण्यं स्वतो निश्चिनो-
तीत्युच्यते, न पुनर्ज्ञानान्तरं तन्निश्चायकमपेक्षते ऽर्थानु-
भूताविव। ततो ऽविसंवादकत्वमेव प्रमाणलक्षणं युक्तम्। अथ
प्रमाणस्य विशेषलक्षणं विवक्षुः प्रथमं प्रमाणसंख्यां नियमयन्नाह।

10 **प्रमाणे द्वे च विज्ञेये तथा सौगतदर्शने।**
**प्रत्यक्षमनुमानं च सम्यग्ज्ञानं द्विधा यतः॥ ९॥**

तथाशब्दः प्रक्रान्तत्वापेक्षया समुच्चये, चशब्दो ऽवधारणे।
ततो ऽयमर्थः। सौगतदर्शने द्वे एव प्रमाणे विज्ञेये, न पुनरेकं
त्रीणि चत्वारि पञ्च षड्वा प्रमाणानि। एतेन चार्वाकसांख्यादि-
15 परिकल्पितं प्रमाणसंख्यान्तरं बौद्धा न मन्यन्त इत्यावेदितं
भवति। ते द्वे के प्रमाणे इत्याह। प्रत्यक्षमनुमानं च। कुतो
द्वे एव प्रमाणे इत्याह। सम्यग् अविपरीतं विसंवादरहित-
मिति यावत् ज्ञानं यतो हेतोर्द्विधा। सर्वं वाक्यं सावधारण-
मिति न्यायाद्द्विधैव न त्वेकधा त्रिधा वेति। अत्र केचिदाहुः।
20 यथात्र द्विधेत्युक्ते हि द्विधैव न त्वेकधा त्रिधा वेत्येवमन्ययोग-
व्यवच्छेदः। तथा चैत्रो धनुर्धर इत्यादिष्वपि चैत्रस्य धनुर्धर-

त्वमेव स्यान्न तु शौर्यौदार्यधैर्यादयः। तदयुक्तं यतः सर्वं वाक्यं सावधारणमिति न्याये ऽप्याशङ्कितस्यैव व्यवच्छेदः। परार्थं हि वाक्यमभिधीयते। यदेव च परेण व्यामोहादाशङ्कितं तस्यैव व्यवच्छेदः। चैत्रो धनुर्धर इत्यादौ च चैत्रस्य धनुर्धरत्वायोग एव परैराशङ्कित इति तस्यैव व्यवच्छेदो नान्य- 5
धर्मस्य। इह चार्वाकसांख्यादय ऐकध्यमनेकधा च सम्यग्ज्ञानमाहुः, अतो नियतद्वैविध्यप्रदर्शनेन एकत्वबहुत्वे सम्यग्ज्ञानस्य प्रतिक्षिपति। एवं चायमेवकारो विशेषणेन विशेष्येण क्रियया च सह भाष्यमाणः क्रमेणायोगान्ययोगात्यन्तायोगव्यवच्छेदकारित्वात्त्रिधा भवति। यद्विनयः। 10

अयोगं योगमपरैरत्यन्तायोगमेव च।
व्यवच्छिनत्ति धर्मस्य निपातो व्यतिरेचकः॥१॥

निपात एवकारः, व्यतिरेचको निवर्तकः।

विशेषणविशेष्याभ्यां क्रियया यः सहोदितः।
विवक्षातो ऽप्रयोगे ऽपि तस्यार्थो ऽयं प्रतीयते॥२॥ 15
व्यवच्छेदफलं वाक्यं यतश्चैत्रो धनुर्धरः।
पार्थो धनुर्धरो नीलं सरोजमिति वा यथा॥३॥

सम्यग्ज्ञानस्य च द्वैविध्यं प्रत्यक्षपरोक्षविषयद्वैविध्यादवसेयम्। यतो ऽत्र प्रत्यक्षविषयादन्यः सर्वो ऽपि परोक्षो विषयः। ततो विषयद्वैविध्यात्तद्ग्राहके सम्यग्ज्ञाने अपि द्वे 20
एव भवतो न न्यूनाधिके। तत्र यत्परोक्षार्थविषयं सम्यग्ज्ञानं, तत्साध्येन धर्मिणा च संबन्धादन्यतः सकाशात्सामान्येना-

कारेण परोक्षार्थस्य प्रतिपत्तिरूपं, ततस्तदनुमाने ऽन्तर्भूत-
मिति । प्रत्यक्षानुमानलक्षणे द्वे एव प्रमाणे । तथाहि । न
परोक्षो ऽर्थः साक्षात्प्रमाणेन प्रतीयते, तस्यापरोक्षत्वप्रसक्तेः ।
विकल्पमात्रस्य च स्वतन्त्रस्य राज्यादिविकल्पवदप्रमाणत्वात्,
5 परोक्षार्थप्रतिबद्धत्वाभावस्तथा तद्व्यभिचाराभावात् । न च
स्वसाध्येन विनाभूतो ऽर्थः परोक्षार्थस्य गमको, ऽतिप्रसक्तेः ;
धर्मिणा चासंबद्धस्यापि गमकत्वे प्रत्यासत्तिविप्रकर्षाभावात् स
सर्वत्र प्रतिपत्तिहेतुर्भवेत् । ततो यदेवंविधार्थप्रतिपत्तिनि-
बन्धनं प्रमाणं तदनुमानमेव, तस्यैवंलक्षणत्वात् । तथा च
10 प्रयोगः । यदप्रत्यक्षं प्रमाणं तदनुमानान्तर्भूतं, यथा लिङ्ग-
बलभावि । अप्रत्यक्षप्रमाणं च शाब्दादिकं प्रमाणान्तरत्वेना-
भ्युपगम्यमानमिति स्वभावहेतुः । यच्च यत्रान्तर्भूतं तस्य न
ततो बहिर्भावः, यथा प्रसिद्धान्तर्भवस्य कस्यचित्कस्यापि ।
अन्तर्भूतं चेदम् । प्रत्यक्षादन्यत्प्रमाणमनुमानमिति स्वभावविरु-
15 द्धोपलब्धिः, अन्तर्भावबहिर्भावयोः परस्परपरिहारस्थितलक्षण-
तया विरोधात् । आह परः । भवतु परोक्षविषयस्य प्रमाण-
स्यानुमाने ऽन्तर्भावः । अर्थान्तरविषयस्य च शब्दादेस्तत्रान्त-
र्भावो न युक्त इति चेन्न, प्रत्यक्षपरोक्षाभ्यामन्यस्य प्रमेयस्यार्थ-
स्याभावात्, प्रमेयरहितस्य च प्रमाणस्य प्रामाण्यासंभवात् ।
20 प्रमीयते ऽनेनार्थ इति प्रमाणमिति व्युत्पत्त्या, सप्रमेयस्यैव
तस्य प्रमाणत्वव्यवस्थितेः । तथाहि । यदविद्यमानप्रमेयं न
तत्प्रमाणं, यथा केशोण्डुकादिज्ञानम् । अविद्यमानप्रमेयं च

प्रमाणद्वयातिरिक्तविषयतयाभ्युपगम्यमानं प्रमाणान्तरमिति
कारणानुपलब्धिः, प्रमेयस्य साक्षात्पारंपर्येण वा प्रमाणं प्रति
कारणत्वात्। तदुक्तम्। "नाननुकृतान्वयव्यतिरेकं कारणं
नाकारणं विषयः" इति। प्रत्यक्षपरोक्षातिरिक्तं प्रमेयान्तरं
नास्तीति चाध्यक्षेणैव प्रतिपाद्यते। अध्यक्षं हि पुरःस्थितार्थ- 5
सामर्थ्यादुपजायमानं तद्गतात्मनियतप्रतिभासावभासादेव तस्या-
र्थस्य प्रत्यक्षव्यवहारकारणं भवति। तदन्यार्थात्मनां च तस्य
व्यवच्छिन्दानमन्यत्परोक्षमर्थजातं सकलं राश्यन्तरत्वेन व्यवस्था-
पयत्तृतीयप्रकाराभावं च साधयति, अध्यक्षेणाप्रतीयमानस्य
सकलस्यार्थजातस्यान्यत्वेन परोक्षतया व्यवस्थापनात्। अन्यथा 10
तस्य तदन्यार्थरूपताव्यवच्छेदे स्वीयरूपतयापि परिच्छेदो न
भवेदिति न किंचित्प्रत्यक्षेणावगतं भवेत्। प्रतिनियतस्वरूपता
हि भावानां प्रमाणतो व्यवस्थिता। अन्यथा सर्वस्य सर्व-
थोपलम्भादिप्रसङ्गतः प्रतिनियतव्यवहारोच्छेदप्रसक्तिर्भवेत्।
प्रतिनियतस्वरूपता चेन्न प्रत्यक्षावगता किमन्यद्रूपं तेन 15
तस्यावगतमिति पदार्थस्वरूपावभासिनाध्यक्षेण प्रमेयान्तराभावः
प्रतिपादित एव। अनुमानतोऽपि तदभावः प्रतीयत एव,
अन्योन्यव्यवच्छेदरूपाणामितरप्रकारव्यवच्छेदेन तदितरप्रकार-
व्यवस्थापनात्। प्रयोगश्च। यत्र यत्प्रकारव्यवच्छेदेन तदि-
तरप्रकारव्यवस्था, न तत्र प्रकारान्तरसंभवः। तद्यथा पीतादौ 20
नीलप्रकारव्यवच्छेदेनानीलप्रकारव्यवस्थायाम्। अस्ति च प्रत्यक्ष-
परोक्षयोरन्यतरप्रकारव्यवच्छेदेनेतरप्रकारव्यवस्था व्यवच्छिद्य-

मानप्रकाराविषयीकृते सर्वस्मिन्प्रमेय इति विरुद्धोपलब्धिः, तदतत्प्रकारयोः परस्परपरिहारस्थितलक्षणत्वात् । अतः प्रमेयान्तराभावाच्च प्रमाणान्तरभावः । उक्तं च ।

न प्रत्यक्षपरोक्षाभ्यां मेयस्यान्यस्य संभवः ।
5 तस्मात्प्रमेयद्वित्वेन प्रमाणद्वित्वमिष्यते ॥१॥ इति ॥

अत्र शाब्दोपमानार्थापत्त्यभावादिप्रमाणान्तराणां निराकरणं प्रत्यक्षानुमानयोरन्तर्भावनं वा यथा भवति तथा प्रमाणसमुच्चयादिबौद्धग्रन्थेभ्यः संमत्यादिग्रन्थेभ्यो वावगन्तव्यम् । ग्रन्थगौरवभयात्तु नोच्यते । ततः स्थितमेतत्, प्रत्यक्षानुमाने द्वे 10 एव प्रमाणे इति ।

अथ प्रत्यक्षलक्षणमाह

**प्रत्यक्षं कल्पनापोढमभ्रान्तं तत्र बुध्यताम् ।**
**त्रिरूपाल्लिङ्गतो लिङ्गिज्ञानं त्वनुमानसंज्ञितम् ॥१०॥**

15 तत्र तयोः प्रत्यक्षानुमानयोर्मध्ये प्रत्यक्षं बुध्यतां ज्ञायताम् । तत्र प्रतिगतमक्षमिन्द्रियं प्रत्यक्षम् । कीदृशम् । कल्पनापोढम् । शब्दसंसर्गवती प्रतीतिः कल्पना । कल्पना अपोढा अपेता यस्मात्तत्कल्पनापोढम् । ननु बहुव्रीहौ निष्ठान्तं पूर्वं निपतति । ततो ऽपोढकल्पनमिति स्यात् । न वाहिताग्न्यादिष्विति वा 20 वचनात्, आहिताग्न्यादेराकृतिगणत्वाच्च पूर्वनिपातः । कल्पनया वापोढं रहितं कल्पनापोढम् । नामजात्यादिकल्पनारहितमित्यर्थः । तत्र नामकल्पना यथा डित्थ इति । जाति-

कल्पना यथा गौरिति। आदिशब्दाद्गुणक्रियाद्रव्यपरिग्रहः। तत्र गुणकल्पना यथा शुक्ल इति। क्रियाकल्पना यथा पाचक इति। द्रव्यकल्पना यथा दण्डी शृङ्गी वेति। आभिः कल्पनाभी रहितं शब्दरहितस्वलक्षणजन्यत्वात्प्रत्यक्षम्। उक्तं च। न ह्यर्थे शब्दाः सन्ति तदात्मानो वा, येन तस्मिन् प्रतिभासमाने प्रतिभासेरन्नित्यादि। एतेन स्थिरस्थूलघटपटादिबाह्यवस्तुग्राहिणः सविकल्पकज्ञानस्य प्रत्यक्षतां निरस्यति। पुनः कीदृशं प्रत्यक्षम्। अभ्रान्तम्। अतस्मिंस्तद्ग्रहो भ्रान्तिरिति वचनात्। नासद्भूतवस्तुग्राहकं, किं तु यथावत्परस्परविविक्तक्षणक्षयिपरमाणुलक्षणस्वलक्षणपरिच्छेदकम्। अनेन निर्विकल्पकानां भ्रान्ततैमिरिकादिज्ञानानां प्रत्यक्षतां प्रतिक्षिपति॥

इदं च चतुर्धा। इन्द्रियज्ञानं, मानसं, स्वसंवेदनं, योगिज्ञानं च॥ तत्र चक्षुरादीन्द्रियपञ्चकाश्रयेणोत्पन्नं बाह्यरूपादिपञ्चविषयालम्बनं ज्ञानमिन्द्रियप्रत्यक्षम्॥ स्वविषयानन्तरं विषयसहकारिणेन्द्रियज्ञानेन समनन्तरप्रत्ययसंज्ञकेन जनितं मनोविज्ञानं मानसम्। स्वविषयस्य घटादेरिन्द्रियज्ञानविषयस्यानन्तरो विषयो द्वितीयः क्षणः, तेन सहकारिणा सह मिलित्वा इन्द्रियज्ञानेनोपादानेन समनन्तरप्रत्ययसंज्ञकेन यज्जनितं मनोविज्ञानं तन्मानसम्। समनन्तरप्रत्ययविशेषणेन योगिज्ञानस्य मानसत्वप्रसङ्गो निरस्तः। समनन्तरप्रत्ययशब्दः स्वसंतानवर्तिन्युपादाने ज्ञाने रूढ्या प्रसिद्धः। ततो भिन्नसंतानवर्तियोगिज्ञानमपेक्ष्य पृथग्जनचित्तानां समनन्तरप्रत्यय-

देशो नास्ति ॥ सर्वचित्तचैत्तानामात्मसंवेदनं स्वसंवेदनम् ।
चित्तं वस्तुमात्रग्राहकं ज्ञानम् । चित्ते भवाश्चैत्ता वस्तुविशेष-
रूपग्राहकाः सुखदुःखोपेक्षालक्षणाः । तेषामात्मा येन वेद्यते
तत्स्वसंवेदनमिति ॥ भूतार्थभावनाप्रकर्षपर्यन्तजं योगिज्ञानम् ।
5 भूतार्थः प्रमाणोपपन्नार्थः । भावना पुनः पुनश्चेतसि समारोपः ।
भूतार्थभावनाप्रकर्षपर्यन्ताज्जातं योगिज्ञानम् ॥

ननु यदि क्षणक्षयिणः परमाणव एव तात्त्विकास्तर्हि
किंनिमित्तो ऽयं घटपटशकटलकुटादिस्थूलार्थप्रतिभास इति
चेत् । निरालम्बन एवायमनादिवितथवासनाप्रवर्तितस्थूलार्थाव-
10 भासो निर्विषयत्वादाकाशकेशवत्स्वप्नज्ञानवदेति । यदुक्तम् ।

बाह्यो न विद्यते ह्यर्थो यथा बालैर्विकल्प्यते ।
वासनालुठितं चित्तमर्थाभासे प्रवर्तते ॥१॥ इति ॥
नान्यो ऽनुभाव्यो बुद्ध्यास्ति तस्या नानुभवो ऽपरः ।
ग्राह्यग्राहकवैधुर्यात्स्वयं सैव प्रकाशते ॥२॥ इति च ॥

15 ननु प्रत्यक्षेण क्षणक्षयिपरमाणुस्वरूपं स्वलक्षणं कथं संवेद्यत
इति चेत् । उच्यते । प्रत्यक्षं हि वर्तमानमेव सन्निहितं वस्तुनो
रूपं प्रत्येति, न पुनर्भाविभूतं, तदसन्निहितत्वात्तस्य । तर्हि
प्रत्यक्षानन्तरं नीलरूपतानिर्णयवत्क्षणक्षयनिर्णयः कुतो नोत्पद्यत
इति चेत् । उच्यते । तदैव स्मृतिः पूर्वदेशकालसदृशसंबन्धितां
20 वस्तुनो ऽध्यवस्यन्ती क्षणक्षयनिर्णयमुत्पद्यमानं निवारयति । अत
एव सौगतैरिदमभिधीयते । दर्शनेन क्षणिकाक्षणिकत्वसाधा-
रणस्यार्थस्य विषयीकरणात्, कुतश्चिद्भ्रमनिमित्तादक्षणिकारोपे

ऽपि न दर्शनमक्षणिकत्वे प्रमाणं, किं तु प्रत्युताप्रमाणं, विपरीताध्यवसायाक्रान्तत्वात्। क्षणिकत्वे ऽपि न तत्प्रमाणं, अनुरूपाध्यवसायाजननात्। नीलरूपे तु तथाविधनिश्चयकरणात्प्रमाणमिति। ततो युक्तमुक्तं निर्विकल्पकमभ्रान्तं च प्रत्यक्षमिति। अथ "अभ्रान्तं" इति विशेषणग्रहणादनुमाने च 5
तदग्रहणादनुमानं भ्रान्तमित्यावेदयति। तथाहि। भ्रान्तमनुमानं, सामान्यप्रतिभासित्वात्, सामान्यस्य च बहिः स्वलक्षणे व्यतिरेकाव्यतिरेकविकल्पाभ्यामपाक्रियमाणतयायोगात्, सामान्यस्य स्वलक्षणरूपतयानुमाने विकल्पनात्। अतस्मिंश्च स्वलक्षणे तद्रूपस्य स्वलक्षणतया परिच्छेदस्य भ्रान्तिलक्षणत्वात्। प्रामाण्यं 10
पुनः प्रणालिकया बहिः स्वलक्षणावसायत्वादनुमानस्य। तथाहि। नार्थं विना तादात्म्यतदुत्पत्तिरूपसंबन्धप्रतिबद्धलिङ्गसद्भावो, न तद्विना तद्विषयं ज्ञानं, न तज्ज्ञानमन्तरेण प्रागवधारितसंबन्धस्मरणं, तत्स्मरणे नानुमानमित्यर्थाव्यभिचारित्वाद्भ्रान्तमपि प्रमाणमिति संगीर्यते॥ तदुक्तम्। 15

अतस्मिंस्तद्ग्रहो भ्रान्तिरपि संबन्धतः प्रमा। इति॥

अमुमेवार्थं दृष्टान्तपूर्वकं निश्चये धर्मकीर्तिरकीर्तयत्। यथा।

मणिप्रदीपप्रभयोर्मणिबुद्ध्याभिधावतोः।
मिथ्याज्ञानाविशेषे ऽपि विशेषो ऽर्थक्रियां प्रति॥१॥
यथा तथा यथार्थत्वे ऽप्यनुमानं तदा तयोः। 20
अर्थक्रियानुरोधेन प्रमाणत्वं व्यवस्थितम्॥२॥ इति॥

तथानुमानलक्षणमाह। "त्रिरूपाल्लिङ्गतो लिङ्गिज्ञानं तद्

मानसंज्ञितं" इत्यादि। चीणि रूपाणि पचधर्मत्वादीनि यस्य, तत्त्रिरूपं, त्रिस्वभावमित्यर्थः। तस्मात्त्रिरूपाल्लिङ्गाद्धेतोः सम्यग-वगताल्लिङ्गिनः परोचस्य वस्तुनो यज्ज्ञानं, तदनुमानसंज्ञितं प्रमाणम्। अनु पश्चाल्लिङ्गग्रहणादनन्तरं परोचस्य वस्तुनो मानं
5 ज्ञानमनुमानमिति ह्यनुमानशब्दस्यार्थः॥ अत्र श्लोके चरम-पादस्य नवाचरत्वे ऽप्यार्षत्वान्न दोषः॥ इदमत्र तत्त्वम्। यथा जने छत्रादिलिङ्गैर्दृष्टैर्लिङ्गी राजा निश्चीयते, तथा त्रिरूपेण लिङ्गेन धूमादिना क्वचिदुपलब्धेन परोचः पदार्थो लिङ्गी वह्न्यादिस्तत्र सन्दिह्यायते। इदं च लिङ्गाल्लिङ्गिज्ञानमनुमान-
10 मभिधीयते॥ तच्च द्वेधा, स्वार्थं परार्थं च। यदा च त्रिरूपाल्लिङ्गात् स्वयं लिङ्गिनं साध्यं प्रतिपद्यते, तदा स्वार्थ-मनुमानम्। यदा तु परं प्रति साध्यस्य प्रतिपत्तये त्रिरूपहेत्वभिधानं, तदा परार्थमनुमानमिति। "लिङ्गिज्ञानं तु" इति। अत्र तुशब्दो विशेषणार्थं इदं विशिनष्टि। अत्र
15 यत्त्रिरूपं लिङ्गं लिङ्गिनो गमकमुक्तं, तल्लिङ्गमनुपलब्धि-स्वभावकार्यभेदात्त्रिधैव भवतीति॥ तत्रानुपलब्धिश्चतुर्धा वर्ण्यते मूलभेदापेक्षया। तद्यथा। विरुद्धोपलब्धिः, विरुद्धकार्योपलब्धिः, कारणानुपलब्धिः, स्वभावानुपलब्धिश्च। विरुद्धोपलब्धिर्यथा नात्र शीतस्पर्शो ऽग्नेः। विरुद्धकार्योपलब्धिर्यथा नात्र शीतस्पर्शो
20 धूमात्। कारणानुपलब्धिर्यथा नात्र धूमो ऽग्न्यभावात्। स्वभावानुपलब्धिर्यथा नात्र धूम उपलब्धिलक्षणप्राप्तस्यानुपलब्धेः। शेषास्तु सप्ताप्यनुपलब्धयो धर्मबिन्दुप्रभृतिशास्त्रप्रतिपादिता

एष्वेव चतुर्षु भेदेष्वन्तर्भवन्तीति प्रतिभेदरूपत्वाच्चाच पृथगभिहिताः॥

स्वभावहेतुर्यथा वृक्षो ऽयं शिंशपात्वात्। कार्यहेतुर्यथा अग्निरत्र धूमात्। एषु चानुपलब्ध्यादिषु त्रिषु हेतुषु तादात्म्यतदुत्पत्तिसंबन्धबलादविनाभावो विद्यते, आद्यान्त्ययोरनुप- 5
लब्ध्योः स्वभावहेतोश्च तादात्म्यभावात्, मध्ययोरनुपलब्ध्योः कार्यहेतोश्च तदुत्पत्तिसद्भावात्। अविनाभावश्च तादात्म्यतदुत्पत्तिभ्यामेव व्याप्तः। तादात्म्यतदुत्पत्ती चानुपलब्धिस्वभावकार्येष्वेव विद्येते, नान्यत्र। ततस्तादात्म्यतदुत्पत्तिप्रतिबन्धविकलानामनुपलब्धिस्वभावकार्यव्यतिरिक्तानामर्थानां सर्वेषां हेत्वाभासतैव 10
प्रत्येतव्या। तेन संयोग्यादिका वैशेषिकादिकल्पिता हेतवो न भवन्ति, व्यभिचारस्य संभवात्। कारणात्कार्यानुमानं तु व्यभिचारित्वेनैव नाभ्युपगम्यते। यदपि रसतः समानसमयस्य रूपादेरनुमानं सौगतैरभ्युपगतं, यदपि समर्थेन हेतुना कार्योत्पादानुमानं च, ते अपि स्वभावानुमानतयाभ्युपेते। तथाहि। 15
ईदृग्रूपान्तरोत्पादसमर्थः प्राक्तनो रूपक्षणः, ईदृग्रसजनकत्वात्, पूर्वोपलब्धरूपवदिति रूपान्तरोत्पादरूपसामर्थ्यानुमानम्। योग्येयं प्रतिबन्धविकला बीजादिसामग्री स्वकार्योत्पादने समर्थत्वात्, पूर्वदृष्टबीजादिसामग्रीवदिति योग्यतानुमानम्। अतः स्वभावहेतुप्रभवे एवैते, न पुनः कारणात्कार्यानुमाने इति॥ 20

अथानुपलब्ध्यादिभेदेन त्रिविधस्यापि लिङ्गस्य यानि त्रीणि रूपाणि भवन्ति, तान्येवाह

**रूपाणि पक्षधर्मत्वं सपक्षे विद्यमानता ।**
**विपक्षे नास्तिता हेतोरेवं त्रीणि विभाव्यताम् ॥ ११ ॥**

साध्यधर्मविशिष्टो धर्मी पक्षः, तस्य धर्मः पक्षधर्मः, तद्भावः पक्षधर्मत्वम् । पक्षशब्देन चात्र केवलो धर्म्येवाभिधीयते, अवयवे 5 समुदायोपचारात् । यदि पुनर्मुख्य एव साध्यधर्मविशिष्टो धर्मी पक्षो गृह्येत, तदानुमानं व्यर्थमेव स्यात्, साध्यस्यापि धर्मिवत्सिद्धत्वात् । ततश्च पक्षधर्मत्वं पक्षे धर्मिणि हेतोः सद्भावः । स च प्रत्यक्षतो ऽनुमानतो वा प्रतीयते । तत्र प्रत्यक्षतः कस्मिंश्चित्प्रदेशे धूमस्य दर्शनम् । अनुमानतश्च शब्दे कृतकत्वस्य 10 निश्चयः । इदमेकं रूपम् ॥ तथा समानः पक्षः सपक्षः, तस्मिन्सपक्षे दृष्टान्ते विद्यमानता हेतोरस्तित्वं सामान्येन भाव इत्यर्थः । इदं द्वितीयं रूपं, अस्य च "अन्वयः" इति द्वितीयमभिधानम् ॥ तथा विरुद्धः पक्षो विपक्षः साध्यसाधनरहितः, तस्मिन्विपक्षे नास्तिता हेतोरेकान्तेनाभावत्वम् । इदं तृतीयं 15 रूपम्, अस्य च "व्यतिरेक" इति द्वितीयमभिधानम् ॥ एतानि पक्षधर्मत्वसपक्षसत्त्वविपक्षासत्त्वलक्षणानि हेतोर्लिङ्गस्य त्रीणि रूपाणि ॥ एवंशब्दस्य इतिशब्दार्थत्वादिति विभाव्यतां हृदयेन सम्यगवगम्यताम् ॥ तत्र हेतोर्यदि पक्षधर्मत्वं रूपं न स्यात्, तदा महानसादौ दृष्टो धूमो ऽन्यत्र पर्वतादौ वह्निं गमयेत् । 20 न चैवं गमयति । ततः पक्षधर्मत्वं रूपम् ॥ तथा यदि सपक्षसत्त्वं रूपं न स्यात्, तदा साध्यसाधनयोरव्यतीतप्रतिबन्धग्राहि

पुंसो धूमो दृश्यमानो धनंजयं ज्ञापयेत्। न चैवं ज्ञापयति। अतः सपक्षसत्त्वं रूपम्॥ तथा यदि विपक्षासत्त्वं रूपं न स्यात्, तदा धूमः साध्यरहिते विपक्षे जलादावपि वह्निमनुमापयेत्। न चैवमनुमापयति। तेन विपक्षासत्त्वं रूपम्॥ अथवा। अनित्यः शब्दः, काकस्य कार्ष्ण्यत्वात्। अत्र न पक्षधर्मः। 5 अनित्यः शब्दः, श्रावणत्वात्। अत्र सपक्षविपक्षाभावादेव न सपक्षसत्त्वविपक्षासत्त्वे। अनित्यः शब्दः, प्रमेयत्वात्, घटवत्। लोहलेख्यं वज्रं, पार्थिवत्वात्, द्रुमादिवत्। सलोमा मण्डूकः, उत्प्लुत्योत्प्लुत्यगमनात्, हरिणवत्। निर्लोमा वा हरिणः, उत्प्लुत्योत्प्लुत्यगमनात्, मण्डूकवत्। एष्वनित्यत्वादिसाध्यविपर्यये 10 ऽपि हेतूनां वर्तनाच्च विपक्षासत्त्वम्॥ तत एतानि पञ्च समुदितानि रूपाणि यस्य हेतोर्भवन्ति, स एव हेतुः स्वसाध्यस्य गमको भवति, नापरः। नन्वेवंलक्षणा हेतवः कति भवन्तीति चेत्। ननूक्तं पुरापि एतल्लक्षणा अनुपलब्धिस्वभावकार्याख्यास्त्रय एव हेतव इति। एषामुदाहरणानि प्रागेवोपदर्शितानि, 15 तथापि पुनः स्वभावहेतुरुदाह्रियते। सर्वं क्षणिकमिति पक्षः। सत्त्वादिति हेतुः। अयं हेतुः सर्वस्मिन्वर्तत इति पक्षधर्मत्वम्। यत्सत्तत्क्षणिकं यथा विद्युदादीति सपक्षसत्त्वम्। यत्क्षणिकं न भवति, तत्सदपि न भवति, यथा खपुष्पम्। अत्र क्षणिकविपक्षे नित्ये क्रमयौगपद्याभ्यामर्थक्रियालक्षणस्य सत्त्वस्यानुपपत्तितो 20 नित्यात्सत्त्वस्य व्यावृत्तिरिति विपक्षासत्त्वम्। सर्वमित्युपनयः, सत्त्वात्सर्वं क्षणिकमिति निगमनम्। एवमन्यहेतुष्वपि ज्ञेयम्।

यद्यपि व्याप्त्युपेतं पक्षधर्मतोपसंहाररूपं सौगतैरनुमानमाख्यायि,
तथापि मन्दमतीन्व्युत्पादयितुं पञ्चावयवानुमानदर्शनमप्यदुष्ट-
मिति। अयमत्र श्लोकद्वयस्य तात्पर्यार्थः। पक्षधर्मान्वयव्यति-
रेकलक्षणरूपत्रयोपलक्षितानि त्रीण्येव लिङ्गानि अनुपलब्धिः,
5 स्वभावः, कार्यं चेति॥

अत्रानुक्तोऽपि विशेषः कश्चन लिख्यते। तत्र प्रमाणाद॰
भिन्नमर्थाधिगम एव प्रमाणस्य फलम्। तर्कप्रत्यभिज्ञयोरप्रा-
माण्यं, परस्परविनिर्लुठितक्षणक्षयिपरमाणुलक्षणानि स्वलक्षणानि,
प्रमाणगोचरस्तात्त्विकः। वासनारूपं कर्मपर्याया एव सन्ति न
10 द्रव्यम्। वस्तुनि केवलं स्वसत्त्वमेव न पुनः परासत्त्वमिति
सामान्येन बौद्धमतम्॥

अथवा वैभाषिक-सौत्रान्तिक-योगाचार-माध्यमिक-भेदा-
च्चतुर्धा बौद्धा भवन्ति॥ तत्रार्यसमितीयापरनामकमतमदः।
चतुःक्षणिकं वस्तु। जातिर्जनयति। स्थितिः स्थापयति। जरा
15 जर्जरयति। विनाशो विनाशयति। तथात्मापि तथाविध एव
पुद्गलसंज्ञयाभिधीयते। निराकारो बोधो ऽर्थसहभाव्येक-
सामग्र्यधीनस्तत्रार्थे प्रमाणमिति॥

सौत्रान्तिकमतं पुनरिदम्। रूपवेदनाविज्ञानसंज्ञासंस्काराः
सर्वशरीरिष्वेते पञ्च स्कन्धा विद्यन्ते, न पुनरात्मा। त एव
20 हि परलोकगामिनः। तथा च तत्सिद्धान्तः। पञ्चेमानि भिक्षवः
संज्ञामात्रं प्रतिज्ञामात्रं संवृतिमात्रं व्यवहारमात्रम्। कतमानि
पञ्च। अतीतोऽध्वा, अनागतोऽध्वा, सहेतुको विनाशः, आकाशं,

पुद्गल इति। अत्र पुद्गलशब्देन परपरिकल्पितो नित्यत्वव्यापक-
त्वादिधर्मक आत्मेति। बाह्यो ऽर्थो नित्यमप्रत्यक्ष एव ज्ञाना-
कारान्यथानुपपत्त्या तु समवगम्यते। साकारो बोधः प्रमाणम्।
तथा क्षणिकाः सर्वसंस्काराः। स्वलक्षणं परमार्थः यदाहुस्तद्वादिनः।
प्रतिक्षणं विशरारवो रूपरसगन्धस्पर्शपरमाणवो ज्ञानं चेत्येव 5
तत्त्वमिति। अन्यापोहः शब्दार्थः। तदुत्पत्तितदाकारताभ्यामर्थ-
परिच्छेदः। नैरात्म्यभावनातो ज्ञानसंतानोच्छेदो मोक्ष इति॥

योगाचारमतं त्विदम्। विज्ञानमात्रमिदं भुवनम्। नास्ति
बाह्यो ऽर्थः, ज्ञानाद्वैतस्यैव तात्त्विकत्वात्। अनेके ज्ञानसंतानाः।
साकारो बोधः प्रमाणम्। वासनापरिपाकतो नीलपीतादि- 10
प्रतिभासाः। आलयविज्ञानं हि सर्ववासनाधारभूतम्। आलय-
विज्ञानविशुद्धिरेवापवर्ग इति॥

माध्यमिकदर्शने तु शून्यमिदं, स्वप्नोपमः प्रमाणप्रमेययोः
प्रतिभासः। मुक्तिस्तु शून्यतादृष्टेः। तदर्थं शेषभावना इति।
केचित्तु माध्यमिकाः स्वच्छं ज्ञानमाहुः। तदुक्तम्। 15

अर्थो ज्ञानसमन्वितो मतिमता वैभाषिकेणोच्यते
प्रत्यक्षो न हि बाह्यवस्तुविस्तरः सौत्रान्तिकैराश्रितः।
योगाचारमतानुगैरभिमता साकारबुद्धिः परा
मन्यन्ते बत मध्यमाः कृतधियः स्वच्छां परां संविदम्॥ इति।

ज्ञानपारमिताद्या दश ग्रन्थाः। तर्कभाषा हेतुबिन्दुस- 20
टीकार्चटतर्कनाम्नी प्रमाणवार्तिकं तत्त्वसंग्रहो न्यायबिन्दुः
कमलशीलो न्यायप्रवेशकश्चेत्यादयस्तद्ग्रन्था इति॥

एवं बौद्धमतमभिधाय तदेव संचिक्षिपुरुत्तरं चाभिसंधित्सुराह

**बौद्धराद्धान्तवाच्यस्य संक्षेपोऽयं निवेदितः ।**
**नैयायिकमतस्येतः कथ्यमानो निशम्यताम् ॥ १२ ॥**

बौद्धराद्धान्तस्य सौगतसिद्धान्तस्य यद्वाच्यं तस्य संक्षेपो
5 ऽयमनन्तरोदितो निवेदितोऽभिहितः । नैयायिकमतस्य
शैवशासनस्य संक्षेपत ऊर्ध्वं कथ्यमानो निशम्यतां श्रूयताम् ॥

इति तपागणनभोंगणदिनमणिश्रीदेवसुन्दरसूरिशिष्यश्रीगुण-
रत्नसूरिविरचितायां तर्करहस्यदीपिकाभिधानायां षड्दर्शनसमु-
च्चयटीकायां बौद्धमतप्रकटनो नाम प्रथमोऽधिकारः ॥

---

# अथ द्वितीयो ऽधिकारः।

अथादौ नैयायिकानां यौगापराभिधानानां लिङ्गादिव्यक्तिरुच्यते। ते च दण्डधराः, प्रौढकौपीनपरिधानाः, कम्बलिकाप्रावृता, जटाधारिणो, भस्मोद्धूलनपरा, यज्ञोपवीतिनो, जलाधारपात्रकराः। नीरसाहाराः प्रायो वनवासिनो द्रोर्मूले तुम्बकं बिभ्राणाः। कन्दमूलफलाशिन आतिथ्यकर्मनिरताः सस्त्रीकाः, निस्त्रीकास्तेषूत्तमाः। ते च पञ्चाग्निसाधनपराः करे जटादौ च प्राणलिङ्गधराश्चापि भवन्ति। उत्तमां संयमावस्थां प्राप्तास्तु नग्ना भ्रमन्ति। एते प्रातर्दन्तपादादिशौचं विधाय शिवं ध्यायन्तो भस्मनाङ्गं त्रिस्त्रिः स्पृशन्ति। यजमानो वन्दमानः कृताञ्जलिर्वक्ति "ओं नमः शिवाय" इति। गुरुस्तथैव "शिवाय नमः" इति प्रतिवक्ति। ते च संसद्येवं वदन्ति।

शैवीं दीक्षां द्वादशाब्दीं सेवित्वा योऽपि मुञ्चति।
दासी दासोऽपि भवति सो ऽपि निर्वाणमृच्छति॥

तेषामीश्वरो देवः सर्वज्ञः सृष्टिसंहारादिकृत्। तस्य चाष्टादशावतारा अमी। नकुली १, शोष्यकौशिकः २, गार्ग्यः ३, मैत्रो ४, अकौरुषः ५, ईशानः ६, पारगार्ग्यः ७, कपिलाण्डः ८, मनुष्यकः ९, कुशिकः १०, अत्रिः ११, पिङ्गलः १२, पुष्पकः १३, बृहदार्यः १४, अगस्तिः १५, संतानः १६, राशीकरः १७,

विद्यागुरुश्च १८। एते तेषां तीर्थेशाः पूजनीयाः । एतेषां पूजाप्रणिधानविधिस्तु तदागमादवसेयः । तेषां सर्वतीर्थेषु भरटा एव पूजकाः । देवानां नमस्कारो न सम्मुखैः कार्यः । तेषु ये निर्विकारास्ते स्वमीमांसागतमिदं पद्यं दर्शयन्ति ।

5 न स्वर्धुनी न फणिनो न कपालदाम
नेन्दोः कला न गिरिजा न जटा न भस्म ।
यत्रान्यदेव च न किंचिदुपास्महे त-
द्रूपं पुराणं मुनिशीलितमीश्वरस्य ॥१॥
स एव योगिनां सेव्यो ह्यर्वाचीनस्तु भोगभाक् ।
10 स ध्यायमानो राज्यादिसुखलुब्धैर्निषेव्यते ॥२॥

उक्तं च तैः स्वयोगशास्त्रे ।

वीतरागं स्मरन्योगी वीतरागत्वमश्नुते ।
सरागं ध्यायतस्तस्य सरागत्वं तु निश्चितम् ॥३॥
येन येन हि भावेन युज्यते यन्त्रवाहकः ।
15 तेन तन्मयतां याति विश्वरूपो मणिर्यथा ॥४॥ इति ॥

एतत्सर्वं लिङ्गवेषदेवादिस्वरूपं वैशेषिकमते ऽप्यवसातव्यं, यतो नैयायिकवैशेषिकाणां हि मिथः प्रमाणतत्त्वानां संख्याभेदे सत्यप्यन्योन्यं तत्त्वानामन्तर्भावने ऽल्पीयानेव भेदो जायते । तेनैतेषां प्रायो मततुल्यता उभये ऽप्येते तपस्विनो ऽभिधीयन्ते ।
20 ते च शैवादिभेदेन चतुर्धा भवन्ति । तदुक्तम् ।

आधारभस्मकौपीनजटायज्ञोपवीतिनः ।
स्वस्वाचारादिभेदेन चतुर्धा स्युस्तपस्विनः ॥१॥

शैवाः पाशुपताश्चैव महाव्रतधरास्तथा ।
तुर्याः कालमुखा मुख्या भेदा एते तपस्विनाम् ॥२॥

तेषामन्तर्भेदा भरटभक्तलैङ्गिकतापसादयो भवन्ति । भरटादीनां व्रतग्रहणे ब्राह्मणादिवर्णनियमो नास्ति । यस्य तु शिवे भक्तिः स व्रती भरटादिर्भवेत् । परं शास्त्रेषु नैयायिकाः 5 सदा शिवभक्तत्वाच्छैवा इत्युच्यन्ते, वैशेषिकास्तु पाशुपता इति । तेन नैयायिकशासनं शैवमाख्यायते, वैशेषिकदर्शनं च पाशुपतमिति । इदं मया यथा श्रुतं यथा दृष्टं चात्राभिदधे । तत्त्वविशेषस्तु तद्ग्रन्थेभ्यो विज्ञेयः ॥

अथ पूर्वप्रतिज्ञातं नैयायिकमतसंक्षेपमेवाह । 10

**अक्षपादमते देवः सृष्टिसंहारकृच्छिवः ।**
**विभुर्नित्यैकसर्वज्ञो नित्यबुद्धिसमाश्रयः ॥ १३ ॥**

अक्षपादेनाद्येन गुरुणा यतः प्रणीतं नैयायिकमतस्य मूलसूत्रं, तेन नैयायिका आक्षपादा अभिधीयन्ते, तन्मतं चाक्षपादमतमिति । तस्मिन्नक्षपादमते शिवो महेश्वरः, सृष्टिश्चराचरस्य 15 जगतो निर्माणं, संहारस्तद्विनाशः । इमे सृष्टिसंहारौ । तावव्यवच्छिन्नशक्तिमाहात्म्येन करोतीति सृष्टिसंहारकृत् । केवलायाः सृष्टेः करणे निरन्तरोत्पाद्यमानो ऽसंख्यः प्राणिगणो भुवनत्रये ऽपि न मायादिति सृष्टिवत्संहारस्यापि करणम् । अत्र प्रयोगमेवं शैवा आहरन्ते । भूभूधरसुधाकरदिनकरमकराकरादिकं 20 बुद्धिमत्पूर्वकं, कार्यत्वात् । यद्यत्कार्यं तत्तद्बुद्धिमत्पूर्वकं, यथा घटः ।

कार्यं चेदं, तस्माद्बुद्धिमत्पूर्वकम्। यश्चास्य बुद्धिमान्कर्ता, स ईश्वर एवेत्यन्वयः। व्यतिरेके गगनम्। न चायमसिद्धो हेतुः, भूभूधरादीनां स्वस्वकारणकलापजन्यत्वेनावयवितया वा कार्यत्वस्य जगति सुप्रसिद्धत्वात्। नापि विरुद्धो ऽनैकान्तिको वा,
5 विपक्षादत्यन्तं व्यावृत्तत्वात्। नापि कालात्ययापदिष्टः, प्रत्यक्षागमाबाध्यमानसाध्यधर्मधर्मिविषये हेतोः प्रवर्तनात्। नापि प्रकरणसमः, तत्प्रतिपन्थिपदार्थस्वरूपसमर्थनप्रवणप्रत्यनुमानोदयाभावात्॥ अथ निर्बुद्धिकात्मवदशरीरत्वादेव न संभवति सृष्टिसंहारकर्तेश्वर इति प्रत्यनुमानोदयात्कथं न प्रकरणसम
10 इति चेत्। उच्यते। अत्र त्वदीयानुमाने साध्यमान ईश्वरो धर्मी त्वया प्रतीतो ऽप्रतीतो वाभिप्रेयते। अप्रतीतश्चेत्, तदा त्वत्परिकल्पितहेतोराश्रयासिद्धिदोषः प्रसज्येत। प्रतीतश्चेत्, तर्हि येन प्रमाणेन प्रतीतस्तेनैव स्वयमुद्भावितनिजतनुरपि किमिति नाभ्युपेयत इति कथमशरीरत्वम्। ततो न प्रकरण-
15 समदोषता हेतोः, अतः साधूक्तं "सृष्टिसंहारकृच्छिव" इति। तथा विभुराकाशवत्सर्वगमव्यापकः। नियतैकस्थानवर्तित्वे ह्यनियतप्रदेशवर्तिनां पदार्थानां प्रतिनियतयथावन्निर्माणानुपपत्तेः। न ह्येकस्थानस्थितः कुम्भकारो ऽपि दूरतरघटादिघटनां व्याप्रियते। तस्माद्विभुः॥ तथा नित्यैकसर्वज्ञः। नित्यश्चासावेकश्च
20 नित्यैकः स चासौ सर्वज्ञश्चेति विशेषणसमासः। तत्र नित्यो ऽप्रच्युतानुत्पन्नस्थिरैकरूपः कूटस्थः। ईश्वरस्य ह्यनित्यत्वे परापेक्षोपजनितत्वेन कृतकत्वप्राप्तिः। चोत्पत्तावपेक्षितकर-

व्यापारो हि भावः कृतक इष्यते। कृतकश्चेज्जगत्कर्ता स्यात्, तदा तस्याप्यपरेण कर्त्रा भाव्यमनित्यत्वादेव। अपरस्यापि च कर्तुरन्येन कर्त्रा भवनीयमित्यनवस्थानदी दुस्तरा स्यात्। तस्मा-न्नित्य एवाभ्युपगमनीयः॥ नित्यो ऽपि स एको ऽद्वितीयो मन्तव्यो, बहूनां हि जगत्कर्तृत्वस्वीकारे परस्परं पृथक्पृथग-न्यान्यविसदृशमतिव्यापृतत्वेनैकैकपदार्थस्य विसदृशनिर्माणे सर्व-मसमञ्जसमापद्येतेति युक्तं “एक” इति विशेषणम्॥ एको ऽपि सर्वज्ञः सर्वपदार्थानां सामस्त्येन ज्ञाता, सर्वज्ञत्वाभावे हि विधित्सितपदार्थोपयोगिजगत्प्रसृमरविप्रकीर्णपरमाणुकणप्रचयस-व्यवस्थामयीमीलनाक्षमतया याथातथ्येन पदार्थानां निर्माणं दुर्घटं भवेत्। सर्वज्ञत्वे पुनः सकलप्राणिनां संमीलितसमुचितकारण-कलापानुरूप्येण कार्यं वस्तु निर्मिमाणः स्वार्जितपुण्यपापानुमानेन च स्वर्गनरकयोः सुखदुःखोपभोगं ददानः सर्वथौचितीं नाति-वर्तेत। तथा चोक्तं तद्भक्तैः:

ज्ञानमप्रतिघं यस्य वैराग्यं च जगत्पतेः।
ऐश्वर्यं चैव धर्मश्च सहसिद्धं चतुष्टयम्॥१॥
अज्ञो जन्तुरनीशो ऽयमात्मनः सुखदुःखयोः।
ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा॥२॥

अथवा नित्यैकसर्वज्ञ इत्येकमेव विशेषणं व्याख्येयम्। नित्यं यदेको ऽद्वितीयः सर्वज्ञो नित्यैकसर्वज्ञः। एतेनानादिसर्वज्ञनी-मतमेकं निराकार्यः को ऽपि सर्वज्ञः कदापि न भवति। यत ईश्वरादन्येषां योगिनां ज्ञानाम्बरं सर्वमतीन्द्रियमर्थं ज्ञाता-

नान्यपि स्वात्मानं न जानते, ततस्ते कथं सर्वज्ञाः स्युरित्या-
वेदितं भवति । तथा नित्यबुद्धिसमाश्रयो नित्याया बुद्धेर्ज्ञानस्य
स्थानं, क्षणिकबुद्धिमतो हि पराधीनकार्यापेक्षणेन मुख्यकर्तृ-
त्वाभावादनीश्वरत्वप्रसक्तिरिति । ईदृशविशेषणविशिष्टो नैया-
5 यिकमते शिवो देवः ॥

अथ तन्मते तत्त्वानि विवरिषुः प्रथमं तेषां संख्यां नामानि
च समाख्याति ।

तत्त्वानि षोडशामुत्र प्रमाणादीनि तद्यथा ।
प्रमाणं च प्रमेयं च संशयश्च प्रयोजनम् ॥ १४ ॥
10 दृष्टान्तोऽप्यथ सिद्धान्तोऽवयवास्तर्कनिर्णयौ ।
वादो जल्पो वितण्डा च हेत्वाभासाश्छलानि च ॥१५॥
जातयो निग्रहस्थानान्येषामेवं प्ररूपणा ।
अर्थोपलब्धिहेतुः स्यात्प्रमाणं तच्चतुर्विधम् ॥ १६ ॥

त्रिभिर्विशेषकम् ॥ व्याख्या ॥ अमुत्रास्मिन्प्रक्रान्ते नैया-
15 यिकमते प्रमाणादीनि प्रमाणप्रमेयप्रभृतीनि षोडश तत्त्वानि
भवन्ति । तद्यथेत्युपदर्शने । "प्रमाणं च" इत्यादि । तत्र प्रमिति-
रर्थविज्ञानं येन जन्यते, तज्ज्ञानस्य जनकं कारणं प्रमाणम् ।
प्रमीयते ज्ञानं जन्यतेऽनेनेति प्रमाणमिति व्युत्पत्तेः । ज्ञानस्य
च जनकं द्विविधम् । अचेतनं ज्ञानं च । तत्राचेतनमिन्द्रिय-
20 तदर्थसन्निकर्षप्रदीपचित्रप्रभ्वादिकं ज्ञानस्य कारणत्वात्प्रमाणं,
ज्ञानमितरजन्मनि यद्व्याप्रियते तदपि ज्ञानजनकत्वात्प्रमाणम् ।

ज्ञानस्याजनकं तु प्रमाणस्य फलं भवेन्न पुनः प्रमाणम् १। प्रमेयं प्रमाणजन्यज्ञानेन ग्राह्यं वस्तु २। दोलायमाना प्रतीतिः संशयः। चकारास्त्रयोऽपि प्रमाणादीनामन्योन्यापेक्षया समुच्चयार्थाः ३। प्रयोजनमभीष्टं साधनीयं फलम् ४। दृष्टान्तो वादिप्रतिवादिसंमतं निदर्शनम्। अपिः समुच्चये ५। अथशब्द आनन्तर्ये। सिद्धान्तः सर्वदर्शनशास्त्रसंमतप्रभृतिः ६। अवयवाः पक्षादयोऽनुमानस्याङ्गानि ७। संदेहादूर्ध्वमन्वयधर्मचिन्तनं तर्कः स्थाणुरत्राधुना संभवतीति ८। स्थाणुरेवायमित्यवधारणं निर्णयः। द्वन्द्वे तर्कनिर्णयौ।९। गुरुणा समं तत्त्वनिर्णयार्थं वदनं वादः।१०। परेण समं जिगीषया जल्पनं जल्पः।११। अपरामृष्टवस्तुतत्त्वं मौखर्यमात्रं वितण्डा।१२। हेतुवदाभासमाना हेत्वाभासा न सम्यग्घेतव इत्यर्थः १३। परवचनविघातार्थविकल्पोपपादनानि छलानि १४। जातयोऽसम्यग्दूषणानि १५। यैरुक्तैर्वक्ता निगृह्यते, तानि निग्रहस्थानानि १६। इति। एषामनन्तरोक्तानां प्रमाणादीनामेवमित्थं प्ररूपणा स्वरूपप्रदर्शना भवति॥ तत्रादौ प्रमाणस्य स्वरूपणां चिकीर्षुः प्रथमतस्तस्य सामान्यलक्षणं संख्यां च प्राह "अर्थोपलब्धिहेतुः प्रमाणम्"। अर्थस्य ग्राह्यस्य बाह्यस्य स्तम्भकुम्भाम्भोरुहादेरान्तरस्य च ज्ञानसुखादेरुपलब्धिर्ज्ञानमर्थोपलब्धिः। व्याख्यानतो विशेषप्रतिपत्तिरिति न्यायादव्यभिचारिण्यव्यपदेश्या व्यवसायात्मिका चार्थोपलब्धिर्ग्राह्या, न तूपलब्धिमात्रम्। तस्या यो हेतुः कारणं स प्रमाणं सामस्त्येन।

अर्थोपलब्धिस्तु प्रमाणस्य फलम् । अयमत्र भावः । अव्यभि-
चारादिविशेषणविशिष्टार्थोपलब्धिजनिका सामग्री तदेकदेशो
वा चक्षुःप्रदीपज्ञानादिर्बोधरूपो ऽबोधरूपो वा साधकतम-
त्वात्प्रमाणम् । तज्जनकत्वं च तस्य प्रामाण्यम् । तज्जन्यार्थोप-
5 लब्धिः फलमिति । इन्द्रियजत्वलिङ्गजत्वादिविशेषणविशेषिता
सैवोपलब्धिर्यतः स्यात्, तदेव प्रत्यक्षादिप्रमाणस्य विशेषलक्षणं
वक्ष्यते । केवलमव्यपदेश्यमिति विशेषणं न शाब्दे संबन्धनीयं,
तस्य शब्दजन्यत्वेन व्यपदेश्यत्वात् । अथ प्रमाणस्य भेदानाह
"तच्चतुर्विधम्"। तत्प्रमाणं, चतुर्विधं चतुर्भेदम् ॥
10 अथ तच्चातुर्विध्यमेवाह ।

प्रत्यक्षमनुमानं चोपमानं शाब्दिकं तथा ।
तत्रेन्द्रियार्थसंपर्कोत्पन्नमव्यभिचारि च ॥ १७ ॥
व्यवसायात्मकं ज्ञानं व्यपदेशविवर्जितम् ।
प्रत्यक्षमनुमानं तु तत्पूर्वं त्रिविधं भवेत् ॥ १८ ॥
15 पूर्ववच्छेषवच्चैव दृष्टं सामान्यतस्तथा ।
तत्राद्यं कारणात्कार्यानुमानमिह गीयते ॥ १९ ॥

प्रत्यक्षमध्यक्षं, अनुमानं लैङ्गिकं, चकारः समुच्चयार्थः,
उपमानमुपमितिः, तथाशब्दस्य समुच्चयार्थत्वात् शाब्दिकं च
शब्दे भवं शाब्दिकमागम इत्यर्थः ॥
20 अथ प्रत्यक्षस्य लक्षणं लक्षयति । "तत्रेन्द्रियार्थ" इत्यादि ।
तत्रेति तेषु प्रमाणेषु प्रथमं प्रत्यक्षमुच्यते । अथाक्षपादप्रणीतं

सूत्रम्। "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्" इति [१, १, ४]॥

इन्द्रियं चक्षुरादिमनःपर्यन्तं, तस्यार्थः परिच्छेद्य इन्द्रियार्थं इन्द्रियविषयभूतो ऽर्थो रूपादिः, रूपादयस्तदर्था इति वचनात्। तेन सन्निकर्षः प्रत्यासत्तिरिन्द्रियस्य प्राप्तिः संबन्ध इति यावत्। स च षोढा। इन्द्रियेण सार्धं द्रव्यस्य संयोग एव १। रूपादिगुणानां संयुक्तसमवाय एव द्रव्ये समवेतत्वात् २। रूपत्वादिषु गुणसमवेतेषु संयुक्तसमवेतसमवाय एव ३। शब्दे समवाय एवाकाशस्य श्रोत्रत्वेन व्यवस्थितत्वात्, शब्दस्य तद्गुणत्वेन तत्र समवेतत्वात् ४। शब्दत्वे समवेतसमवाय एव शब्दे समवेतत्वात् ५। समवायाभावयोर्विशेषणविशेष्यभाव एव। उक्तरूपपञ्चविधसंबन्धसंबद्धेषु वस्तुषु समवायघटादिदृश्याभावयोर्विशेषणत्वं विशेष्यत्वं भवतीत्यर्थः। तद्यथा। तन्तवः पटसमवायवन्तः तन्तुषु पटसमवाय इति। घटशून्यं भूतलमिह भूतले घटो नास्तीति ६ षोढा सन्निकर्षः॥

अथ निकर्षग्रहणमेवास्तु सं-ग्रहणं व्यर्थम्। न, सं-शब्दग्रहणस्य सन्निकर्षषट्कप्रतिपादनार्थत्वात्। एतदेव सन्निकर्षषट्कं ज्ञानोत्पादे समर्थं कारणं, न संयुक्तसंयोगादिकमिति संग्रहणाल्लभ्यते। इन्द्रियार्थसन्निकर्षादुत्पन्नं जातम्। उत्पत्तिग्रहणं कारकत्वज्ञापकार्थम्। अयमत्र भावः। इन्द्रियं हि नैकट्यादर्थेन सह संबध्यते, इन्द्रियार्थसंबन्धाच्च ज्ञानमुत्पद्यते। यदुक्तम्।

आत्मा सहैति मनसा मन इन्द्रियेण
स्वार्थेन चेन्द्रियमिति क्रम एष शीघ्रः ।
योगो ऽयमेव मनसः किमगम्यमस्ति
यस्मिन् मनो व्रजति तत्र गतो ऽयमात्मा ॥

5 ज्ञानग्रहणं सुखादिनिवृत्त्यर्थं, सुखादीनामज्ञानरूपत्वात् । सुखादयो ह्याह्लादादिस्वभावा ग्राह्यतयानुभूयन्ते, ज्ञानं त्वर्थावगमस्वभावं ग्राहकतयानुभूयत इति ज्ञानसुखाद्योर्भेदो ऽध्यक्षसिद्ध एव । अव्यपदेश्यं नामकल्पनारहितं, नामकल्पनायां हि शाब्दं स्यात् । अव्यपदेश्यपदग्रहणाभावे हि व्यपदेशः शब्दस्तेनेन्द्रियार्थ-
10 सन्निकर्षेण चोभाभ्यां यदुत्पादितं ज्ञानं तदप्यध्यक्षफलं स्यात्तन्निवृत्त्यर्थमव्यपदेश्यपदोपादानम् । इदमत्र तत्त्वम् । चक्षुर्गोशब्दयोर्व्यापारे सत्ययं गौरिति विशिष्टकाले यज्ज्ञानमुपजायमानमुपलभ्यते, तच्छब्देन्द्रियोभयजन्यत्वे ऽपि प्रभूतविषयत्वेन शब्दस्य प्राधान्याच्छाब्दमिष्यते, न पुनरध्यक्षमिति ।
15 इन्द्रियजन्यस्य मरुमरीचिषूदकज्ञानस्य शुक्तिशकले कलधौतबोधादेश्च निवृत्त्यर्थमव्यभिचारिपदोपादानम् । यदतस्मिंस्तदित्युत्पद्यते तद्व्यभिचारि ज्ञानम् । तद्व्यवच्छेदेन तस्मिंस्तदिति ज्ञानमव्यभिचारि । व्यवसीयते ऽनेनेति व्यवसायो विशेष उच्यते । विशेषजनितं व्यवसायात्मकं, अथवा व्यवसायात्मकं
20 निश्चयात्मकम् । एतेन संशयज्ञानमनेकपदार्थालम्बनत्वादनिश्चयात्मकत्वाच्च प्रत्यक्षफलं न भवतीति ज्ञापितम् ॥ नन्वेवमपि ज्ञानपदमनर्थकमन्यविशेषणाभ्यां ज्ञानस्य लब्धत्वात्, न ।

धर्मिप्रतिपादनार्थत्वादस्य, ज्ञानपदोपात्तो हि धर्मीन्द्रियार्थसन्निकर्षजत्वादिभिर्विशेष्यते। अन्यथा धर्म्यभावे काव्यभिचारादीन् धर्मांस्तत्पदानि प्रतिपादयेयुः। केचित्पुनरेवं व्याचक्षते। अव्यपदेश्यं-व्यवसायात्मकमिति-पदद्वयेन निर्विकल्पकसविकल्पकभेदेन प्रत्यक्षस्य द्वैविध्यमाह, शेषाणि तु ज्ञानविशेषणानीति। 5

अत्र च सूत्रे फलस्वरूपसामग्रीविशेषणपक्षास्त्रयः संभवन्ति। तेषु स्वरूपविशेषणपक्षो न युक्तः। यथोक्तविशेषणं ज्ञानं प्रत्यक्षमिति हि तत्रार्थः स्यात्। तथा चाकारकस्य ज्ञानस्य प्रत्यक्षत्वप्रसक्तिः न चाकारकस्य प्रत्यक्षत्वं युक्तं, असाधकतमत्वात्साधकतमस्यैव च प्रमाणत्वात्। तुलासुवर्णादीनां प्रदीपादीनां 10 सन्निकर्षेन्द्रियादीनां चावबोधरूपाणामप्रत्यक्षत्वप्रसङ्गश्च। इष्यते चैषां सूत्रकृता प्रत्यक्षत्वं, तन्न स्वरूपविशेषणपक्षो युक्तः। नापि सामग्रीविशेषणपक्षः। सामग्रीविशेषणपक्षे ह्येवं सूत्रार्थः स्यात्। प्रमातृप्रमेयचक्षुरादीन्द्रियालोकादिका ज्ञानजनिका सामग्रीन्द्रियार्थसन्निकर्षोत्पन्नत्वादिविशेषणविशिष्टज्ञानजननादुपचारेणेन्द्रि- 15 यार्थसन्निकर्षोत्पन्नत्वादिविशेषणविशिष्टा सती प्रत्यक्षमिति। एवं च सामग्र्याः सूत्रोपात्तविशेषणयोगित्वं तथाविधफलजनकत्वादुपचारेणैव भवति, न तु स्वत इति। न तु युक्तस्तत्पक्षोऽपि। फलविशेषणपक्षस्तु युक्तिसंगतः। अत्र पक्षे यत इत्यध्याहार्यम्। ततोऽयमर्थः। इन्द्रियार्थसन्निकर्षोत्पन्नत्वादिविशेषणं 20 ज्ञानं यत इन्द्रियार्थसन्निकर्षादेर्भवति, स इन्द्रियार्थसन्निकर्षादिः प्रत्यक्षं प्रमाणम्। ज्ञानं तु प्रत्यक्षप्रमाणफलम्। यद्वा

तु ततो ऽपि ज्ञानाद्धानोपादानादिबुद्धय उत्पद्यन्ते, तदा ज्ञानादिबुद्ध्यपेक्षया ज्ञानं प्रमाणं हानादिबुद्धयस्तु फलं, यदा ज्ञानं प्रमाणं, तदा हानादिबुद्धयः फलमिति वचनात्। तथा चानुभवज्ञानवंशजायाः स्मृतेस्तथा चायमित्येतज्ज्ञानमिन्द्रियार्थसन्निकर्षजत्वात्प्रत्यक्षफलम्। तत्स्मृतेस्तु प्रत्यक्षता। सुखदुःखसंबन्धस्मृतेस्त्विन्द्रियार्थसन्निकर्षसहकारित्वात्तथा चायमिति सारूप्यज्ञानजनकत्वेनाध्यक्षप्रमाणता। सारूप्यज्ञानस्य च सुखसाधनो ऽयमित्यनुमानिकफलजनकत्वेनानुमानप्रमाणता। न च सुखसाधनत्वशक्तिज्ञानमिन्द्रियार्थसन्निकर्षजं, शक्तेरसन्निहितत्वात्। आत्मनो मन इन्द्रियेण सन्निकर्षे सुखादिज्ञानं फलम्। मन इन्द्रियस्य तत्सन्निकर्षस्य च प्रत्यक्षप्रमाणता। एवमन्यत्रापि यथार्हं प्रमाणफलविभागोऽवगन्तव्य इति॥ एतदेवेन्द्रियार्थसन्निकर्षादिसूत्रं ग्रन्थकारः पद्यबन्धानुलोम्येनेत्थमाह। "इन्द्रियार्थसंपर्कोत्पन्नम्" इत्यादि। अत्र संपर्कः संबन्धः। अव्यभिचारि चेत्यत्र चकारो विशेषणसमुच्चयार्थः। अव्यभिचारिकमिति पाठे तु अव्यभिचार्येवाव्यभिचारिकं स्वार्थे कप्रत्ययः। व्यपदेशो नामकल्पना। अत्रापि व्याख्यायां यत् इत्यध्याहार्यम्। भावार्थः सर्वो ऽपि प्राग्वदेवेति॥

अथ प्रत्यक्षतत्फलयोरभेदविवक्षया प्रत्यक्षस्य भेदा उच्यन्ते। प्रत्यक्षं द्वेधा, अयोगिप्रत्यक्षं योगिप्रत्यक्षं च॥ यदस्मदादीनामिन्द्रियार्थसन्निकर्षाज्ज्ञानमुत्पद्यते, तदयोगिप्रत्यक्षम्। तदपि द्विविधं निर्विकल्पकं सविकल्पकं च। तत्र वस्तुस्वरूपमात्रावभासकं

निर्विकल्पकं, यथा प्रथमाक्षसन्निपातजं ज्ञानम्। संज्ञासंज्ञि-
सम्बन्धोल्लेखेन ज्ञानोत्पत्तिनिमित्तं सविकल्पकं, यथा देवदत्तोऽयं
दण्डीत्यादि॥ योगिप्रत्यक्षं तु देशकालस्वभावविप्रकृष्टार्थग्राहकम्।
तद्द्विविधं, युक्तानां प्रत्यक्षं वियुक्तानां च। तत्र समाध्यैकाग्र्यवतां
योगधर्मेश्वरादिसहकृतादात्मान्तःकरणसंयोगादेव बाह्यार्थसंयोग- 5
निरपेक्षं यदशेषार्थग्रहणं, तद्युक्तानां प्रत्यक्षम्। एतच्च निर्वि-
कल्पकमेव भवति, विकल्पतः समाध्यैकाग्र्यानुपपत्तेः। इदं
चोत्कृष्टयोगिन एव विज्ञेयं, योगिमात्रस्य तदसंभवात्। असमा-
ध्यवस्थायां योगिनामात्ममनोबाह्येन्द्रियरूपाद्यार्थचतुष्कसंयो-
गाद्रूपादीनां, आत्ममनःश्रोत्रत्रयसंयोगाच्छब्दस्य, आत्ममनोद्वय- 10
संयोगात्सुखादीनां च यद्ग्रहणं, तद्वियुक्तानां प्रत्यक्षम्। तच्च
निर्विकल्पकं सविकल्पकं च प्रतिपत्तव्यम्। विस्तरार्थिना तु
न्यायसारटीका विलोकनीयेति॥

अथानुमानलक्षणमाह "अनुमानं तु तत्पूर्वं त्रिविधं भवेत्पूर्व-
वच्छेषवच्च" इत्यादि। अत्र चैवशब्दौ पूर्ववदादीनामर्थबाहुल्य- 15
सूचकौ। तथाशब्दश्चकारार्थः समुच्चये। शेषं तु सूत्रं व्याख्या-
स्यते, सूत्रं त्विदं "तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत्सामा-
न्यतोदृष्टं च" इति। एके व्याख्यान्ति। अत्रैकस्य पूर्वकशब्दस्य
सामान्यश्रुत्या लुप्तनिर्देशो द्रष्टव्यः। तत्पूर्वकमित्यत्र तच्छब्देन
प्रत्यक्षं प्रमाणमभिसंबध्यते। तत्पूर्वकं प्रत्यक्षफलं लिङ्गज्ञान- 20
मित्यर्थः। तत्पूर्वकपूर्वकं लिङ्गिज्ञानम्। अयमत्र भावः। प्रत्यक्षा-
द्धूमादिज्ञानमुत्पद्यते, धूमादिज्ञानाच्च वह्न्यादिज्ञानमिति।

इन्द्रियार्थसंनिकर्षोत्पन्नत्ववर्जाणि च ज्ञानादिविशेषणानि प्रत्यक्ष-
सूत्रादत्रापि संबन्धनीयानि। एषां च व्यवच्छेद्यानि प्रागुक्तानु-
सारेण स्वयं परिभाव्यानि। तथा द्वितीयलिङ्गदर्शनपूर्विकाया
अविनाभावसंबन्धस्मृतेस्तत्पूर्वकपूर्वकत्वात्तज्जनकस्यानुमानत्वनिवृ-
5 त्त्यर्थमर्थोपलब्धिग्रहणं कार्यं, स्मृतेस्त्वर्थं विनापि भावात्। ततो
ऽयमर्थः। अर्थोपलब्धिरूपमव्यभिचरितमव्यपदेश्यं व्यवसायात्मकं
ज्ञानं तत्पूर्वकपूर्वकं यतो लिङ्गादेः समुपजायते तदनुमान-
मिति १। तथा ते द्वे प्रत्यक्षे लिङ्गलिङ्गिसंबन्धदर्शनं लिङ्ग-
दर्शनं च पूर्वं यस्य तत्तत्पूर्वकमिति विग्रहविशेषाश्रयणादनु-
10 मानस्याध्यक्षफलद्वयपूर्वकत्वं ज्ञापितं द्रष्टव्यम् २। तथा तानि
प्रत्यक्षादिसर्वप्रमाणानि पूर्वं यस्य तत्तत्पूर्वकमिति विग्रहविशे-
षाश्रयणेन सर्वप्रमाणपूर्वकत्वमप्यनुमानस्य लभ्यते। न च तेषां
पूर्वमप्रकृतत्वात्कथं तच्छब्देन परामर्श इति प्रेर्यम्। यतः साक्षा-
दप्रकृतत्वेऽपि प्रत्यक्षसूत्रे व्यवच्छेद्यत्वेन प्रकृतत्वादिति। अस्यां
15 व्याख्यायां नाव्याप्त्यादिदोषः कस्यापि। ये तु पूर्वशब्दस्यैकस्य
लुप्तस्य निर्देशं नाभ्युपगच्छन्ति, तेषां प्रत्यक्षफलेऽनुमानत्वप्रसक्तिः,
तत्फलस्य प्रत्यक्षप्रमाणपूर्वकत्वात्। अथाकारकस्याप्रमाणत्वात्कार-
कत्वं लभ्यते। ततोऽयमर्थः। अव्यभिचारिताव्यपदेश्यव्यवसा-
यात्मिकार्थोपलब्धिजनकमेवाध्यक्षफलं लिङ्गज्ञानमनुमानमिति
20 चेत्। उच्यते। एवमपि विशिष्टज्ञानमेवानुमानं प्रसज्यते। न
च ज्ञानस्यैवानुमानत्वं स्मृत्यनुमानागमसंशयप्रतिभास्वप्नज्ञानोहाः
सुखादिप्रत्यक्षमिच्छादयश्च मनसो लिङ्गानीति वचनात्सर्वस्य

बोधाबोधरूपस्य विशिष्टफलजनकत्वानुमानत्वादित्यव्याप्तिलक्षण-
दोषः। अतोऽर्थोपलब्धिरव्यभिचारादिविशेषणविशिष्टा तत्पूर्वक-
पूर्विका यतस्तदनुमानमित्येव व्याख्यानं युक्तिमत्। नन्वत्रापि
त्रिविधग्रहणमनर्थकमिति चेत्। न। अनुमानविभागार्थत्वात्।
पूर्ववदादिग्रहणं च स्वभावादिविषयप्रतिषेधेन पूर्ववदादिविषय- 5
ज्ञापनार्थम्। पूर्ववदाद्येव त्रिविधविभागेन विवक्षितं, न स्वभा-
वादिकमिति प्रथमं व्याख्यानम्॥ अपरे त्वेवं सूत्रं व्याचक्षते।
तत्पूर्वकं प्रत्यक्षपूर्वकं त्रिविधमिति, त्रिभेदमनुमानम्। के पुन-
र्भेदा इत्याह। पूर्ववदित्यादि। पूर्वशब्देनान्वयो व्यपदिश्यते,
व्यतिरेकात्प्रागवसीयमानत्वात्। पूर्वोऽन्वयः, स एवास्ति यस्य 10
तत्पूर्ववत्केवलान्वय्यनुमानम् १। शेषो व्यतिरेकः, स एवास्ति
यस्य तच्छेषवत्, केवलव्यतिरेकि च २। सामान्येनान्वय-
व्यतिरेकयोः साधनाङ्गयोर्यद्दृष्टं तत्सामान्यतोदृष्टमन्वयव्यतिरेकि
चेति ३॥ अथवा त्रिविधमिति त्रिरूपम्। कानि त्रीणि
रूपाणीत्याह। पूर्ववदित्यादि। पूर्वमुपादीयमानत्वात्पूर्वः पक्षः 15
सोऽस्यास्तीति पूर्ववत्पक्षधर्मत्वम्। शेष उपयुक्तादन्यत्वात्साधर्म्य-
दृष्टान्तः सोऽस्यास्तीति शेषवत्सपक्षे सत्त्वम्। सामान्यतोदृष्टमिति
विपक्षे मनागपि यन्न दृष्टं विपक्षे सर्वथासत्त्वं तृतीयं रूपम्।
चशब्दात्प्रत्यक्षागमाविरुद्धत्वासत्प्रतिपक्षत्वरूपद्वयं च। एवं च पञ्च-
रूपलिङ्गालम्बनं यत्तत्पूर्वकं तदन्वयव्यतिरेक्यनुमानम्। विपक्षा- 20
सत्त्वसपक्षसत्त्वयोरन्यतररूपस्यानभिसंबन्धात्तु चतूरूपलिङ्गालम्बनं
केवलान्वयि केवलव्यतिरेकि चानुमानम्। तत्राद्यमनित्यः शब्दः,

कार्यत्वात्, घटादिवदाकाशादिवच्चेत्यन्वयव्यतिरेकी हेतुः। १।
अदृष्टादीनि कस्यचित्प्रत्यक्षाणि प्रमेयत्वात्करतलादिवदित्यत्र
कस्यचित्प्रत्यक्षत्वे साध्ये प्रत्यक्षस्यापि वस्तुनो विपक्षस्याभावादेव
केवलान्वयी। २। सर्ववित्कर्तृपूर्वकं सर्वं कार्यं, कादाचित्कत्वात्।
5 यत्सर्ववित्कर्तृपूर्वकं न भवति, तन्न कादाचित्कं, यथाकाशादि।
अत्र सर्वस्य कार्यस्य पक्षीकृतत्वादेव सपक्षाभावात्केवलव्यतिरेकी।
प्रसङ्गद्वारेण वा केवलव्यतिरेकी। यथा नेदं निरात्मकं जीव-
च्छरीरमप्राणादिमत्त्वप्रसङ्गाल्लोष्टवदिति प्रसङ्गः। प्रयोगस्त्वि-
त्थम्। इदं जीवच्छरीरं सात्मकं, प्राणादिमत्त्वात्। यन्न
10 सात्मकं तन्न प्राणादिमद्यथा लोष्टमिति प्रसङ्गपूर्वकः केवल-
व्यतिरेकीति ३। एवमनुमानस्य भेदान् स्वरूपं च व्याख्याय
विषयस्य त्रैविध्यप्रतिपादनायैवमाह। अथवा तत्पूर्वकमनुमानं
त्रिविधं त्रिप्रकारं। के पुनस्त्रयः प्रकारा इत्याह। पूर्ववदि-
त्यादि। पूर्वं कारणं विद्यते यत्रानुमाने तत्पूर्ववत्, यत्र कार-
15 णेन कार्यमनुमीयते यथा विशिष्टमेघोन्नत्या भविष्यति वृष्टि-
रिति। अत्र कारण-शब्देन कारणधर्म उन्नतत्वादिर्ग्राह्यः।
प्रयोगस्त्वेवम्। अमी मेघा वृष्ट्युत्पादकाः, गम्भीरगर्जितत्वे-
ऽचिरप्रभावत्त्वे च सत्युन्नतत्वात्। य एवं ते वृष्ट्युत्पादका यथा
वृष्ट्युत्पादकपूर्वमेघास्तथा चामी। तस्मात्तथा। ननून्नतत्वादि-
20 धर्मयुक्तानामपि मेघानां वृष्ट्यजनकत्वदर्शनात्, कथमैकान्तिकं
कारणात्कार्यानुमानमिति चेत्। न। विशिष्टस्योन्नतत्वादेर्धर्मस्य
समकालेन विवक्षितत्वात्। न च तस्य विशेषो नासर्वज्ञेन निश्चेतुं

पार्थिव इति वक्तुं शक्यं, सर्वानुमानोच्छेदप्रसक्तेः। तथाहि। अग्न्-
यादिव्यावृत्तधूमादीनामपि स्वसाध्याव्यभिचारित्वमसर्वविदा न
निश्चेतुं शक्यमिति वक्तुं शक्यत एव। अथ सुविवेचितं कार्यं
कारणं न व्यभिचरतीति न्यायाद्धूमादेर्गमकत्वम्। तत्तर्ह्यत्रापि
समानम्। यो हि भविष्यद्वृष्ट्यव्यभिचारिणमुन्नतत्वादिविशेषमव- 5
गन्तुं समर्थः, स एव तस्मात्तमनुमिनोति, नागृहीतविशेषः।
तदुक्तम्। अनुमातुरयमपराधो नानुमानस्येति शेषं कार्यं तद्-
स्यास्ति तच्छेषवद्यत्र कार्येण कारणमनुमीयते, यथा नदीपूर-
दर्शनाद्वृष्टिः। अत्र कार्यशब्देन कार्यधर्मो लिङ्गमवगन्तव्यम्।
प्रयोगस्त्वित्थम्। उपरिवृष्टिमद्देशसंबन्धिनी नदी शीघ्रतरस्रोतस्त्वे 10
फलफेनसमूहकाष्ठादिवहनत्वे च सति पूर्णत्वात् तदन्यनदीवत्।
सामान्यतोदृष्टं नामाकार्यकारणभूतेनाविनाभाविना लिङ्गेन
यत्र लिङ्गिनोऽवगमो, यथा बलाकया सलिलस्येति। प्रयोगस्तु।
अयं बलाकाजहद्भूमिः प्रदेशो जलवान्बलाकावत्त्वात्, संप्रति-
पन्नदेशवत्, यथा वान्यवृक्षोपरिदृष्टस्यादित्यस्यान्यपर्वतोपरि- 15
दर्शनेन गतेरवगमः। प्रयोगः पुनः रवेरन्यत्रदर्शनं गत्यविना-
भूतं, अन्यत्रदर्शनत्वात्, देवदत्ताद्यन्यदर्शनवत्। अत्र यथा देव-
दत्तादेरन्यत्रदृष्टस्यान्यत्रदर्शनं गत्यापूर्वं, तथादित्यस्यापीति,
अन्यत्रदर्शनं च गतेः कार्यं संयोगादेर्गतिकार्यत्वात्॥ अन्ये त्वेवं
वर्णयन्ति। समानकालस्य स्पर्शस्य रूपादकार्यकारणभूतात्प्रति- 20
पत्तिः सामान्यतोदृष्टानुमानप्रभवा। अत्र प्रयोगः। ईदृशस्पर्श-
मिदं वस्त्वेवंविधरूपत्वात्। तदन्यतादृशवस्तुवत्। एवं चूतं

फलितं दृष्ट्वा पुष्पिता जगति चूता इति प्रतिपत्तिर्वा । प्रयो-
गस्तु । पुष्पिता जगति चूताश्चूतत्वात्, दृष्टचूतवदित्यादि । अथवा
पूर्वेण व्याप्तिग्राहकप्रत्यक्षेण तुल्यं वर्तत इति पूर्ववत्संबन्धग्राहक-
प्रत्यक्षेण विषयतुल्यत्वात्कथंचित्परिच्छेदक्रियाया अपि तुल्यता-
5 त्वानुमाने समस्तीति क्रियातुल्यत्वतः प्रयोगः सिद्धः । तेन
पूर्वप्रतिपत्त्या तुल्या प्रतिपत्तिर्यतो भवति, तत्पूर्ववदनुमानम् ।
इच्छादयः परतन्त्रा गुणत्वात् रूपादिवदिति शेषवन्नाम परि-
शेषः । स च प्रसक्तानां प्रतिषेधेऽन्यत्राप्रसङ्गात्संभवाच्छिष्यमाणस्य
संप्रत्ययः, यथा गुणत्वादिच्छादीनां पारतन्त्र्ये सिद्धे शरीरा-
10 दिषु प्रसक्तेषु प्रतिषेधः । शरीरविशेषगुणा इच्छादयो न
भवन्ति, तद्गुणानां रूपादीनां स्वपरात्मप्रत्यक्षत्वेनेच्छादीनां च
स्वात्मप्रत्यक्षत्वेन वैधर्म्यात् । नापीन्द्रियाणां विषयाणां वा गुणा
उपहतेष्वप्यनुस्मरणदर्शनात् । न चान्यस्य प्रसक्तिरस्ति । अतः
परिशेषादात्मसिद्धिः । प्रयोगश्चात्र । योऽसौ परः स आत्म
15 शब्दवाच्यः, इच्छाद्याधारत्वात् । ये त्वात्मशब्दवाच्या न भवन्ति,
न इच्छाद्याधारा अपि न भवन्ति । यथा शरीरादयः । अथ
प्रत्यक्षेणादृष्टान्वयं केवलव्यतिरेकबलादात्मनः प्रमा शेषवतः
फलम् । यत्र धर्मी साधनधर्मश्च प्रत्यक्षः साध्यधर्मश्च सर्वदाप्रत्यक्षः
साध्यते तत्सामान्यतोदृष्टम् । यथेच्छादयः परतन्त्रा गुणत्वाद्रूपवत् ।
20 उपलब्धिर्वा करणसाध्या क्रियात्वाच्छिदिक्रियावत् । असाधा-
रणकारणपूर्वकं जगद्वैचित्र्यं चित्रत्वाच्चित्रादिवैचित्र्यवदित्यादि ।
सामान्यतोदृष्टस्यानेकमुदाहरणं मन्तव्यम् । ननु साध्यध-

सर्वदाप्रत्यक्षत्वेन साध्येन हेतोः कथं व्याप्तिग्रहणमिति चेत्। उच्यते। धर्मिण इच्छादेः प्रत्यक्षप्रतिपन्नत्वं गुणत्वकार्यत्वादेरपि साधनस्य तद्धर्मत्वं प्रतिपन्नमेव। पारतन्त्र्येण च स्वसाध्येन तस्य व्याप्तिरध्यक्षतो रूपादिष्ववगतैव। साध्यव्यावृत्त्या साधनव्यावृत्तिरपि प्रमाणा-न्तरादेवावगता। नन्वेवं पूर्ववच्छेषवत्सामान्यतोदृष्टानां परस्परतः 5 को विशेषः। उच्यते। इच्छादेः पारतन्त्र्यमात्रप्रतिपत्तौ गुणत्वं कार्यत्वं वा पूर्ववत्। तदेवाश्रयान्तरबाधया विशिष्टाश्रयत्वेन बाधकेन प्रमाणेनावसीयमानं शेषवतः फलम्। तस्य साध्यधर्मस्य धर्म्यन्तरे प्रत्यक्षस्यापि तत्र धर्मिणि सर्वदाप्रत्यक्षत्वं सामान्यतो-दृष्टव्यपदेशनिबन्धनम्। अतस्त्रयाणामेकमेवोदाहरणम्। तदेवं 10 कारणादित्रैविध्यात्त्रिप्रकारं लिङ्गं प्रमितिं जनयत्तत्पूर्वकं यदनु-मानमिति द्वितीयं व्याख्यानम्। अत्र व्याख्याद्वये प्रथम-व्याख्यानमेव बहूनामध्ययनप्रभृतीनामभिमतम्। तत्र च पूर्व-वदादीनां व्याख्या द्वितीयव्याख्याने या चतुःप्रकाराभिहिता सैव द्रष्टव्येति॥ 15

अथ शास्त्रकार एव बालानामसंमोहार्थं शेषव्याख्याप्रका-रानुपेक्ष्यानुमानस्य त्रिविधस्य विषयज्ञापनाय पूर्ववदादीनि पदानि व्याख्यानयन्नाह "तत्राद्यम्" इत्यादि। तत्र तेषु पूर्व-वदादिषु, आद्यं पूर्ववदनुमानं किमित्याह। कारणलिङ्गात्का-र्यस्य लिङ्गिनोऽनुमानं ज्ञानं कार्यानुमानम्। इहानुमानप्रस्तावे, 20 नीयते प्रोच्यते। कारणात्कार्यमनुमानमिहोदितमिति पाठो वा। तथाकोति-प्रश्नाद्याकारे कारणात्कार्यमनुनीतमनुमानम्।

कारणात्कार्यमस्तीति ज्ञानमिहानुमानप्रस्ताव उदितं प्रोक्तम् ।
पाठद्वयेऽप्यत्र यल्लिङ्गिज्ञानमनुमानशब्देनोक्तं तद्द्वितीयव्याख्यान-
कारिणां मतेन, न तु प्रथमव्याख्यानकर्तृमतेन। प्रथमव्याख्या-
कारिमतेन हि ज्ञानस्य हेतुरेवानुमानशब्दवाच्यः स्यात्। एवं
5 शेषवत्यपि ज्ञेयम्। यत्र कारणात्मकज्ञानविशिष्टात्कार्यस्य ज्ञानं
भवति, तत्पूर्ववदनुमानम्। अत्र ह्यर्थोपलब्धिहेतुः प्रमाणमिति
वचनात्कार्यज्ञानमनुमानस्य फलं, तद्धेतुस्त्वनुमानं प्रमाणम्।
तेनात्र कारणं वा तज्ज्ञानं वा कार्यकारणप्रतिबन्धस्मरणं वा
कार्यं ज्ञापयत्पूर्ववदनुमानमिति ॥

तस्योदाहरणमाह ।

यथा ।

10 रोलम्बगवलव्यालतमालमलिनत्विषः ।

वृष्टिं व्यभिचरन्तीह नैवंप्रायाः पयोमुचः ॥ २० ॥

यथेति निदर्शनदर्शनार्थः। रोलम्बा भ्रमराः, गवला
अरण्यजातमहिषाः, व्याला दुष्टगजा सर्पाश्च, तमालास्तापि-
च्छवृक्षाः। तद्वन्मलिनाः श्यामलास्त्विषः कान्तयो येषां ते
15 तथा। एतेन मेघानां कान्तिमत्ता वचनेनानिर्वचनीया कात्य-
तिशयश्यामता व्यज्यते। एवंप्रायाः। एवंशब्द इदंप्रकारवचनः।
प्रायशब्दो बाहुल्यवाचकः। तत एवमिदंप्रकाराणां प्रायो
बाहुल्यं येषु त एवंप्राया ईदृक्प्रकारबाहुल्या इत्यर्थः। एतेन
गम्भीरगर्जितत्वाचिरप्रभावत्त्वादिप्रकाराणां बाहुल्यं मेघेषु सम्सू-
20 चितम्। उक्तविशेषणविशिष्टा मेघा इह जने वृष्टिं न व्यभि-

यरन्ति, वृष्टिकरा एव भवन्तीत्यर्थः। प्रयोगस्तु सूत्रव्याख्यावस-रोक्त एवात्रापि वक्तव्यः॥

अथ शेषवद्व्याख्यामाह। प/

**कार्यात्कारणानुमानं यच्च तच्छेषवन्मतम्।**
**तथाविधनदीपूराद्देवो वृष्टो यथोपरि॥२१॥** 5

कार्याल्लिङ्गात्कारणस्य लिङ्गिनोऽनुमानं ज्ञानं यत्। चकारः प्रागुक्तपूर्ववदपेक्षया समुच्चये। तच्छेषवन्मतम्। अयमत्र तत्त्वार्थः। यत्र कार्यात्कारणज्ञानं भवति, तच्छेषवदनुमानम्। अत्रापि प्राग्वत्कारणज्ञानस्य हेतुः कार्यं कार्यदर्शनं तत्संबन्ध-स्मरणं चानुमानशब्देन प्रतिपत्तव्यम्। यथेत्युदाहरणोपन्यासार्थः 10 प्रथममत्र योज्यः। तथाविधशीघ्रतरस्रोतस्त्वफलफेनादिवहन-लोभयतटव्यापित्वधर्मविशिष्टो यो नदीपूरस्तस्माल्लिङ्गादुपरिदेशे देवो मेघो वृष्ट इति ज्ञानम्। अत्र प्रयोगः प्राग्वत्।

**यच्च सामान्यतोदृष्टं तदेवं गतिपूर्विका।**
**पुंसि देशान्तरप्राप्तिर्यथा सूर्येऽपि सा तथा॥२२॥** 15

च: पुनरर्थे। यत्पुनः कार्यकारणभावादन्यत्र सामान्यतो ऽविनाभावबलेन दृष्टं लिङ्गं सामान्यतोदृष्टं, तदेवम्। कथमि-त्याह। यथा पुंस्येकस्माद्देशाद्देशान्तरप्राप्तिर्गतिपूर्विका तथा सूर्येऽपि सा देशान्तरप्राप्तिस्तथा गतिपूर्विका। अत्र देशान्तर-प्राप्तिशब्देन देशान्तरदर्शनं ज्ञेयम्। अन्यथा देशान्तरप्राप्तेर्गति- 20

कार्यत्वेन शेषवतोऽनुमानादस्य भेदो न स्यात्। यद्यपि गगने संच-
रतः सूर्यस्य नेत्रावलोकप्रसराभावेन गतिर्नोपलभ्यते, तथाप्युद-
याचलात्कालान्तरेऽस्ताचलचूलिकादौ तद्दर्शनं गतिं गमयति।
प्रयोगः पुनः पूर्वमुक्त एव। अथवा देशान्तरप्राप्तेर्गतिकार्यत्वं
5 लोको न प्रत्येतीति इदमुदाहरणं कार्यकारणभावाविवक्षया-
ऽत्रोपन्यस्तम्। प्रयोगस्त्वेवम्। सूर्यस्य देशान्तरप्राप्तिर्गतिपूर्विका
देशान्तरप्राप्तित्वाद्देवदत्तदेशान्तरप्राप्तिवत् ॥

उपमानलक्षणमाह।

**प्रसिद्धवस्तुसाधर्म्यादप्रसिद्धस्य साधनम्।**
**10 उपमानं समाख्यातं यथा गौर्गवयस्तथा ॥ २३ ॥**

"प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानम् [१, १, ६]" इति
सूत्रम्। अत्र यत इत्यध्याहार्यम्। ततश्च प्रसिद्धेन वस्तुना गवा
यत्साधर्म्यं समानधर्मत्वं तस्मात्प्रसिद्धवस्तुसाधर्म्यादप्रसिद्धस्य साध-
नम्। गवयगतस्य साध्यस्य संज्ञासंज्ञिसंबन्धस्य साधनं प्रतिपत्ति-
15 र्यतः साधर्म्यज्ञानाद्भवति तदुपमानं समाख्यातम्। साधर्म्यस्य
प्रसिद्धिरागमपूर्विका। तत आगमसंसूचनायाह। यथा गौस्तथा
गवय इति। गवयोऽरण्यगवयः। अयमत्र भावः। कश्चित्प्रभुणा
गवयानयनाय प्रेषितस्तदर्थमजानानस्तमेवाप्राक्षीत् कीदृग्गवय
इति। स प्रोचे यादृग्गौस्तादृग्गवय इति। ततः सोऽरण्ये परि-
20 भ्रमन्नमानमर्थं यदा पश्यति, तदा तस्य तदाक्यार्थस्मृतिसचा-
येन्द्रियार्थसंनिकर्षाद्गोसदृशोऽयमिति यज्ज्ञानमुत्पद्यते,

तत्प्रत्यक्षफलं, तदेवाप्यभिचार्यादिविशेषणमयं स गवयशब्दवाच्य इति संज्ञासंज्ञिसंबन्धप्रतिपत्तिं जनयदुपमानम्। संज्ञासंज्ञि-संबन्धप्रतिपत्तिस्तूपमानस्य फलम्। न पुनरागमिकी सा, शब्दस्य तज्जनकस्य तदानीमभावात्। गवयपिण्डविषये त्वेयादिज्ञानं यदुत्पद्यते तदिन्द्रियार्थसंनिकर्षजन्यत्वात्प्रत्यक्षफलम्॥ 5

अथ तुर्यं शाब्दमाह।

**शाब्दमाप्तोपदेशस्तु मानमेवं चतुर्विधम्।**
**प्रमेयं त्वात्मदेहाद्यं बुद्धीन्द्रियसुखादि च॥२४॥**

शब्दजनितं शाब्दमागम इत्यर्थः। तुर्भिन्नक्रमे। शाब्दं तु प्रमाणमाप्तोपदेशः। आप्त एकान्तेन सत्यवादी हितश्च। तस्योप- 10 देशो वचनमाप्तोपदेशः। तज्जनितं तु ज्ञानं शाब्दस्य फलम्। मानं प्रमाणमेवमुक्तविधिना चतुर्विधम्॥

तदेवं प्रथमं प्रमाणतत्त्वं व्याख्याय संप्रति द्वितीयं प्रमेय-तत्त्वं व्याख्यातुमाह। प्रमेयं त्वात्मदेहाद्यम्। प्रमेयं तु प्रमाण-फलस्य ग्राह्यं पुनरात्मदेहाद्यम्। आत्मा जीवः। देहो 15 वपुः, तावाद्यौ यस्य तदात्मदेहाद्यम्। बुद्धीन्द्रियसुखादि च प्रमेयम्। बुद्धिर्ज्ञानं, इन्द्रियं चक्षुरादिमनःपर्यन्तं, सुखं सातं तान्यादिर्यस्य तद्बुद्धीन्द्रियसुखादि। चकार आत्मदेहाद्यपेक्षया समुच्चये। अत्र विशेषणद्वय आद्यशब्देनादिशब्देन च शेषाणामपि सर्वेषां प्रमेयाणां संग्रहो द्रष्टव्यः। तथा च नैयायिकसूत्रम्। 20 "आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखाप-

वर्गभेदेन द्वादशविधं तदिति प्रमेयम्। [१, १, ९] तत्र शरीरादिदुःखपर्यन्तं हेयं, अपवर्ग उपादेयः। आत्मा तु कथञ्चिद्धेयः, कथञ्चिदुपादेयः। सुखदुःखादि भोक्तृतया हेयः, तदुन्मुक्ततयोपादेय इति। तत्रेच्छाद्वेषप्रयत्नसुखदुःखज्ञानादीनामाश्रय आत्मा। अचेतनत्वकर्तृत्वसर्वगतत्वादिधर्मैरात्मा प्रतीयते १। तद्भोगायतनं शरीरम् २। पञ्चेन्द्रियाणि घ्राणरसनचक्षुस्त्वक्श्रोत्राणि ३। पञ्चार्था रूपरसगन्धस्पर्शशब्दाः। तत्र गन्धरसरूपस्पर्शाश्चत्वारः पृथिवीगुणाः। रूपरसस्पर्शास्त्रयोऽपां गुणाः। रूपस्पर्शौ तेजसो गुणौ। एकः स्पर्शो वायोर्गुणः। शब्द आकाशस्य गुण इति ४। बुद्धिरुपलब्धिर्ज्ञानमित्यर्थः। सा क्षणिका, भोगस्वभावत्वाच्च संसारकारणमिति हेया ५। इन्द्रियार्थसन्निकर्षे सत्यपि युगपज्ज्ञानानुत्पादात् आन्तरसुखादिविषयोपलब्धेश्च बाह्यगन्धादिविषयोपलब्धिवत्करणसाध्यत्वादान्तरं करणं मनोऽनुमीयते। तत्सर्वविषयं तच्चाणु वेगवदाशुसंचारि नित्यं च ६। वाग्मनःकायव्यापारः शुभाशुभफलः प्रवृत्तिः ७। रागद्वेषमोहास्त्रयो दोषाः। ईर्ष्यादीनामेतेष्वेवान्तर्भावः। तत्कृतश्चैव संसारः ८। देहेन्द्रियादिसंघातस्य प्राक्तनस्य त्यागेन संघातान्तरग्रहणं प्रेत्यभावः। एष एव संसारः ९। प्रवृत्तिदोषजनितं सुखदुःखात्मकं मुख्यं फलं, तत्साधनं तु गौणम् १०। पीडासंतापस्वभावं दुःखम्। फलग्रहणेनाक्षिप्तमपीदं सुखस्यापि दुःखाविनाभावित्वात् दुःखत्वभावनार्थमुपदिश्यते ११। आत्यन्तिको दुःखवियोगोऽपवर्गः, सर्वगुणवियुक्तस्यात्मनः स्वरूपे-

ध्यवस्थानं, सुखदुःखयोर्विवेकेन हानस्याशक्यत्वात्। दुःखं जिहासुः सुखमपि जह्यात्। यस्माज्जन्मजरामरणप्रबन्धोच्छेदरूपः। परमः पुरुषार्थो ऽपवर्गः। स च तत्त्वज्ञानादवाप्यते॥२४॥

संशयप्रयोजनयोः स्वरूपं प्राह।

**किमेतदिति संदिग्धः प्रत्ययः संशयो मतः।**
**प्रवर्तते यदर्थित्वात्तत्तु साध्यं प्रयोजनम्॥ २५॥**

अयं किंशब्दो ऽस्ति क्षेपे 'किंसखा यो ऽभिद्रुह्यति'; अस्ति प्रश्ने 'किं ते प्रियं'; अस्ति निवारणे 'किं ते रुदितेन'; अस्त्यपलापे 'किं ते ऽहं धारयामि'; अस्त्यनुनये 'किं ते ऽहं प्रियं करोमि'; अस्त्यवज्ञाने 'कस्त्वामुल्लापयते'; अस्ति वितर्के 'किमिदं दूरे दृश्यते'। इह तु वितर्के। दूरावलोकनेन पदार्थसामान्यमवबुध्यमानस्तद्विशेषं संदिहानो वितर्कयति 'एतत्प्रत्यक्षमूर्ध्वस्थितं वस्तु किं, तर्कै स्थाणुर्वा पुरुषो वेति'। यः संदिग्धो ऽनेककोटिपरामर्शी प्रत्ययो विमर्शः, स संशयो मतः संमत इति॥

अथ प्रयोजनम्। यदर्थित्वाद्यस्य फलस्यार्थित्वमभिलाषुकत्वं यदर्थित्वं, तस्मात्प्रवर्तते तत्तदीयसाधनेषु यत्नं कुरुते, तत्तु तत्पुनः साध्यं कर्तव्यतयेष्टं प्रयोजनं फलं यस्य वाञ्छया कार्येषु प्रवर्तते तत्प्रयोजनमित्यर्थः॥ प्रयोजनमूलत्वाच्च प्रमाणोपन्यासप्रवृत्तेः प्रमेयान्तर्भूतमपि प्रयोजनं पृथगुपदिश्यते॥

अथ दृष्टान्तसिद्धान्तौ व्याचिख्यासुराह

दृष्टान्तस्तु भवेदेष विवादविषयो न यः ।
सिद्धान्तस्तु चतुर्भेदः सर्वतन्त्रादिभेदतः ॥ २६ ॥

दृष्टोऽन्तो निश्चयो ऽत्रेति दृष्टान्तः । दृष्टान्तः पुनरेषो ऽयं भवेत् । एष क इत्याह । य उपन्यस्तः सन् विवादविषयो
5 वादिप्रतिवादिनोर्मिथोविरुद्धो वादो विवादः, तस्य विषयो गोचरो न भवति । वादिप्रतिवादिनोरुभयोः संमत एवानुमानादौ दृष्टान्त उपन्यसव्य इत्यर्थः । पञ्चस्ववयवेषु वक्ष्यमाणो ऽपि दृष्टान्तः साध्यसाधनधर्मयोः प्रतिबन्धग्रहणस्थानमिति पृथगिहोपदिश्यते । तावदेव ह्यन्वयव्यतिरेकयुक्तो ऽर्थः स्खलति,
10 यावन्न स्पष्टदृष्टान्तावष्टम्भः । उक्तं च ।

तावदेव चलत्यर्थो मन्तुर्विषयमागतः ।
यावन्नोत्तम्भनेनैव दृष्टान्तेनावलम्ब्यते ॥

सिद्धान्तस्तु सिद्धान्तः पुनश्चतुर्भेदो भवेत् । कुत इत्याह । सर्वतन्त्रादिभेदतः सर्वतन्त्रादिभेदेन । प्रथमः सर्वतन्त्रसिद्धान्तः ।
15 आदिशब्दात्प्रतितन्त्रसिद्धान्तो ऽधिकरणसिद्धान्तो ऽभ्युपगमसिद्धान्तश्च वेदितव्यः । इह तन्त्रशब्देन शास्त्रं विज्ञेयम् ॥ तत्र सर्वतन्त्राविरुद्धः स्वतन्त्रे ऽधिकृतो ऽर्थः सर्वतन्त्रसिद्धान्तः सर्वेषां शास्त्राणां संप्रतिपत्तिविषयः, यथा प्रमाणानि प्रमेयसाधनानि, घ्राणादीनीन्द्रियाणि, गन्धादयस्तदर्थाः, प्रमाणेन
20 प्रमेयस्य परिच्छेद इत्यादि ॥ समानतन्त्रप्रसिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः, यथा भौतिकानीन्द्रियाणि यौगानां काणा-

दादीनां च, अभौतिकानि संख्यानाम्। तथा सांख्यानां सर्वं सदेवोत्पद्यते न पुनरसत्, नैयायिकादीनां सर्वमसदेवोत्पद्यते सामग्रीवशात्, जैनानां तु सदसदुत्पद्यत इत्यादि ॥

यस्य सिद्धावन्यस्य प्रक्रियमाणस्य प्रतिज्ञार्थस्य प्रसङ्गेनाधिकस्य सिद्धिः, सो ऽधिकरणसिद्धान्तः, यथा कार्यत्वादेः क्षित्यादौ 5
बुद्धिमत्कारणसामान्यसिद्धावन्यस्य तत्करणसमर्थस्य नित्यज्ञानेच्छाप्रयत्नाधारस्य तत्कारणस्य सिद्धिरिति ॥ प्रौढवादिभिः स्वबुद्ध्यतिशयचिख्यापयिषया यत्किंचिद्वस्त्वपरीक्षितमभ्युपगम्य विशेषः परीक्ष्यते, सो ऽभ्युपगमसिद्धान्तः, यथास्तु द्रव्यं शब्दः, स तु किं नित्यो ऽनित्यो वेति शब्दस्य द्रव्यत्वमनिष्टमभ्युपगम्य 10
नित्यानित्यत्वविशेषः परीक्ष्यते ॥ एवं चतुर्विधः सिद्धान्तः ॥

अवयवादितत्त्वत्रयं प्ररूपयति।

प्रतिज्ञाहेतुदृष्टान्तोपनया निगमस्तथा।
अवयवाः पञ्च तर्कः संदेहोपरमे भवेत् ॥ २७ ॥
यथा काकादिसंपातात्स्थाणुना भाव्यमत्र हि। 15
ऊर्ध्वं संदेहतर्काभ्यां प्रत्ययो निर्णयो मतः ॥ २८ ॥

युग्मम्। अवयवाः पञ्च, के पञ्चेत्याह। प्रतिज्ञा हेतुर्दृष्टान्त उपनयो निगमशब्देन निगमनं चेति। तत्र प्रतिज्ञा पक्षधर्मधर्मिवचनं, हुताशनवानयं सानुमानित्यादि। हेतुः साधनं लिङ्गवचनं, धूमवत्त्वादित्यादि। दृष्टान्त उदाहरणाभिधानं, 20
तद्द्विविधं, अन्वयमुखेन व्यतिरेकमुखेन च। अन्वयमुखेन यथा।

यो यो धूमवान्, स स कृशानुमान्, यथा महानसमित्यादि । व्यतिरेकमुखेन यथा । यो यः कृशानुमान्न भवति, स स धूमवान्न भवति, यथा जलमित्यादि । उपनयो हेतोरुपसंहारकं वचनम् । धूमवांश्चायमित्यादि । निगमनं हेतूपदेशेन साध्य-
5 धर्मोपसंहरणम् । धूमवत्त्वात्कृशानुमानित्यादि ॥

अथ तर्कतत्त्वम् । तर्कः संदेहोपरमे भवेत् । सम्यग्वस्तुस्वरूपानवबोधे किमयं स्थाणुर्वा पुरुषो वेति संदेहः संशयस्तस्योपरमे व्यपगमे तर्को ऽन्वयधर्मान्वेषणरूपो भवेत् । कथमित्याह । यथा काकादीत्यादि । यथेत्युपदर्शने । काकादिसंपातात्
10 वायसप्रभृतिपक्षिसंपतनादुपलक्षणत्वान्निश्चलत्ववल्ल्यारोहणादिस्थाणुधर्मेभ्यस्तत्रारण्यप्रदेशे स्थाणुना कीलकेन भाव्यं भवितव्यम् । हिशब्दो ऽत्र निश्चयोत्प्रेक्षणार्थो द्रष्टव्यः । संप्रति हि वने ऽत्र मानवस्यासंभवात्स्थाणुधर्माणामेव दर्शनाच्च स्थाणुरेवात्र घटत इति । तदुक्तम् ।

15 अरण्यमेतत्सविताऽस्तमागतो न चाधुना संभवतीह मानवः ।
ध्रुवं तदेतेन खगादिभाजा भाव्यं स्मरारातिसमाननाम्ना ॥
इत्येष तर्कः ॥

अथ निर्णयतत्त्वमाह । ऊर्ध्वमित्यादि । पूर्वोक्तस्वरूपाभ्यां संदेहतर्काभ्यामूर्ध्वमनन्तरं यः प्रत्ययः स्थाणुरेवायं पुरुष एव
20 वेति प्रतीतिः स निर्णयो निश्चयो मतो ऽभीष्टः । यत्तदावर्थसंबन्धादनुक्तावपि क्वचन गम्येते, तेनात्र तौ व्याख्यातौ । एवमन्यत्रापि मन्तव्यम् ॥

अथ वादतत्त्वमाह।

**आचार्यशिष्ययोः पक्षप्रतिपक्षपरिग्रहात्।**
**या कथाभ्यासहेतुः स्यादसौ वाद उदाहृतः॥ २९॥**

वादिप्रतिवादिनोः पक्षप्रतिपक्षपरिग्रहः कथा। सा द्विविधा, वीतरागकथा विजिगीषुकथा च। यत्र वीतरागेण 5 गुरुणा सह शिष्यस्तत्त्वनिर्णयार्थं साधनोपालम्भौ करोति साधनं स्वपक्ष उपालम्भश्च परपक्षे ऽनुमानस्य दूषणं, सा वीतरागकथा वादसंज्ञयैवोच्यते। वादं प्रतिपक्षस्थापनाहीनमपि कुर्यात् प्रश्नद्वारेणैव॥ यत्र विजिगीषुर्जिगीषुणा सह लाभपूजाख्याति-कामो जयपराजयार्थं प्रवर्तते वीतरागो वा परानुग्रहार्थं 10 ज्ञानाङ्कुरसंरक्षणार्थं च प्रवर्तते, सा चतुरङ्गा वादिप्रतिवादि-सभापतिप्राश्निकाङ्गा विजिगीषुकथा जल्पवितण्डासंज्ञोक्ता। तथा चोक्तम्। "तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे, बीज-प्ररोहसंरक्षणार्थं कण्टकशाखापरिवरणवत्" इति। यथोक्त-लक्षणोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः। स 15 प्रतिपक्षस्थापनाहीनो वितण्डेति वादजल्पवितण्डानां व्यक्तिः॥

अथ प्रकृतं प्रस्तुमः। आचार्यो ऽध्यापको गुरुः, शिष्यो ऽध्येता विनेयः। तयोराचार्यशिष्ययोः पक्षप्रतिपक्षपरिग्रहात्। पक्षः पूर्वपक्षः प्रतिज्ञादिसंग्रहः, प्रतिपक्ष उत्तरपक्षः पूर्वपक्षप्रति-पन्थी पक्ष इत्यर्थः, तयोः परिग्रहात्स्वीकारात्, अभ्यासस्य 20 हेतुरभ्यासकारणम्, या कथा प्रामाणिकी वार्ता, असौ कथा

वाद उदाहृतः कीर्तितः । आचार्यः पूर्वपक्षं स्वीकृत्याचष्टे शिष्यश्चोत्तरपक्षमुररीकृत्य पूर्वपक्षं खण्डयति । एवं पक्षप्रतिपक्षसंग्रहेण निग्राहकसभापतिजयपराजयच्छलजात्याद्यनपेक्षतयाभ्यासार्थं यत्र गुरुशिष्यौ गोष्ठीं कुरुतः, स वादो विज्ञेयः ॥

5 अथ जल्पवितण्डे विवृणोति ।

**विजिगीषुकथा या तु च्छलजात्यादिदूषणा ।**
**स जल्पः सा वितण्डा तु या प्रतिपक्षवर्जिता ॥ ३० ॥**

या तु या पुनर्विजिगीषुकथा विजयाभिलाषिभ्यां वादिप्रतिवादिभ्यां प्रारब्धा प्रमाणगोष्ठी, कथंभूता, छलानि जातयश्च 10 वक्ष्यमाणलक्षणानि, आदिशब्दान्निग्रहस्थानादिपरिग्रहः, एतैः कृत्वा दूषणं परोपन्यस्तपक्षादेर्दोषोत्पादनं यस्यां सा छलजात्यादिदूषणा, स विजिगीषुकथारूपो जल्प उदाहृत इति पूर्वश्लोकात्संबन्धनीयम् । ननु च्छलजात्यादिभिः परपक्षादेर्दूषणोत्पादनं सतां कर्तुं न युक्तमिति चेत् । न । सन्मार्गप्रतिपत्तिनि- 15 मित्तं तस्याभ्यनुज्ञातत्वात् । अनुज्ञातं हि स्वपक्षस्थापनेन सन्मार्गप्रतिपत्तिनिमित्ततया छलजात्याद्युपन्यासैरपि परप्रयोगस्य दूषणोत्पादनम् । तथा चोक्तम् ।

दुःशिक्षितकुतर्कांशलेशवाचालिताननाः ।
शक्याः किमन्यथा जेतुं वितण्डाटोपमण्डिताः ॥ १ ॥

20 गतानुगतिको लोकः कुमार्गं तत्प्रतारितः ।
मार्गादिति च्छलादीनि प्राह कारुणिको मुनिः ॥ २ ॥

इति संकटे प्रस्तावे च सति छलादिभिरपि स्वपक्षस्थाप-
नमनुमतम् । परविजये हि न धर्मध्वंसादिदोषसंभवः ।
तस्माद्वरं छलादिभिरपि जयः ॥ सा वितण्डा त्वित्यादि ।
तुशब्दो ऽवधारणार्थो भिन्नक्रमश्च । सा तु सैव विजिगीषु-
कथैव प्रतिपक्षविवर्जिता वादिप्रयुक्तपक्षप्रतिपन्थी प्रतिवाद्युप- 5
न्यासः प्रतिपक्षस्तेन विवर्जिता रहिता प्रतिपक्षसाधनाहीनेत्यर्थः
वितण्डोदाहृता । वैतण्डिको हि स्वाभ्युपगतपक्षमस्थापयन्यत्किं-
चिद्वादेन परोक्तमेव दूषयतीत्यर्थः ॥

अथ हेत्वाभासादितत्त्वत्रयस्वरूपं प्रकटयति ।

**हेत्वाभासा असिद्धाद्याश्छलं कूपो नवोदकः ।** 10
**जातयो दूषणाभासाः पक्षादिर्दूष्यते न यैः ॥ ३१ ॥**

असिद्धाद्या असिद्धविरुद्धानैकान्तिककालात्ययापदिष्टप्रकर-
णसमाः पञ्च हेत्वाभासाः । तत्र पक्षधर्मत्वं यस्य नास्ति, सो-
ऽसिद्धः । अनित्यः शब्दश्चाक्षुषत्वादिति । १ ॥ विपक्ष एव सपक्षे
चासन् विरुद्धः । नित्यः शब्दः कार्यत्वादिति । २ ॥ पक्षादि- 15
त्रयवृत्तिरनैकान्तिकः । अनित्यः शब्दः प्रमेयत्वादिति । ३ ॥
हेतोः प्रयोगकालः प्रत्यक्षागमानुपहतपक्षपरिग्रहसमयस्तमती-
त्यापदिष्टः प्रयुक्तः, प्रत्यक्षागमविरुद्धे पक्षे वर्तमान इत्यर्थः,
हेतुः कालात्ययापदिष्टः । अनुष्णोऽग्निः कृतकत्वात्, ब्राह्मणेन
सुरा पेया द्रवद्रव्यत्वात् क्षीरवदिति । ४ ॥ स्वपक्षसिद्धाविव 20
परपक्षसिद्धावपि त्रिरूपो हेतुः प्रकरणसमः । प्रकरणे पक्षे

प्रतिपक्षे च तुल्य इत्यर्थः। अनित्यः शब्दः पक्षसपक्षयोरन्यतर-
त्वात्, सपक्षवदित्येकेनोक्ते द्वितीयः प्राह। यद्यनेन प्रकारेणा-
नित्यत्वं साध्यते, तर्हि नित्यतासिद्धिरप्यस्तु, यथा नित्यः शब्दः
पक्षसपक्षयोरन्यतरत्वात् सपक्षवदिति। अथवानित्यः शब्दो
नित्यधर्मानुपलब्धेः घटवत्, नित्यः शब्दोऽनित्यधर्मानुपलब्धे-
राकाशवदिति। न चैतेष्वन्यतरदपि साधनं बलीयो यदितरस्य
बाधकमुच्यते। ५॥ निग्रहस्थानान्तर्गता अप्यमी हेत्वाभासाः
न्यायविवेकं कुर्वतो वादे वस्तुशुद्धिं विदधतीति पृथगेवोच्यते॥

छलं कूपो नवोदक इति परोपन्यस्तवादे स्वाभिमतकल्पनया
वचनविघातश्छलम्। तत्त्रिविधं वाक्छलं सामान्यच्छलमुपचार-
च्छलं च। परोक्तेऽर्थान्तरकल्पना वाक्छलम्। यथा नव्यः
कम्बलोऽस्येत्यभिप्रायेण नवकम्बलो माणवक इत्युक्ते छलवाद्याह,
कुतोऽस्य नवसंख्याः कम्बला इति। १॥ संभावनयातिप्रसक्तिनो
ऽपि सामान्यस्योपन्यासे हेतुत्वारोपणेन तन्निषेधः सामान्य-
च्छलम्। यथा अहो नु खल्वसौ ब्राह्मणो विद्याचरणसंपन्न
इति ब्राह्मणस्तुतिप्रसङ्गे कश्चिद्वदति। संभवति ब्राह्मणे विद्या-
चरणसंपदिति। तच्छलवादी ब्राह्मणत्वस्य हेतुत्वमारोप्य निरा-
कुर्वन्नभियुङ्क्ते। व्रात्येनानैकान्तिकमेतत्। यदि हि ब्राह्मणे
विद्याचरणसंपद्भवति, तदा व्रात्येऽपि सा भवेत्। व्रात्योऽपि
ब्राह्मण एवेति। २॥ औपचारिके प्रयोगे मुख्यार्थकल्पनया
प्रतिषेध उपचारच्छलम्। यथा मञ्चाः क्रोशन्तीत्युक्ते छलवा-
द्याह। मञ्चस्थाः पुरुषाः क्रोशन्ति, न मञ्चास्तेषामचेतनत्वा-

दिति। ३॥ अथ ग्रन्थकृच्छब्दं व्यभिचारासुराशस्य वाक्छल-
स्योदाहरणमाह। कूपो नवोदक इति। अत्र नूतनार्थनवशब्दस्य
प्रयोगे कृते छलवादी दूषयति। कुत एक एव कूपो नव-
संख्योदक इति। अनेन शेषच्छलद्वयोदाहरणे अपि सूचिते
द्रष्टव्ये इति॥ 5

जातय इत्यादि। दूषणाभासा जातयः। अदूषणान्यपि दूष-
णवदाभासन्त इति दूषणाभासाः। यैः पक्षादिः पक्षहेत्वादिर्न
दूष्यत आभासमात्रत्वान्न दूषयितुं शक्यते, केवलं सम्यग्हेतौ
हेत्वाभासे वा वादिना प्रयुक्ते झगिति तद्दोषत्वाप्रतिभासे हेतु-
प्रतिबिम्बनप्रायं किमपि प्रत्यवस्थानं जातिः। सा च चतुर्विं- 10
शतिभेदा साधर्म्यादिप्रत्यवस्थानभेदेन। यथा साधर्म्य-१, वैधर्म्य-
२, उत्कर्ष-३, अपकर्ष-४, वर्ण्य-५, अवर्ण्य-६, विकल्प-७,
साध्य-८, प्राप्ति-९, अप्राप्ति-१०, प्रसङ्ग-११, प्रतिदृष्टान्त-१२,
अनुत्पत्ति-१३, संशय-१४, प्रकरण-१५, अहेतु-१६, अर्थापत्ति-
१७, अविशेष-१८, उपपत्ति-१९, उपलब्धि-२०, अनुपलब्धि- 15
२१, नित्य-२२, अनित्य-२३, कार्यसमा-२४॥

तत्र साधर्म्येण प्रत्यवस्थानं साधर्म्यसमा जातिर्भवति। अनित्यः
शब्दः, कृतकत्वात्, घटवदिति प्रयोगे कृते साधर्म्यप्रयोगेणैव
प्रत्यवस्थानम्। यद्यनित्यघटसाधर्म्यात्कृतकत्वादनित्यः शब्द इष्यते,
तर्हि नित्याकाशसाधर्म्यादमूर्तत्वान्नित्यः प्राप्नोतीति॥ १॥ 20

वैधर्म्येण प्रत्यवस्थानं वैधर्म्यसमा जातिः। अनित्यः शब्दः,
कृतत्वात्, घटवदित्यत्रैव प्रयोगे वैधर्म्येणोक्ते वैधर्म्येणैव प्रत्यव-

स्थानम्। नित्यः शब्दोऽमूर्तत्वात्। अनित्यं हि मूर्तं दृष्टं, यथा घटादीति। यदि हि नित्याकाशवैधर्म्यात्कृतकत्वादनित्य इष्यते, तर्हि घटाद्यनित्यवैधर्म्यादमूर्तत्वान्नित्यः प्राप्नोति, विशेषाभावादिति ॥ २ ॥

5 उत्कर्षापकर्षाभ्यां प्रत्यवस्थानमुत्कर्षापकर्षसमे जाती भवतः। तत्रैव प्रयोगे दृष्टान्तसाधर्म्यं किंचित्साध्यधर्मिण्यापादयन्नुत्कर्षसमां जातिं प्रयुङ्क्ते। यदि घटवत्कृतत्वादनित्यः शब्दस्तर्हि घटवदेव मूर्तोऽपि भवेत्। न चेत् मूर्तो घटवदनित्योऽपि मा भूदिति शब्दे धर्मान्तरोत्कर्षमापादयति ॥ ३ ॥

10 अपकर्षस्तु। घटः कृतकः सन्नश्रावणो दृष्टः। एवं शब्दोऽपि भवतु। नो चेत् घटवदनित्योऽपि मा भूदिति शब्दे श्रावणत्वमपकर्षति ॥ ४ ॥

वर्ण्यावर्ण्याभ्यां प्रत्यवस्थानं वर्ण्यावर्ण्यसमे जाती भवतः। स्थापनीयो वर्ण्यस्तद्विपरीतोऽवर्ण्यस्तावेतौ वर्ण्यावर्ण्यौ साध्यदृष्टा-
15 न्तधर्मौ विपर्यस्यन्वर्ण्यावर्ण्यसमे जाती प्रयुङ्क्ते। यथाविधः शब्दधर्मः कृतकत्वादिर्न तादृक् च घटधर्मो, यादृक् च घटधर्मो न तादृक् शब्दधर्म इति। साध्यधर्मो दृष्टान्तधर्मश्च हि तुल्यौ कर्तव्यौ। अत्र तु विपर्यासः। यतो यादृग् घटधर्मः कृतकत्वादिर्न तादृक् शब्दधर्मः। घटस्य ह्यन्यादृशं कुम्भकारादिजन्यं
20 कृतकत्वं, शब्दस्य हि ताल्वोष्ठादिव्यापारजमिति ॥ ५-६ ॥

धर्मान्तरविकल्पेन प्रत्यवस्थानं विकल्पसमा जातिः। यथा कृतकं किंचिन्मृदु दृष्टं तूलशय्यादि, किंचित्तु कठिनं कुठा-

रादि, एवं कृतकं किंचिदनित्यं भविष्यति घटादिकं, किंचिच्च नित्यं शब्दादीति ॥ ७ ॥

साध्यसाम्यापादनेन प्रत्यवस्थानं साध्यसमा जातिः। यदि यथा घटस्तथा शब्दः प्राप्तः, तर्हि यथा शब्दस्तथा घट इति शब्दश्च साध्य इति घटोऽपि साध्यो भवेत्, ततश्च न साध्यः 5 साध्यस्य दृष्टान्तः स्यात्। न चेदेवं तथापि वैलक्षण्यात्सुतरां न दृष्टान्त इति ॥ ८ ॥

प्राप्त्यप्राप्तिविकल्पाभ्यां प्रत्यवस्थानं प्राप्त्यप्राप्तिसमे जाती। यदेतत्कृतकत्वं साधनमुपन्यस्तं तत्किं प्राप्य साध्यं साधयत्यप्राप्य वा। प्राप्य न्, तर्हि द्वयोर्विद्यमानयोरेव प्राप्तिर्भवति न 10 सदसतोरिति। द्वयोश्च सत्त्वात्किं कस्य साध्यं साधनं वा। अप्राप्य तु साधनत्वमयुक्तमतिप्रसङ्गादिति ॥ ९-१० ॥

प्रसङ्गापादनेन प्रत्यवस्थानं प्रसङ्गसमा जातिः। यद्यनित्यत्वे कृतकत्वं साधनं, तदा कृतकत्वे किं साधनं, तत्साधनेऽपि किं साधनमिति ॥ ११ ॥ 15

प्रतिदृष्टान्तेन प्रत्यवस्थानं प्रतिदृष्टान्तसमा जातिः। अनित्यः शब्दः प्रयत्नानन्तरीयकत्वात्, घटवदित्युक्ते जातिवाद्याह। यथा घटः प्रयत्नानन्तरीयकोऽनित्यो दृष्टः, एवं प्रतिदृष्टान्त आकाशं नित्यमपि प्रयत्नानन्तरीयकं दृष्टं, कूपखननप्रयत्नानन्तरं तदुपलम्भादिति। न चेदमनैकान्तिकत्वोद्भावनं भंग्यन्तरेण प्रत्य- 20 वस्थानात् ॥ १२ ॥

अनुत्पत्त्या प्रत्यवस्थानमनुत्पत्तिसमा जातिः। अनुत्पन्ने

शब्दाख्ये धर्मिणि कृतकत्वं धर्मः क्व वर्तते । तदेवं हेत्वाभावा-
दसिद्धिरनित्यत्वस्येति ॥ १३ ॥

साधर्म्यसमा वैधर्म्यसमा वा या जातिः पूर्वमुदाहारि सैव
संशयेनोपसंह्रियमाणा संशयसमा जातिर्भवति । किं घटसाधर्म्या-
5 त्कृतकत्वादनित्यः शब्द उत तद्वैधर्म्यादमूर्तत्वान्नित्य इति ॥ १४ ॥

द्वितीयपक्षोत्थापनबुद्ध्या प्रयुज्यमाना सैव साधर्म्यसमा वैधर्म्य-
समा च जतिः प्रकरणसमा भवति । तत्रैवानित्यः शब्दः, कृत-
कत्वाद्घटवदिति प्रयोगे नित्यः शब्दः श्रावणत्वाच्छब्दत्ववदिति ।
उद्भावनप्रकारभेदमात्रेण च जातिनानात्वं द्रष्टव्यम् ॥ १५ ॥

10 त्रैकाल्यानुपपत्त्या हेतोः प्रत्यवस्थानं हेतुसमा जातिः ।
हेतुः साधनं तत्साध्यात्पूर्वं पश्चात्सह वा भवेत् । यदि पूर्वमसति
साध्ये तत्कस्य साधनम् । अथ पश्चात्साधनं तर्हि पूर्वं साध्यं
तस्मिंश्च पूर्वसिद्धे किं साधनेन । अथ युगपत्साध्यसाधने तर्हि
तयोः सव्येतरगोविषाणयोरिव साध्यसाधनभाव एव न भवे-
15 दिति ॥ १६ ॥

अर्थापत्त्या प्रत्यवस्थानमर्थापत्तिसमा जातिः । यद्यनित्यसा-
धर्म्यात्कृतकत्वादनित्यः शब्दोऽर्थादापद्यते, तदा नित्यसाधर्म्या-
न्नित्य इति । अस्ति चास्य नित्येनाकाशादिना साधर्म्यममूर्तत्व-
मित्युद्भावनप्रकारभेद एवायमिति ॥ १७ ॥

20 अविशेषापादनेन प्रत्यवस्थानमविशेषसमा जातिः । यदि
शब्दघटयोरेको धर्मः कृतकत्वमिष्यते, तर्हि समानधर्मयोगात्त-
योरविशेषे तद्वदेव सर्वपदार्थानामविशेषः प्रसज्यत इति ॥ १८ ॥

नुपपत्त्या प्रत्यवस्थानमनुपपत्तिसमा जातिः। कृतकत्वोपपत्त्या शब्दस्यानित्यत्वं, तस्यामूर्तत्वोपपत्त्या नित्यत्वमपि कस्मान्न भवतीति पक्षद्वयोपपत्त्यानध्यवसायपर्यवसानत्वं विवक्षितमित्युद्भावनप्रकारभेद एवायम् ॥ १९ ॥

उपलब्ध्या प्रत्यवस्थानमुपलब्धिसमा जातिः। अनित्यः शब्दः प्रयत्नानन्तरीयकत्वादित्युक्ते प्रत्यवतिष्ठते। न खलु प्रयत्नानन्तरीयकत्वमनित्यत्वे साधनम्। साधनं हि तदुच्यते येन विना न साध्यमुपलभ्यते। उपलभ्यते च प्रयत्नानन्तरीयकत्वेन विनापि विद्युदादावनित्यत्वं, शब्देऽपि क्वचिद्वायुवेगभज्यमानवनस्पत्यादिजन्ये तथैवेति ॥ २० ॥

अनुपलब्ध्या प्रत्यवस्थानमनुपलब्धिसमा जातिः। तत्रैव प्रयत्नानन्तरीयकत्वे हेतावुपन्यस्ते सत्याह जातिवादी। न प्रयत्नानन्तरीयकः कार्यः शब्दः प्रागुच्चारणादस्त्येवासौ, आवरणयोगात्तु नोपलभ्यते। आवरणानुपलम्भेऽप्यनुपलम्भात्सत्त्वेवोच्चारणात्प्राक्शब्द इति चेत् न। अत्र हि यानुपलब्धिः सा स्वात्मनि वर्तते न वा। वर्तते चेत्तदा यथावरणेऽनुपलब्धिर्वर्तते, तस्यावरणस्य यथानुपलम्भस्तथावरणानुपलब्धेरप्यनुपलम्भः स्यात्। आवरणानुपलब्धेस्तानुपलम्भादभावो भवेत्। तदभावे चावरणोपलब्धेर्भावो भवति। ततश्च मृदन्तरितमूलकीलोदकादिवदावरणोपलब्धिकृतमेव शब्दस्य प्रागुच्चारणादग्रहणम्। अथानुपलब्धिः स्वात्मनि न वर्तते चेत्, तर्ह्यनुपलब्धिः स्वरूपेणापि नास्ति। तथाप्यनुपलब्धेरभाव उपलब्धिरूपस्ततोऽपि

शब्दस्य प्रागुच्चारणादप्यस्तित्वं स्यादिति । द्वेधापि प्रयत्नकार्यत्वाभावान्नित्यः शब्द इति ॥ २१ ॥

साध्यधर्मनित्यानित्यविकल्पेन शब्दस्य नित्यत्वापादनं नित्यसमा जातिः । अनित्यः शब्द इति प्रतिज्ञाते जातिवादी
5 विकल्पयति । येयमनित्यता शब्दस्योच्यते सा किमनित्या नित्या वेति । यद्यनित्या तदियमवश्यमपायिनीत्यनित्यताया अपायान्नित्यः शब्दः । अथानित्यता नित्यैव तथापि धर्मस्य नित्यत्वात्तस्य च निराश्रयस्यानुपपत्तेस्तदाश्रयभूतः शब्दोऽपि नित्य एव स्यात्, तस्यानित्यत्वे तद्धर्मस्य नित्यत्वायोगात् ।
10 इत्युभयथापि नित्यः शब्द इति ॥ २२ ॥

एवं सर्वभावानामनित्यत्वोपपादनेन प्रत्यवस्थानमनित्यसमा जातिः। घटसाधर्म्यमनित्यत्वेन शब्दस्यास्तीति तस्यानित्यत्वं यदि प्रतिपाद्यते, तदा घटेन सर्वपदार्थानामस्त्येव किमपि साधर्म्यमिति तेषामप्यनित्यत्वं स्यात् । अथ पदार्थान्तराणां तथाभावे
15 ऽपि नानित्यत्वं, तर्हि शब्दस्यापि तन्मा भूदिति, अनित्यत्वमात्रोपपादनपूर्वकविशेषोद्भावनादविशेषसमातो भिन्नेयं जातिः॥ २३ ॥

प्रयत्नकार्यनानात्वोपन्यासेन प्रत्यवस्थानं कार्यसमा जातिः । अनित्यः शब्दः प्रयत्नानन्तरीयकत्वादित्युक्ते जातिवाद्याह । प्रयत्नस्य
20 द्वैरूप्यं दृष्टम् । किंचिदसदेव तेन जन्यते यथा घटादिकम् । किंचिच्च सदेवावरणव्युदासादिनाभिव्यज्यते यथा मृदन्तरितमूलकीलादि गर्भगतपुत्रादि वा । एवं प्रयत्नकार्यनानात्वादेष

शब्दः प्रयत्नेन व्यज्यते जन्यते वेति संशय इति। संश-
यापादनप्रकारभेदाच्च संशयसमातः कार्यसमा जातिर्भि-
द्यते ॥ २४ ॥

तदेवमुद्भावनविषयविकल्पभेदेन जातीनामानन्त्ये ऽप्यसंकी-
र्णोदाहरणविवक्षया चतुर्विंशतिर्जातिभेदा एते प्रदर्शिताः। 5
प्रतिसमाधानं तु सर्वजातीनां पक्षधर्मत्वाद्यनुमानलक्षणपरीक्षा-
लक्षणमेव। न ह्यविप्लुतलक्षणे हेतावेवं पांशुपाताः प्रभवन्ति।
कृतकत्वप्रयत्नानन्तरीयकत्वयोश्च दृढकृतप्रतिबन्धात् नावरणादि-
कृतं शब्दानुपलम्भनमपि त्वनित्यत्वकृतमेव। जातिप्रयोगे च
परेण कृते सम्यगुत्तरमेव वक्तव्यम्, न तु प्रतीपं जात्युत्तरै- 10
रेव प्रत्यवस्थेयमासमंजस्य प्रसङ्गादिति ॥

अथ निग्रहस्थानमाह।

निग्रहस्थानमाख्यातं परो येन निगृह्यते।
प्रतिज्ञाहानिसंन्यासविरोधादिविभेदतः ॥ ३२ ॥

येन केनचित्प्रतिज्ञाहान्याद्युपरोधेन परो विपक्षो निगृह्यते 15
परवादी वचननिग्रहे पात्यते तन्निग्रहस्थानम्। निग्रहः परा-
जयस्तस्य स्थानमाश्रयः कारणमित्यर्थः। आख्यातं कथितम्।
कुतो नामभेदत इत्याह। प्रतिज्ञाहानीत्यादि। हानिस्त्यागः,
संन्यासो ऽपह्नवनं, विरोधो हेतोर्विरुद्धता। तेषां द्वन्द्वे हेतु-
संन्यासविरोधाः। ततः प्रतिज्ञाशब्देनेत्थं संबन्धः, प्रतिज्ञायाः 20
प्रसक्तस्य हानिसंन्यासविरोधाः प्रतिज्ञाहानिसंन्यासविरोधास्ते।

आदिर्येषां ते प्रतिज्ञाहानिसंन्यासविरोधादयः । आदिशब्देन शेषानपि भेदान्परान्सूचयति । तेषां विभेदतो विशिष्टभेदतः । येन प्रतिज्ञाहान्यादिदूषणजालेन परो निगृह्यते, तन्निग्रहस्थानमित्यर्थः ॥ निग्रहस्थानं च सामान्यतो द्विविधं, विप्रतिपत्तिरप्रतिपत्तिश्च । तत्र विप्रतिपत्तिः साधनाभासे साधनबुद्धिः दूषणाभासे च दूषणबुद्धिः । अप्रतिपत्तिस्तु साधनस्यादूषणं दूषणस्य चानुद्धरणम् । द्विधा हि वादी पराजीयते । यथा । कर्तव्यमप्रतिपद्यमानो विपरीतं वा प्रतिपद्यमान इति विप्रतिपत्त्यप्रतिपत्तिभेदाच्च द्वाविंशतिर्निग्रहस्थानानि भवन्ति । तद्यथा । प्रतिज्ञाहानिः १, प्रतिज्ञान्तरं २, प्रतिज्ञाविरोधः ३, प्रतिज्ञासंन्यासः ४, हेत्वन्तरं ५, अर्थांतरं ६, निरर्थकं ७, अविज्ञातार्थं ८, अपार्थकं ९, अप्राप्तकालं १०, न्यूनं ११, अधिकं १२, पुनरुक्तं १३, अननुभाषणं १४, अज्ञानं १५, अप्रतिभा १६, विक्षेपः १७, मतानुज्ञा १८, पर्यनुयोज्योपेक्षणं १९, निरनुयोज्यानुयोगः २०, अपसिद्धान्तः २१, हेत्वाभासाश्च २२ ॥ अत्राप्यननुभाषणमज्ञानमप्रतिभा विक्षेपः पर्यनुयोज्योपेक्षणमित्यप्रतिपत्तिप्रकाराः, शेषाश्च विप्रतिपत्तिभेदाः ॥

तत्र हेतावनैकान्तिकीकृते प्रतिदृष्टान्तधर्मं स्वदृष्टान्तेऽभ्युपगच्छतः प्रतिज्ञाहानिर्नाम निग्रहस्थानं भवति । अनित्यः शब्द ऐन्द्रियकत्वाद्घटवदिति साधनं वादी वदन्, परेण सामान्यमैन्द्रियकमपि नित्यं दृष्टमिति हेतावनैकान्तिकीकृते यद्येवं ब्रूया-

सामान्यवद्दृष्टो ऽपि नित्यो भवत्विति, स एवं ब्रुवाणः शब्दनि-
त्यत्वप्रतिज्ञां जह्यात्। शब्दो ऽपि नित्य एव स्यात्। ततः
प्रतिज्ञाहान्या पराजीयते ॥ १ ॥

प्रतिज्ञार्थप्रतिषेधे परेण कृते तत्रैव धर्मिणि धर्मान्तरं
साधनीयमभिदधतः प्रतिज्ञान्तरं नाम निग्रहस्थानं भवति। 5
अनित्यः शब्द ऐन्द्रियकत्वादित्युक्ते तथैव सामान्येन व्यभिचारे
नोदिते यदि ब्रूयाद्युक्तं यत्सामान्यमैन्द्रियकं नित्यं तद्धि सर्व-
गतमसर्वगतस्तु शब्द इति। सो ऽयमनित्यः शब्द इति
पूर्वप्रतिज्ञातः प्रतिज्ञान्तरमसर्वगतः शब्द इति प्रतिजानानः
प्रतिज्ञान्तरेण निगृहीतो भवति ॥ २ ॥ 10

प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधो नाम निग्रहस्थानं
भवति। गुणव्यतिरिक्तं द्रव्यं रूपादिभ्यो ऽर्थान्तरस्यानुपलब्धे-
रिति सो ऽयं प्रतिज्ञाहेत्वोर्विरोधः। यदि हि गुणव्यतिरिक्तं
द्रव्यं, न तर्हि रूपादिभ्यो ऽर्थान्तरस्यानुपलब्धिः। अथ
रूपादिभ्यो ऽर्थान्तरस्यानुपलब्धिः, कथं गुणव्यतिरिक्तं द्रव्य- 15
मिति। तदयं प्रतिज्ञाविरुद्धाभिधानात्पराजीयते ॥ ३ ॥

पक्षसाधने परेण दूषिते तदुद्धरणाशक्त्या प्रतिज्ञामेव
निह्नुवानस्य प्रतिज्ञासंन्यासो नाम निग्रहस्थानं भवति। अनित्यः
शब्द ऐन्द्रियकत्वादित्युक्ते तथैव सामान्येनानैकान्तिकतायामु-
द्भावितायां यदि ब्रूयात्क एवमाह अनित्यः शब्द इति प्रति- 20
ज्ञासंन्यासात्पराजितो भवति ॥ ४ ॥

अविशेषाभिहिते हेतौ प्रतिषिद्धे तद्विशेषणमभिदधतो

हेत्वन्तरं नाम निग्रहस्थानं भवति । तस्मिन्नेव प्रयोगे तथैव सामान्यस्य व्यभिचारेण दूषिते जातिमत्त्वे सतीत्यादि विशेषणमुपाददानो हेत्वन्तरेण निगृहीतो भवति ॥ ५ ॥

प्रकृतादर्थादन्यो ऽर्थो ऽर्थान्तरं तदनौपयिकमभिदधतो
5 ऽर्थान्तरं नाम निग्रहस्थानं भवति । अनित्यः शब्दः कृतकत्वादिति हेतुः । हेतुरिति च हिनोतेर्धातोस्तु प्रत्यये कृदन्तं पदम् । पदं च नामाख्यातोपसर्गनिपातभेदाच्चतुर्विधमिति प्रस्तुत्य नामादीनि व्याचक्षाणः प्रकृतानुपयोगिनार्थान्तरेण निगृह्यत इति ॥ ६ ॥

10 अभिधेयरहितवर्णानुपूर्वीप्रयोगमात्रं निरर्थकं नाम निग्रहस्थानं भवति । अनित्यः शब्दः कचटतपानां गजडदबत्वात् घझढधभवदित्येतदपि सर्वथार्थशून्यत्वान्निग्रहाय भवति साध्यानुपयोगाद्वा ॥ ७ ॥

यत्साधनवाक्यं दूषणं वा त्रिरभिहितमपि पर्षत्प्रति-
15 वादिभ्यां बोद्धुं न शक्यते, तत् क्लिष्टशब्दमप्रसिद्धप्रयोगमतिद्रुतोच्चारितमित्येवंप्रकारमविज्ञातार्थं नाम निग्रहस्थानं भवति । असामर्थ्यसंवरणप्रकारो ह्ययमिति निगृह्यते ॥ ८ ॥

पूर्वापरासंगतपदसमूहप्रयोगादप्रतिष्ठितवाक्यार्थमपार्थकं नाम निग्रहस्थानं भवति । यथा दश दाडिमानि षडपूपाः कुण्डम-
20 जाजिनं पललपिण्ड इत्यादि ॥ ९ ॥

प्रतिज्ञाहेतूदाहरणोपनयनिगमनवचनक्रममुल्लङ्घ्यावयवविपर्या-सेन प्रयुज्यमानमनुमानवाक्यमप्राप्तकालं नाम निग्रहस्थानं

*भवति, स्वप्रतिपत्तिवत्परप्रतिपत्तेर्जनने परार्थानुमानक्रमस्यापगमात्* ॥ १० ॥

पञ्चावयवे वाक्ये प्रयोक्तव्ये तदन्यतमेनाप्यवयवेन हीनं प्रयुञ्जानस्य न्यूनं नाम निग्रहस्थानं भवति, प्रतिज्ञादीनां पञ्चानामपि परप्रतिपत्तिजनकत्वाभ्युपगमादिति ॥ ११ ॥ 5

एकेनैव हेतुनोदाहरणेन वा प्रतिपादिते ऽर्थे हेत्वन्तरमुदाहरणान्तरं वा वदतो ऽधिकं नाम निग्रहस्थानं भवति, निष्प्रयोजनाभिधानात् ॥ १२ ॥

शब्दार्थयोः पुनर्वचनं पुनरुक्तं नाम निग्रहस्थानं भवति, अन्यत्रानुवादात्। शब्दपुनरुक्तं नाम, यत्र स एव शब्दः पुनरुच्चार्यते, यथानित्यः शब्दो ऽनित्यः शब्द इति। अर्थपुनरुक्तं तु, यत्र सो ऽर्थः प्रथममन्येन शब्देनोच्चार्यते पुनस्तु पर्यायान्तरेणोच्यते, यथानित्यः शब्दो विनाशी ध्वनिरिति। अनुवादे तु पौनरुक्त्यं न दोषो, यथा हेत्वपदेशेन प्रतिज्ञायाः पुनर्वचनं निगमनमिति ॥ १३ ॥ 10 15

पर्षदा विदितस्य वादिना त्रिरभिहितस्यापि यदप्रत्युच्चारणं, तदननुभाषणं नाम प्रतिवादिनो निग्रहस्थानं भवति। अप्रत्युच्चारयन् किमाश्रयं दूषणमभिदधीत ॥ १४ ॥

पर्षदा विज्ञातस्यापि वादिवाक्यार्थस्य प्रतिवादिनो यदज्ञानं, तदज्ञानं नाम निग्रहस्थानं भवति। अविदितोत्तरविषयो हि किमुत्तरं ब्रूयात्। न चाननुभाषणमेवेदं ज्ञाते ऽपि वस्तुन्यनुभाषणासामर्थ्यदर्शनात् ॥ १५ ॥ 20

परपक्षे गृहीते ऽप्यनुभाषिते ऽपि तस्मिन्नुत्तराप्रतिपत्तिर-प्रतिभा निग्रहस्थानं भवति ॥ १६ ॥

कार्यव्यासङ्गात्कथाविच्छेदो विक्षेपो नाम निग्रहस्थानं भवति। सिसाधयिषितस्यार्थस्याशक्यसाधनतामवसाय कथां 5 विच्छिनत्ति। इदं मे करणीयं परिहीयते पीनसेन कण्ठ उपरुद्ध इत्याद्यभिधाय कथां विच्छिन्दन् विक्षेपेण पराजी-यते ॥ १७ ॥

स्वपक्षे परापादितदोषमनुद्धृत्य तमेव परपक्षे प्रतीपमापा-दयतो मतानुज्ञा नाम निग्रहस्थानं भवति। चौरो भवान्पु-10 रुषत्वात् प्रसिद्धचौरवदित्युक्ते भवानपि चौरः पुरुषत्वादिति प्रतिब्रुवन्नात्मनः परापादितं चौरत्वदोषमभ्युपगतवान् भवतीति मतानुज्ञया निगृह्यते ॥ १८ ॥

निग्रहप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणं नाम निग्रहस्थानं भवति। पर्यनुयोज्यो नाम निग्रहोपपत्त्यावश्यं नोदनीय इदं ते 15 निग्रहस्थानमुपनतमतो निगृहीतो ऽसीति वचनीयः। तमुपेक्ष्य न निगृह्णाति यः स पर्यनुयोज्योपेक्षणेन निगृह्यते ॥ १९ ॥

अनिग्रहस्थाने निग्रहस्थानानुयोगान्निरनुयोज्यानुयोगो नाम निग्रहस्थानं भवति। उपपन्नवादिनमप्रमादिनमनि-ग्रहार्हमपि निगृहीतोऽसीति यो ब्रूयात्, स एवमसद्भूतदो-20 षोद्भावनया निगृह्यते ॥ २० ॥

सिद्धान्तमभ्युपेत्यानियमात्कथाप्रसङ्गो ऽपसिद्धान्तो नाम निग्रहस्थानं भवभि। यः प्रथमं किंचित्सिद्धान्तमभ्युपगम्य

कथामुपक्रमते तत्र च सिसाधयिषितार्थसाधनाय वा परोपल-म्भाय वा सिद्धान्तविरुद्धमभिधत्ते, सो ऽपसिद्धान्तेन निगृह्यते। यथा मीमांसामभ्युपगम्य कश्चिदग्निहोत्रं स्वर्गसाधनमित्याह। कथं पुनरग्निहोत्रक्रिया ध्वस्ता सती स्वर्गस्य साधिका भवती-त्यनुयुक्तः प्राह। अनया क्रियया राधितो महेश्वरः फलं 5 ददाति राजादिवदिति। तस्य मीमांसानभिमतेश्वरस्वीकारा-दपसिद्धान्तो नाम निग्रहस्थानं भवति ॥ २१ ॥

हेत्वाभासाश्च यथोक्ता असिद्धविरुद्धादयो निग्रहस्थानम् ॥ २२ ॥

इति भेदान्तरानन्त्ये ऽपि निग्रहस्थानानां द्वाविंशतिर्मूल- 10 भेदा निवेदिता इति। तदेवं छलजातिनिग्रहस्थानस्वरूपभे-दाभिज्ञः स्ववाक्ये तानि वर्जयन्परप्रयुक्तानि समादधच्च यथाभि-मतसाध्यसिद्धिं लभत इति ॥

अत्रानुक्तमपि किंचिन्निगद्यते। अर्थोपलब्धिहेतुः प्रमाणम्। एकात्मसमवायिज्ञानान्तरवेद्यं ज्ञानं प्रमाणाद्भिन्नं फलं, पूर्वं 15 प्रमाणमुत्तरं तु फलम्। स्मृतेरप्रामाण्यम्। परस्परविभक्तौ सामान्यविशेषौ नित्यानित्यत्वे सदसदंशौ च। प्रमाणस्य विषयः पारमार्थिकः। तमश्छाये अद्रव्ये। आकाशगुणः शब्दो ऽपौद्ग-लिकः। संकेतवशादेव शब्दादर्थप्रतीतिर्न पुनस्तत्प्रतिपादनसा-मर्थ्यात्। धर्मधर्मिणोर्भेदः सामान्यमनेकवृत्ति। आत्मविशेष- 20 गुणलक्षणं कर्म। वपुर्विषयेन्द्रियबुद्धिसुखदुःखानामुच्छेदादात्म-संस्थानं मुक्तिरिति ॥ न्यायसारे पुनरेवं नित्यसंवेद्यमानेन

सुखेन विशिष्टात्यन्तिकी दुःखनिवृत्तिः पुरुषस्य मोक्ष इति ॥

एषां तर्कग्रन्था न्यायसूत्र-भाष्यन्यायवार्तिक-तात्पर्यटीका-तात्पर्यपरिशुद्धि-न्यायालंकारवृत्तयः । क्रमेणाक्षपादवात्स्यायनो-
5 द्योतकरवाचस्पतिश्रीउद्यनश्रीकण्ठाभयतिलकोपाध्यायविरचि-ताः ५४००० । भासर्वज्ञप्रणीते न्यायसारे ऽष्टादश टीकाः॥
तासु मुख्या टीका न्यायभूषणाख्या न्यायकलिका जयन्त-रचिता न्यायकुसुमाञ्जलितर्कश्च ॥

अथ तन्मतमुपसंहरन्नुत्तरं च मतमुपक्षिपन्नाह

10 **नैयायिकमतस्यैष समासः कथितो ऽञ्जसा ।**
**सांख्याभिमतभावानामिदानीमयमुच्यते ॥ ३३ ॥**

एषो ऽनन्तरोदितो नैयायिकमतस्य समासः संक्षेपः कथित उक्तो ऽञ्जसा प्राग् सांख्याभिमतभावानां सांख्याः कापिलास्ते-षामभिमता अभिष्टा भावा ये पञ्चविंशतितत्त्वादयः पदार्था-
15 स्तेषामयं समास इदानीमुच्यते ॥

इतिश्रीतपागणनभोगणदिनमणिश्रीदेवसुन्दरसूरिपदपद्मो-पजीवश्रीगुणरत्नसूरिविरचितायां तर्करहस्यदीपिकाभिधानायां षड्दर्शनसमुच्चयवृत्तौ नैयायिकमतस्वरूपप्रकटनो नाम द्वितीयो ऽधिकारः ॥

---

# तृतीयो ऽधिकारः ।

अथादौ सांख्यमतप्रपन्नानां परिज्ञानाय लिङ्गादिकं निगद्यते । त्रिदण्डा एकदण्डा वा कौपीनवसना धातुरक्ताम्बराः शिखावन्तो जटिनः क्षुरमुण्डा मृगचर्मासना द्विजगृहाशनाः पञ्चग्रासीपरा वा द्वादशाक्षरजापिनः परिव्राजकादयः । तद्भक्ता वन्दमाना ओं नमो नारायणायेति वदन्ति, ते तु नारायणाय नम इति प्राहुः । तेषां च महाभारते वीटेति ख्याता दारवी मुखवस्त्रिका मुखनिःश्वासनिरोधिका भूतानां दयानिमित्तं भवति । यदाहुस्ते ।

घ्राणादितो ऽनुयातेन श्वासेनैकेन जन्तवः ।
हन्यन्ते शतशो ब्रह्मन्नणुमात्राक्षरवादिनाम् ॥ १ ॥

ते च जलजीवदयार्थं स्वयं गलनकं धारयन्ति, भक्तानां चोपदिशन्ति ।

षट्त्रिंशदङ्गुलायामं विंशत्यङ्गुलविस्तृतम् ।
दृढं गलनकं कुर्याद्भूयो जीवान्विशोधयेत् ॥ १ ॥
म्रियन्ते मिष्टतोयेन पूतराः क्षारसंभवाः ।
क्षारतोयेन तु परे न कुर्यात्संकरं ततः ॥ २ ॥
लूतास्यतन्तुगलिते ये बिन्दौ सन्ति जन्तवः ।
सूक्ष्मा भ्रमरमानास्ते नैव मान्ति त्रिविष्टपे ॥ ३ ॥

इति गलनकविचारो मीमांसायाम् । सांख्याः केचिदीश्वरदेवाः, अपरे च निरीश्वराः । ये च निरीश्वरास्तेषां नारायणो देवः । तेषामाचार्या विष्णुप्रतिष्ठाकारकाश्चैतन्यप्रभृतिशब्दैरभिधीयन्ते । तेषां मतवक्तारः कपिलासुरिपञ्चशिखभार्गवोलूकादयः । ततः सांख्याः कापिला इत्यादिनामभिरभिधीयन्ते । तथा कपिलस्य परमर्षिरिति द्वितीयं नाम, तेन तेषां पारमर्षा इत्यपि नाम ज्ञातव्यम् । वाराणस्यां तेषां प्राचुर्यम् । बहवो मासोपवासिका ब्राह्मणा अर्चिर्मार्गविरुद्धधूममार्गानुगामिनः । सांख्यास्त्वर्चिर्मार्गानुगाः । तत एव ब्राह्मणा देवप्रिया यज्ञमार्गानुगाः । सांख्यास्तु हिंसाद्वेषविरता अध्यात्मवादिनः । ते च स्वमतस्य महिमानमेवमामनन्ति । तदुक्तं माठरप्रान्ते ।

हस पिब लल खाद मोद नित्यं  
भुंक्ष्व च भोगान् यथाभिकामम् ।  
यदि विदितं ते कपिलमतं  
तत्प्राप्स्यसि मोक्षसौख्यमचिरेण ॥ १ ॥

शास्त्रान्तरेऽप्युक्तम्

पञ्चविंशतितत्त्वज्ञो यत्र तत्राश्रमे रतः ।  
शिखी मुण्डी जटी वापि मुच्यते नात्र संशयः ॥ २ ॥

अथ शास्त्रकारः सांख्यमतमुपदर्शयति ।

**सांख्या निरीश्वराः केचित्केचिदीश्वरदेवताः ।**  
**सर्वेषामपि तेषां स्यात्तत्त्वानां पञ्चविंशतिः ॥ ३४ ॥**

केचित्सांख्या निर्गत ईश्वरो येभ्यस्ते निरीश्वराः, केवलाध्या-
त्मैकमानिनः । केचिदीश्वरदेवताः, ईश्वरो देवता येषां ते
तथा । तेषां सर्वेषामपि निरीश्वराणां सेश्वराणां चोभयेषामपि
तत्त्वानां पञ्चविंशतिः स्यात् । सांख्यमते किल दुःखत्रयाभि-
हतस्य पुरुषस्य तदुपघातहेतुस्तत्त्वजिज्ञासोत्पद्यते । आध्यात्मि- 5
कमाधिदैविकमाधिभौतिकं चेति दुःखत्रयम् । तत्राध्यात्मिकं
द्विविधं, शारीरं मानसं च । तत्र वातपित्तश्लेष्मणां वैषम्यनि-
मित्तं यद्दुःखमात्मानं देहमधिकृत्य ज्वरातीसारादि समुत्पद्यते,
तच्छारीरम् । मानसं च कामक्रोधलोभमोहेर्ष्याविषयादर्शन-
निबन्धनम् । सर्वं चैतदान्तरोपायसाध्यत्वादाध्यात्मिकं दुःखम् । 10
बाह्योपायसाध्यं दुःखं द्वेधा, आधिभौतिकमाधिदैविकं चेति ।
तत्राधिभौतिकं मानुषपशुपक्षिमृगसरीसृपस्थावरनिमित्तं, आ-
धिदैविकं यक्षराक्षसग्रहाद्यावेशहेतुकम् । अनेन दुःखत्रयेण
रजःपरिणामभेदेन बुद्धिवर्तिनाभिहतस्य प्राणिनस्तत्त्वानां
जिज्ञासा भवति दुःखविघाताय । तत्त्वानि च पञ्चविंशति- 15
र्भवन्ति ॥

अथ तत्त्वपञ्चविंशतिमेव विवक्षुरादौ सत्त्वादिगुणस्वरूप-
माह ।

सत्त्वं रजस्तमश्चेति ज्ञेयं तावद्गुणत्रयम् ।
प्रसादतापदैन्यादिकार्यलिङ्गं क्रमेण तत् ॥ ३५ ॥ 20

तावच्छन्दः प्रक्रमे । तेषु पञ्चविंशतौ तत्त्वेषु सत्त्वं सुखलक्षणं, रजो दुःखलक्षणं, तमश्च मोहलक्षणमित्येवं प्रथमं तावद्गुणत्रयं ज्ञेयम् । तस्य गुणत्रयस्य कानि लिङ्गानीत्याह । "प्रसाद" इत्यादि । तत्सत्त्वादिगुणत्रयं क्रमेण प्रसादतापदैन्यादि-
5 कार्यलिङ्गम् । प्रसादः प्रसन्नता, तापः संतापः, दैन्यं दीनवचनादिहेतुर्विमनस्कता । इन्द्वे प्रसादतापदैन्यानि, तानि आदिः प्रकारो येषां कार्याणां, तानि प्रसादतापदैन्यादीनि कार्याणि, लिङ्गं गमकं चिह्नं यस्य तत्प्रसादतापदैन्यादिकार्यलिङ्गम् । अयं भावः । प्रसादबुद्धिपाटवलाघवप्रसवानभिष्वङ्गाद्वेषप्रीत्या-
10 दयः कार्यं सत्त्वस्य लिङ्गम् । तापशोषभेदचलचित्ततास्तम्भोद्वेगाः कार्यं रजसो लिङ्गम् । दैन्यमोहमरणसादनबीभत्साज्ञानागौरवादीनि कार्यं तमसो लिङ्गम् । एभिः कार्यैः सत्त्वादीनि ज्ञायन्ते । तथाहि । लोके यः कश्चित्सुखमुपलभते स आर्जवमार्दवसत्यशौचह्रीबुद्धिक्षमानुकम्पाप्रसादादिलाग्नं भवति । तत्स-
15 त्त्वम् । यः कश्चिद्दुःखमुपलभते, स तदा द्वेषद्रोहमत्सरनिन्दावञ्चनबन्धनतापादिलाग्नं भवति । तद्रजः । यः कश्चित्कदापि मोहं लभते, सो ऽज्ञानमदालस्यभयदैन्याकर्मण्यतानास्तिकताविषादोन्मादस्वप्नादिलाग्नं भवति । तत्तम इति । सत्त्वादिभिश्च परस्परोपकारिभिस्त्रिभिरपि गुणैः सर्वं जगद्व्याप्तं विद्यते ;
20 परमूर्ध्वलोके प्रायो देवेषु सत्त्वस्य बहुलता, अधोलोके तिर्यक्षु नारकेषु च तमोबहुलता ; नरेषु रजोबहुलता, यद्दुःखप्राया मानुष्या भवन्ति । यदुक्तम् [ सांख्यकारिका ५४ ] ।

ऊर्ध्वं सत्त्वविशालस्तमोविशालश्च मूलतः सर्गः ।
मध्ये रजोविशालो ब्रह्मादिस्तम्बपर्यन्तः ॥ १ ॥

अत्र ब्रह्मादिस्तम्बपर्यन्त इति ब्रह्मादिपिशाचान्तो ऽष्टविधः सर्ग इति ॥

**एतेषां या समावस्था सा प्रकृतिः किलोच्यते ।** 5
**प्रधानाव्यक्तशब्दाभ्यां वाच्या नित्यस्वरूपिका ॥ ३६ ॥**

एतेषां सत्त्वादिगुणानां या समा तुल्यप्रमाणा अवस्था अवस्थानं, सा सत्त्वादीनां समावस्थैव प्रकृतिरुच्यते । किलेति पूर्ववार्तायाम् । सत्त्वरजस्तमसां गुणानां कचिद्द्वेवादौ कस्यचिदाधिक्ये ऽपि मिथः प्रमाणापेक्षया त्रयाणामपि समानावस्था 10 प्रकृतिः कीर्त्यत इत्यर्थः । प्रधानाव्यक्तशब्दाभ्यां वाच्या, सा च प्रकृतिः प्रधानमव्यक्तं चोच्यते नामान्तराभ्याम् । नित्यमप्रच्युतानुत्पन्नस्थिरैकस्वभावं कूटस्थं स्वरूपं यस्याः सा नित्यस्वरूपिका, अविचलितस्वरूपेत्यर्थः । अत एव सानवयवासाधारणशब्दास्पर्शरसरूपगन्धाव्यया चोच्यते । मौलिक्यसांख्या ह्यात्मान- 15 मात्मानं प्रति पृथक् प्रधानं वदन्ति, उत्तरे तु सांख्याः सर्वात्मस्वप्येकं नित्यं प्रधानमिति प्रपन्नाः ॥

प्रकृत्यात्मसंयोगात्सृष्टिर्जायते । अतः सृष्टिक्रममेवाह ।

**ततः संजायते बुद्धिर्महानिति यकोच्यते ।**
**अहंकारस्ततो ऽपि स्यात्तस्मात्षोडशको गणः ॥३७॥** 20

ततः प्रकृतेर्बुद्धिः संजायत उत्पद्यते, सा च गवादौ पुरो दृश्यमाने गौरेवायं नाश्वः, स्थाणुरेवायं न पुरुष इति विषयनिश्चयाध्यवसायरूपा। महानिति यका प्रोच्यते महदाख्यया याभिधीयते। बुद्धेश्च तस्या अष्टौ रूपाणि। धर्मज्ञानवैराग्यैश्वर्यरूपाणि चत्वारि सात्त्विकानि, अधर्मादीनि तु तत्प्रतिपक्षभूतानि चत्वारि तामसानीति। ततो ऽपि बुद्धेरहंकारः स्यादुत्पद्यते। स चाहं सुभगः, अहं दर्शनीय इत्याद्यभिमानरूपः। तस्मादहंकारात्षोडशको गण उत्पद्यते। षोडशसंख्यामानमस्य षोडशको गणः समुदायः॥

अथ षोडशसंख्यं गणं श्लोकद्वयेनाह।

**स्पर्शनं रसनं घ्राणं चक्षुः श्रोत्रं च पञ्चमम्।**
**पञ्च बुद्धीन्द्रियाण्यत्र तथा कर्मेन्द्रियाणि च॥ ३८॥**
**पायूपस्थवचःपाणिपादाख्यानि मनस्तथा।**
**अन्यानि पञ्च रूपादितन्मात्राणीति षोडश॥ ३९॥**

युग्मम्॥ स्पर्शनं त्वक्, रसनं जिह्वा, घ्राणं नासिका, चक्षुर्लोचनं, श्रोत्रं च श्रवणं पञ्चमम्। एतानि पञ्च बुद्धीन्द्रियाण्यत्र षोडशके गणे भवन्ति। स्वं स्वं विषयं बुध्यन्त इति कृत्वेन्द्रियाण्येव बुद्धीन्द्रियाणि प्रोच्यन्ते। तथाहि। स्पर्शनं स्पर्शविषयं बुध्यते, एवं रसनं रसं, घ्राणं गन्धं, चक्षू रूपं, श्रोत्रं च शब्दमिति। तथाशब्दः पञ्चेतिपदस्यानुकर्षणार्थः। पञ्चसंख्यानि

कर्मकारणत्वात्कर्मेन्द्रियाणि च कानि तानीत्याह। "पायूपस्थ-
वचःपाणिपादाख्यानि"। तत्र पायुर्गुदं, उपस्थः स्त्रीपुंचिह्न-
द्वयं, वचनमुच्यतेऽनेनेति वचः, उरःकण्ठादिस्थानाष्टतया
वचनमुच्चारयति। पाणी पादौ च प्रसिद्धौ। एतैर्मलोत्सर्गसंभोग-
वचनादानचलनादीनि कर्माणि क्रियन्तीति कर्मेन्द्रियाण्युच्यन्ते। 5
तथाशब्दः समुच्चये। एकादशं मनश्च, मनो हि बुद्धीन्द्रियमध्ये
बुद्धीन्द्रियं भवति, कर्मेन्द्रियमध्ये कर्मेन्द्रियम्। तच्च तत्त्वार्थ-
मन्तरेणापि संकल्पयन्ति। तद्यथा। कश्चिद्बटुः शृणोति "ग्रामा-
न्तरे भोजनमस्ति" इति, तत्र तस्य संकल्पः स्यात् "तत्र
यास्यामि तत्र चाहं किं गुडदधिरूपं भोजनं लप्स्य उतस्विद्दधि 10
किं वा किमपि न" इत्येवंरूपं मन इति। तथाहंकारादन्यान्य-
पराणि रूपाणि तन्मात्राणि सूक्ष्मसंज्ञानि पञ्चोत्पद्यन्ते। तत्र
रूपतन्मात्रं शुक्लकृष्णादिरूपविशेषः, रसतन्मात्रं तिक्तादिरस-
विशेषः, गन्धतन्मात्रं सुरभ्यादिगन्धविशेषः, शब्दतन्मात्रं मधु-
रादिशब्दविशेषः, स्पर्शतन्मात्रं मृदुकठिनादिस्पर्शविशेषः। 15
इति षोडश। अयं षोडशको गण इत्यर्थः॥

अथ तन्मात्रेभ्यः पञ्चभूतान्युत्पद्यन्त इत्याह।

**रूपात्तेजो रसादापो गन्धाद्भूमिः स्वरान्नभः।**
**स्पर्शाद्वायुस्तथैवं च पञ्चभ्यो भूतपञ्चकम्॥ ४०॥**

रूपतन्मात्रात्सूक्ष्मसंज्ञात्तेजो ऽग्निरुत्पद्यते, रसतन्मात्रादापो 20
जलानि जायन्ते, गन्धतन्मात्रात्पृथिवी समुत्पद्यते, स्वरान्नभ-

*तन्मात्रादाकाशमुद्भवति, तथा स्पर्शतन्मात्राद्वायुः प्रादुर्भवति ।* एवं च पञ्चभ्यस्तन्मात्रेभ्यो भूतपञ्चकं भवतीति ॥

**एवं चतुर्विंशतितत्त्वरूपं निवेदितं सांख्यमते प्रधानम् ।**
**अन्यस्त्वकर्ता विगुणश्च भोक्ता तत्त्वं पुमान्नित्यचिदभ्युपेतः॥ ४१ ॥**

5 एवमनुनोक्तप्रकारेण सांख्यमते चतुर्विंशतितत्त्वरूपं प्रधानम् । प्रकृतिर्महानहंकारश्चेति त्रयं, पञ्च बुद्धीन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, मनश्चैकं, पञ्च तन्मात्राणि, पञ्च भूतानि चेति चतुर्विंशतितत्त्वानि रूपं स्वरूपं यस्य, तच्चतुर्विंशतितत्त्वरूपं प्रधानं प्रकृतिर्निवेदितम् । तथा चोक्तम् [ सांख्यकारिका २ २ ] ।

10 प्रकृतेर्महांस्ततो ऽहंकारस्तस्माद्गणश्च षोडशकः ।
तस्मादपि षोडशकात्पञ्चभ्यः पञ्च भूतानि ॥ इति ॥

अत्र प्रकृतिर्न विकारः, अनुत्पन्नत्वात् । बुद्ध्यादयश्च सप्त परेषां कारणतया प्रकृतयः, कार्यतया च विकृतय उच्यन्ते । षोडशकश्च गणो विकृतिरेव कार्यत्वात् । पुरुषस्तु न प्रकृतिर्न 15 विकृतिः, अनुत्पादकत्वादनुत्पन्नत्वाच्च । तथा चेश्वरकृष्णः सांख्यसप्तत्यां [ ३ ] ।

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥ १ ॥ इति ॥

तथा महदादयः प्रकृतेर्विकारास्ते च व्यक्ताः सन्तः 20 पुनरव्यक्ता अपि भवन्तीति स्वरूपाप्रच्यवमानित्यत्वात् । प्रकृति-

स्वविकृता मित्यभ्युपगम्यते । ततो न कदाचिदपि सा स्वस्वरू-
पाद्भ्रश्यति । तथा च महदादिकस्य प्रकृतेश्च स्वरूपं सांख्यैरि-
त्थमूचे [ सांख्यकारिका १० ] ।

हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् ।
सावयवं परतन्त्रं व्यक्तं, विपरीतमव्यक्तम् ॥ १ ॥ इति ॥

तत्र हेतुमत्कारणवन्महदादिकं, अनित्यमित्युत्पत्तिधर्म-
कत्वाद्घटादेः, अव्यापीति प्रतिनियतं न सर्वगं, सक्रियमिति
सह क्रियाभिरध्यवसायादिभिर्वर्तत इति सक्रियं, सव्यापारं
संचरणक्रियावदिति यावत्, अनेकमिति त्रयोविंशतिभेदा-
त्मकं, आश्रितमित्यात्मोपकारकत्वेन प्रधानमवलम्ब्य स्थितं,
लिङ्गमिति यद्यस्मादुत्पन्नं तत्तस्मिन्नेव लयं क्षयं गच्छतीति
लिङ्गम् । तत्र भूतानि तन्मात्रेषु लीयन्ते, तन्मात्राणीन्द्रि-
याणि मनश्चाहंकारे, स च बुद्धौ, सा चाव्यक्ते, तच्चानुत्पाद्य-
त्वान्न क्वचित्प्रलीयते । सावयवमिति शब्दस्पर्शरूपरसगन्धात्मकै-
रवयवैर्युक्तत्वात्, परतन्त्रमिति कारणायत्तत्वादित्येवंरूपं
व्यक्तं महदादिकम् । अव्यक्तं तु प्रकृत्याख्यम् । एतद्विपरीत-
मिति । तत्र विपरीतता सुयोज्यैव । नवरं प्रधानं दिवि
भुव्यन्तरिक्षे च सर्वत्र व्यापितया वर्तत इति व्यापित्वं तस्य,
तथाव्यक्तस्य व्यापकत्वेन संचरणरूपायाः क्रियाया अभावान्नि-
क्रियत्वं च द्रष्टव्यमिति दिङ्मात्रमिदं दर्शितम् । विशेषव्याख्यानं
तु सांख्यसप्तत्यादेस्तद्व्याख्यानादवसेयमिति ॥ अथ पञ्चविंशतितमं
पुरुषतत्त्वमाह "अन्यस्त्वकर्ता" इत्यादि । प्रकृतेश्चतुर्विंशतितत्त्व-

रूपाया अन्यस्तु पृथग्भूतः, पुनरकर्ता विगुणो भोक्ता नित्यचि-
दभ्युपेतश्च पुमान्पुरुषस्तत्त्वम् । तथात्मा विषयसुखादिकं तत्का-
रणं पुण्यादिकर्म च न करोतीत्यकर्ता, आत्मनस्तृणमात्र-
कुब्जीकरणे ऽप्यसमर्थत्वात् । कर्त्री तु प्रकृतिरेव, तस्याः प्रवृ-
5 त्तिस्वभावत्वात् । तथा विगुणः सत्त्वादिगुणरहितः, सत्त्वादीनां
प्रकृतिधर्मत्वादात्मनस्तु तदभावात् । तथा भोक्ता अनुभविता ।
भोक्तापि साक्षान्न भोक्ता, किं तु प्रकृतिविकारभू-
तायां उभयमुखदर्पणाकारायां बुद्धौ संक्रान्तानां सुख-
दुःखादीनां पुरुषः स्वात्मनि निर्मले प्रतिबिम्बोदयमात्रेण
10 भोक्ता व्यपदिश्यते, बुद्ध्यध्यवसितमर्थं पुरुषश्चेतयत इति
वचनात् । यथा जपाकुसुमादिसंनिधानवशात्स्फटिके रक्त-
तादि व्यपदिश्यते, तथा प्रकृत्युपधानवशात्सुखदुःखाद्यात्म-
कानामर्थानां पुरुषस्य भोक्तृत्वं युक्तमेव व्यपदिश्यते ।
वादमहार्णवो ऽप्याह । बुद्धिदर्पणसंक्रान्तमर्थप्रतिबिम्बकं
15 द्वितीयदर्पणकल्पे पुंस्यध्यारोहति; तदेव भोक्तृत्वमस्य, न
त्वात्मनो विकारापत्तिरिति ॥

तथा चासुरिः ।

विविक्तेदृक्परिणतौ बुद्धौ भोगो ऽस्य कथ्यते ।

प्रतिबिम्बोदयः स्वच्छे यथा चन्द्रमसो ऽम्भसि ॥ १ ॥

20 विन्ध्यवासी त्वेवं भोगमाचष्टे ।

पुरुषो ऽविकृतात्मैव स्वनिर्भासमचेतनम् ।

मनः करोति सांनिध्यादुपाधिः स्फटिकं यथा ॥२॥ इति ॥

यथा नित्या या चिचेतना तथाभ्युपेतः। इतीह पुरुषस्य चैतन्यमेव स्वरूपं, न तु ज्ञानं, ज्ञानस्य बुद्धिधर्मत्वादित्याबेदितं द्रष्टव्यम्। केवलमात्मा स्वं बुद्धेरव्यतिरिक्तमभिमन्यते। सुखदुःखादयश्च विषया इन्द्रियद्वारेण बुद्धौ संक्रामन्ति, बुद्धिश्चोभयमुखदर्पणाकारा, ततस्तस्यां चैतन्यशक्तिः प्रतिबिम्बते, 5
ततः सुख्यहं दुःख्यहं ज्ञाताहमित्युपचर्यते। आह च पतञ्जलिः।
"शुद्धो ऽपि पुरुषः प्रत्ययं बौद्धमनुपश्यति, तमनुपश्यन्नतदात्मापि तदात्मक इव प्रतिभासते" इति। बुद्धिश्चाचेतनापि चिच्छक्तिसन्निधानाच्चेतनावतीवावभासते" इति। पुमानित्यत्र
जात्यपेक्षयैकवचनम्। तेनात्मानेकोऽभ्युपगन्तव्यः, जन्ममरण- 10
करणानां नियमदर्शनाद्धर्मादिप्रवृत्तिनानात्वाच्च। ते च सर्वेऽप्यात्मानः सर्वगता नित्याश्चावसेयाः। उक्तं च।

अमूर्तश्चेतनो भोगी नित्यः सर्वगतोऽक्रियः।
अकर्ता निर्गुणः सूक्ष्म आत्मा कापिलदर्शने॥ इति॥

॥ तत्त्वान्युपसंहरन्नाह। 15

पञ्चविंशतितत्त्वानि संख्ययैवं भवन्ति च।
प्रधाननरयोश्चात्र वृत्तिः पंग्वन्धयोरिव॥ ४२॥

चकारो भिन्नक्रमः, एवं च संख्यया पञ्चविंशतितत्त्वानि भवन्ति। ननु प्रकृतिपुरुषावुभावपि सर्वगतौ मिथःसंयुक्तौ कथं
वर्तेते इत्याशंक्याह। प्रधानेत्यादि। प्रधानपुरुषयोश्चात्र विश्वे 20
पंग्वन्धयोरिव वृत्तिर्वर्तनम्। यथा कश्चिदन्धः सार्थेन समं

पाटलिपुत्रनगरं प्रस्थितः, स सार्थश्चौरैरभिद्रुतः। अन्धस्तत्रैव रहित इतश्चेतश्च धावन् वनान्तरस्थेन पङ्गुना दृष्टोऽभिहितश्च "भो भो अन्ध मा भैषीः, अहं पङ्गुर्गमनादिक्रियाविकलत्वे-नाक्रियश्चक्षुर्भ्यां सर्वं पश्यन्नस्मि, त्वं तु गमनादिक्रियावान्न पश्यसि"। अन्धेनोचे। "रुचिरमिदम्। अहं भवन्तं स्कन्धे करिष्यामि। एवमावयोर्वर्तनमस्तु" इति। ततोऽन्धेन पङ्गुर्दृक्-त्वगुणेन स्वं स्कन्धमधिरोपितो नगरं प्राप्य नाटकादिकं पश्यन् गीतादिकं चेन्द्रियविषयमन्यमप्युपलभमानो यथा मोदते, तथा पङ्गुकल्पः शुद्धचैतन्यस्वरूपः पुरुषोऽप्यन्धकल्पां जडां प्रकृतिं सक्रियामाश्रितो बुद्ध्यध्यवसितं शब्दादिकं स्वात्मनि प्रति-बिम्बितं चेतयमानो मोदते, मोदमानश्च प्रकृतिं सुखस्वभावां मोहान्मन्यमानः संसारमधिवसति॥

तर्हि तस्य कथं मुक्तिः स्यादित्याह।

**प्रकृतिवियोगो मोक्षः पुरुषस्य बतैतदन्तरज्ञानात्।**
**मानत्रितयं चात्र प्रत्यक्षं लैङ्गिकं शाब्दम्॥ ४३॥**

बतेति पृच्छकानामामन्त्रणे। एतयोः प्रकृतिपुरुषयोर्यद-न्तरं विवेकस्तस्य ज्ञानात्पुरुषस्य यः प्रकृतेर्वियोगो भवति, स मोक्षः। तथाहि।

शुद्धचैतन्यरूपोऽयं पुरुषः परमार्थतः।
प्रकृत्यन्तरमज्ञात्वा मोहात्संसारमाश्रितः॥ १॥

ततः प्रकृतेः सुखदुःखमोहस्वभावाया यावन्न विवेकेन ग्रहणं,

तावन्न मोक्षः, प्रकृतेर्विवेकदर्शने तु प्रवृत्तेरुपरतायां प्रकृतौ पुरुषस्य स्वरूपेणावस्थानं मोक्ष इति। मोक्षश्च बन्धविच्छेदाद्भवति। बन्धश्च प्राकृतिकवैकारिकदाक्षिणभेदात्त्रिविधः। तथाहि। प्रकृतावात्मज्ञानाद्ये प्रकृतिमुपासते, तेषां प्राकृतिको बन्धः। ये विकारानेव भूतेन्द्रियाहंकारबुद्धीः पुरुषबुद्ध्योपासते, तेषां वैकारिकः। इष्टापूर्ते दाक्षिणः। पुरुषतत्त्वानभिज्ञो हीष्टापूर्तकारी कामोपहतमना बध्यत इति। 5

इष्टापूर्तं मन्यमाना वरिष्ठं
नान्यच्छ्रेयो येऽभिनन्दन्ति मूढाः।
नाकस्य पृष्ठे ते सुकृतेन भूत्वा 10
इमं लोकं हीनतरं वा विशन्ति॥ इति॥

बन्धाच्च प्रेत्यसंचरणरूपः संसारः प्रवर्तते। सांख्यमते च पुरुषस्य प्रकृतिविकृत्यनात्मकस्य न बन्धमोक्षसंसाराः, किं तु प्रकृतेरेव। तथा च कापिलाः।

तस्मान्न बध्यते नैव मुच्यते नापि संसरति कश्चित्। 15
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः॥ इति।

नवरममी बन्धमोक्षसंसाराः पुरुष उपचर्यन्ते। यथा जयपराजयौ भृत्यगतावपि स्वामिन्युपचर्यते तत्फलस्य कोशलाभादेः स्वामिनि संबन्धात्, तथा भोगापवर्गयोः प्रकृतिगतयोरपि विवेकाग्रहात्पुरुषे संबन्ध इति॥ 20

अथ प्रमाणस्य सामान्यलक्षणमुच्यते। अर्थोपलब्धिहेतुः प्रमाणमिति॥ अथोत्तरार्धे मानत्रितयं च प्रमाणत्रितयं च,

अत्र सांख्यमते। किं तदित्याह। प्रत्यक्षं प्रतीतं, लिङ्गमनुमानं, शाब्दं चागमः। चकारोऽत्रापि संबन्धनीयः। तत्र प्रत्यक्षलक्षणमाख्यायते। श्रोत्रादिवृत्तिरविकल्पिका प्रत्यक्षमिति।

श्रोत्रं त्वक् चक्षुषी जिह्वा नासिका चेति पञ्चमी। इति श्रोत्रादीनीन्द्रियाणि, तेषां वृत्तिर्वर्तनं परिणाम इति यावत्, इन्द्रियाण्येव विषयाकारपरिणतानि प्रत्यक्षमिति किल तेषां सिद्धान्तः। अविकल्पिका नामजात्यादिकल्पनारहिता प्रत्यक्षमिताध्यवसायाध्याहार्येति। ईश्वरकृष्णस्तु "प्रतिनियताध्यवसायः श्रोत्रादिसमुत्थोऽध्यक्षम्" इति प्राह॥ अनुमानञ्च लिङ्गं लक्षणम्। पूर्ववच्छेषवत्सामान्यतोदृष्टं चेति त्रिविधमनुमानमिति। तत्र नद्युन्नतिदर्शनादुपरिवृष्टो देव इत्यनुमीयते यत्तत्पूर्ववत्। तथा समुद्रोदकबिन्दुप्राशनाच्छेषं जलं क्षारमनुमानेन ज्ञायते। तथा स्थाल्यां सिक्थैकचम्पनाच्छेषमन्नं पक्वमपक्वं वा ज्ञायते तच्छेषवत्। यत्सामान्यतोदृष्टं तल्लिङ्गलिङ्गिपूर्वकम्। यथा त्रिदण्डदर्शनाददृष्टोऽपि लिङ्गी परिव्राजकोऽत्रास्तीत्यवगम्यते। इति त्रिविधम्। अथवा तल्लिङ्गलिङ्गिपूर्वकमित्येवानुमानलक्षणं सांख्यैः समाख्यायते॥ शाब्दं त्वाप्तश्रुतिवचनम्। आप्ता रागद्वेषादिरहिता ब्रह्मसनत्कुमारादयः। श्रुतिर्वेदः। तेषां वचनं शाब्दम्॥

अथानुक्तमपि किंचिदुच्यते। चिच्छक्तिर्विषयपरिच्छेदशून्या नार्थं जानाति। बुद्धिश्च जडा न चेतयते। सन्निधानात्तयोरन्योन्यप्रतिभासनम्। प्रकृत्यात्मसंयोगात्सृष्टिरुपजायते। प्रकृतिविकारस्वरूपं कर्म। तथा चैतन्यरूपं सामान्यम्। प्रधान-

विपर्यस्तासिक इति। अथ त्रयो गुणाः सत्त्वरजस्तमांसि। ततः कार्यं सोऽनन्तादिरिति पक्षः, यथा त्रयो लोकास्त्रैलोक्यं षड्गुणाः षाड्गुण्यम्। ततस्त्रैगुण्यं रूपं स्वभावो यस्य सामान्यस्य, तत् त्रैगुण्यरूपमिति। प्रमाणस्य च फलमित्थम्। पूर्वं पूर्वं प्रमाणमुत्तरं तु फलमिति॥ तथा कारणे कार्यं सदेवोत्पद्यते असदकरणादिभ्यो हेतुभ्यः। तदुक्तम् (सांख्यकारिका ९)।

असदकरणादुपादानग्रहणात्सर्वसंभवाभावात्।
शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्यम्॥ इति॥

अत्र सर्वसंभवाभावादिति। यद्यसत्कार्यं स्यात्तदा सर्वं सर्वत्र भवेत्। ततश्च तृणादिभ्योऽपि सुवर्णादीनि भवेयुः। न च भवन्ति। तस्मात्कारणे कार्यं सदेव। तथा द्रव्याण्येव केवलानि सन्ति, न पुनरुत्पत्तिविपत्तिधर्माणः पर्यायाः केऽपि, आविर्भावतिरोभावमात्रत्वात्तेषामिति॥

सांख्यानां तर्कग्रन्थाः षष्टितन्त्रोद्धाररूपं, माठरभाष्यं, सांख्यसप्ततिनामकं, तत्त्वकौमुदी गौडपादं, आत्रेयतन्त्रं चेत्यादयः॥

सांख्यमतमुपसंजिहीर्षुरुत्तरत्र जैनमतमभिधित्सुराह

**एवं सांख्यमतस्यापि समासो गदितोऽधुना।**
**जैनदर्शनसंक्षेपः कथ्यते सुविचारवान्॥ ४४॥**

एवमुक्तविधिना सांख्यमतस्यापि न केवलं बौद्धनैयायिकयोरित्यपिशब्दार्थः। समासः संक्षेपोऽधुना गदितः। जैनदर्शनसंक्षेपः कथ्यते। कथंभूतः। सुविचारवान्। सुष्ठु सर्व-

प्रमाणैरबाधितस्वरूपत्वेन शोभना विचाराः सुविचारास्ते विद्यन्ते यस्य स सुविचारवान्, न पुनरविचारितरमणीयविचारवानिति। अनेनापरदर्शनान्यविचारितरमणीयानीत्यावेदितं मन्तव्यम्। यदुक्तं परैरेव।

5 पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम्।
आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः ॥१॥

परैर्हि दोषसंभावनयैव स्वमतविचारणा नाद्रियते। यत उक्तम्।

अस्ति वक्तव्यता काचित्तेनेदं न विचार्यते।
10 निर्दोषं काञ्चनं चेत्स्यात्परीक्षाया बिभेति किम् ॥१॥ इति।

अत एव जैना जिनमतस्य निर्दूषणतया परीक्षातो निर्भीका एवमुपदिशन्ति। सर्वथा स्वदर्शनपक्षपातं परित्यज्य माध्यस्थ्येनैव युक्तिशतैः सर्वदर्शनानि पुनः पुनर्विचारणीयानि, तेषु च यदेव दर्शनं युक्तियुक्ततयावभासते यत्र च पूर्वापरविरोधगन्धोऽपि
15 नेक्ष्यते, तदेव विशारदैरादरणीयं नापरमिति। तथा चोक्तम्।

पक्षपातो न मे वीरे न द्वेषः कपिलादिषु।
युक्तिमद्वचनं यस्य तस्य कार्यः परिग्रहः ॥१॥

इति श्रीतपागणनभोंगणदिनमणिश्रीदेवसुन्दरसूरिक्रमकमलोपजीविश्रीगुणरत्नसूरिविरचितायां तर्करहस्यदीपिकायां षड्दर्शनसमुच्चयवृत्तौ सांख्यमतरहस्यप्रकाशनो नाम तृतीयः प्रकाशः ॥

# चतुर्थो ऽधिकारः।

अथादौ जैनमते लिङ्गवेषाचारादि प्रोच्यते। जैना द्विविधाः श्वेताम्बरा दिगम्बराश्च। तत्र श्वेताम्बराणां रजोहरण-मुखवस्त्रिकालोचादिर्लिङ्गं, चोलपट्टकल्पादिको वेषः। पञ्च समितयस्तिस्रश्च गुप्तयस्तेषामाचारः।

ईर्याभाषैषणादाननिक्षेपोत्सर्गसंज्ञिकः। 5
पञ्चाहुः समितीस्तिस्रो गुप्तीस्त्रियोगनिग्रहात् ॥१॥

इति वचनात्। अहिंसासत्यास्तेयब्रह्माकिंचन्यवान् क्रोधादिविजयी दान्तेन्द्रियो निर्ग्रन्थो गुरुः। माधुकर्या वृत्त्या नवकोटीविशुद्धस्तेषां नित्यमाहारः। संयमनिर्वाहार्थमेव वस्त्रपात्रादिधारणम्। वन्द्यमाना धर्मलाभमाचक्षते। 10

दिगम्बराः पुनर्नाग्न्यलिङ्गाः पाणिपात्राश्च। ते चतुर्धा काष्ठासङ्घ-मूलसङ्घ-माथुरसङ्घ-गोप्यसङ्घ-भेदात्। काष्ठासङ्घे चमरीवालैः पिच्छिका, मूलसङ्घे मायूरपिच्छैः पिच्छिका, माथुरसङ्घे मूलतोऽपि पिच्छिका नादृता, गोप्या मयूरपिच्छिका। आद्यास्त्रयोऽपि सङ्घा वन्द्यमाना धर्मवृद्धिं भणन्ति, स्त्रीणां 15 मुक्तिं केवलिनां भुक्तिं सद्व्रतस्यापि सचीवरस्य मुक्तिं च न मन्वते, गोप्यास्तु वन्द्यमाना धर्मलाभं भणन्ति, स्त्रीणां मुक्तिं केवलिनां भुक्तिं च मन्यन्ते। गोप्या यापनीया इत्यप्युच्यन्ते॥

सर्वेषां च भिक्षाटने भोजने च द्वात्रिंशदन्तराया मलाश्च
चतुर्दश वर्जनीयाः । शेषमाचारे गुरौ च देवे च सर्वं श्वेता-
म्बरैस्तुल्यम् । नास्ति तेषां मिथः शास्त्रेषु तर्केषु परो भेदः ।

अथ देवस्य लक्षणमाह ।

5 जिनेन्द्रो देवता तत्र रागद्वेषविवर्जितः ।
हतमोहमहामल्लः केवलज्ञानदर्शनः ॥ ४५ ॥
सुरासुरेन्द्रसंपूज्यः सद्भूतार्थप्रकाशकः ।
कृत्स्नकर्मक्षयं कृत्वा संप्राप्तः परमं पदम् ॥ ४६ ॥

तत्र जैनमते । जयन्ति रागादीनिति जिनाः सामान्य-
10 केवलिनः । तेषामिन्द्रस्तादृशाद्भुतचतुस्त्रिंशदतिशयसमाजपर-
मैश्वर्यसमन्वितः स्वामी जिनेन्द्रो देवता देवः कृत्स्नकर्मक्षयं कृत्वा
परमं पदं संप्राप्त इति संबन्धः । कीदृशः स इत्याह । राग-
द्वेषविवर्जितः । मायालोभौ रागः, क्रोधमानौ द्वेषः । राग-
द्वेषाभ्यां विशेषेण पुनः पुनरभावेन वर्जितो रहितो रागद्वेष-
15 विवर्जितो वीतराग इत्यर्थः । रागद्वेषौ हि दुर्जयौ दुरन्तभव-
संपातहेतुतया च मुक्तिप्रतिरोधकौ समये प्रसिद्धौ । यदाह ।

को दुक्खं पाविज्जा कस्स
व सुक्खेहि विम्हओ हुज्जा ।
को व न लभिज्ज मुक्खं
रागद्दोसा जइ न हुज्जा ॥ १ ॥ इति ॥

ततस्तयोर्विच्छेद उक्तः। तथा हतमोहमहामल्लः। मोहनीयकर्मोदयाद्धिंसाद्यात्मकशास्त्रेभ्योऽपि मुक्तिकांक्षणादिव्यामोहो मोहः। स एव सकलजगद्दुर्जयत्वेन महामल्ल इव महामल्लः। हतो मोहमहामल्लो येन स तथा। एतेन विशेषणद्वयेन देवस्यापायापगमातिशयो व्यञ्जितो द्रष्टव्यः, तथा रागद्वेषमहामोहरहितोऽर्हन्नेव देव इति ज्ञापितं च। यदुक्तम्।

> रागोऽङ्गनासंगमतोऽनुमेयो
> द्वेषः द्विषद्दारणहेतिगम्यः।
> मोहः कुवृत्तागमदोषसाध्यो
> नो यस्य देवः स स चैवमर्हन् ॥१॥ इति॥

तथा केवले अन्यज्ञानानपेक्षत्वेनासहाये संपूर्णे वा ज्ञानदर्शने यस्य स तथा। केवलज्ञानकेवलदर्शनात्मको हि भगवान्। करतलकलितामलकफलवद्द्रव्यपर्यायात्मकं निखिलमनवरतं जगत्स्वरूपं जानाति पश्यति चेति केवलज्ञानदर्शने यस्य स तथा। केवलज्ञानदर्शन इति पदं साभिप्रायम्। छद्मस्थस्य हि प्रथमं दर्शनमुत्पद्यते ततो ज्ञानं, केवलिनस्त्वादौ ज्ञानं ततो दर्शनमिति। तत्र सामान्यविशेषात्मके सर्वस्मिन्प्रमेये वस्तुनि सामान्यस्योपसर्जनीभावेन विशेषाणां च प्रधानभावेन यद्ग्राहकं तज्ज्ञानम्। विशेषाणामुपसर्जनीभावेन सामान्यस्य च प्राधान्येन यद्ग्राहकं तद्दर्शनम्। एतेन विशेषणेन ज्ञानातिशयः साक्षादुक्तोऽवगन्तव्यः॥ तथा सुराः सर्वे देवाः, असुराश्च दैत्याः। सुरशब्देनासुराणां संग्रहणेऽपि पृथगुपादानं लोकरूढ्या ज्ञातव्यम्।

लोको हि देवेभ्यो दानवांस्तद्विपक्षत्वेन पृथग्निर्दिशतीति । तेषा-
मिन्द्राः स्वामिनस्तेषां तैर्वा संपूज्योऽभ्यर्चनीयः । तादृशैरपि
पूज्यस्य मानवतिर्यक्खचरकिन्नरादिनिकरसेव्यत्वमानुषङ्गिक-
मिति । अनेन पूजातिशय उक्तः ॥ तथा सद्भूता यथावस्थिता
5 येऽर्था जीवादयः पदार्थास्तेषां प्रकाशक उपदेशकः । अनेन
वचनातिशय उक्तः ॥ तथा कृत्स्नानि संपूर्णानि घात्यघातीनि
कर्माणि ज्ञानावरणादीनि, तेषां क्षयः सर्वथा प्रलयः । तं
कृत्वा परमं पदं सिद्धिं संप्राप्तः । एतेन कृत्स्नकर्मक्षयलक्षणा
सिद्धावस्थाभिदधे । अपरे सुगतादयो मोक्षमवाप्यापि तीर्थ-
10 निकारादिसंभवे भूयो भवमवतरन्ति । यदाहुरन्ये ।

ज्ञानिनो धर्मतीर्थस्य कर्तारः परमं पदम् ।
गत्वा गच्छन्ति भूयोऽपि भवं तीर्थनिकारतः ॥ इति ।

न ते परमार्थतो मोक्षगतिभाजः, कर्मक्षयाभावात् । न हि
तत्त्वतः कर्मक्षये पुनर्भवावतारः । यदुक्तम् ।

15 दग्धे बीजे यथात्यन्तं प्रादुर्भवति नाङ्कुरः ।
कर्मबीजे तथा दग्धे न रोहति भवाङ्कुरः ॥

उक्तं च श्रीसिद्धसेनदिवाकरपादैरपि भवाभिगामुकानां
प्रबलमोहविजृम्भितम् ।

दग्धेन्धनः पुनरुपैति भवं प्रमथ्य
20 निर्वाणमप्यनवधारितभीरुनिष्ठम् ।
मुक्तः स्वयं कृततनुश्च परार्थशूर-
स्त्वच्छासनप्रतिहतेष्विह मोहराज्यम् ॥

इत्यलं विस्तरेण। तदेवमेभिश्चतुर्भिरतिशयैः स नाथो मुमुक्षुभिर्यो देवो भवति, स एव देवत्वेन श्रयणीयः, स एव च परां सिद्धिं प्रापयति, न पुनरितरः सरागो भवेऽवतारवांश्च देव इत्यावेदितं मन्तव्यम्॥

ननु मा भूत्सुगतादिको देवः, जगत्स्रष्टा त्वीश्वरः 5 किमिति नाङ्गीक्रियते। तत्साधकप्रमाणाभावादिति ब्रूमः। अथास्त्येव तत्साधकं प्रमाणम्। क्षित्यादिकं बुद्धिमत्कर्तृकं, कार्यत्वात्, घटादिवत्। न चायमसिद्धो हेतुः, क्षित्यादेः सावयवत्वेन कार्यत्वप्रसिद्धेः। तथाहि। उर्वीपर्वततर्वादिकं सर्वं कार्यं, सावयवत्वात्, घटवत्। नापि विरुद्धः, निश्चितकर्तृके घटादौ 10 कार्यत्वदर्शनात्। नाप्यनैकान्तिकः, निश्चिताकर्तृकेभ्यो व्योमादिभ्यो व्यावर्तमानत्वात्। नापि कालात्ययापदिष्टः, प्रत्यक्षागमाबाधितविषयत्वात्। न च वाच्यं "घटकर्त्रादिदृष्टान्तदृष्टासर्वज्ञत्वासर्वगतत्वकर्तृत्वादिधर्मानुरोधेन सर्वज्ञादिविशेषणविशिष्टसाध्यविपर्ययसाधनाद्विरुद्धो हेतुर्दृष्टान्तश्च साध्यविकलो घटादौ 15 तथाभूतबुद्धिमतोऽभावात्" इति, यतः साध्यसाधनयोर्विशेषेण व्याप्तौ गृह्यमाणायां सकलानुमानोच्छेदप्रसक्तिः, किं तु सामान्येनान्वयव्यतिरेकाभ्यां हि व्याप्तिरवधार्यते। तौ चानन्यत्वाद्व्यभिचाराच्च विशेषेषु ग्रहीतुं न शक्यौ। तेन बुद्धिमत्पूर्वकत्वमात्रेण कार्यत्वस्य व्याप्तिः प्रत्येतव्या, न शरीरित्वादिना। न खलु कर्तृत्व- 20 सामग्र्यां शरीरमुपयुज्यते, तद्व्यतिरेकेणापि ज्ञानेच्छाप्रयत्नाश्रयत्वेन च शरीरकरणे कर्तृत्वोपलम्भात्। अकिंचित्करस्यापि

सहचरत्वमात्रेण कारणत्वे वह्निपैङ्गल्यस्यापि धूमं प्रति कारणत्व-
प्रसङ्गः स्यात्। विद्यमानेऽपि हि शरीरे ज्ञानादीनां समस्तानां
व्यस्तानां वाभावे कुलालादावपि कर्तृत्वं नोपलभ्यते। प्रथमं हि
कार्योत्पादककारणकलापज्ञानं, ततः करणेच्छा, ततः प्रयत्नः,
5 ततः फलनिष्पत्तिरित्यमीषां त्रयाणां समुदितानामेव कार्य-
कर्तृत्वे सर्वत्राव्यभिचारः। सर्वज्ञता चास्याखिलकार्यकर्तृत्वात्सिद्धा।
प्रयोगोऽत्र। ईश्वरः सर्वज्ञोऽखिलक्षित्यादिकार्यकर्तृत्वात्। यो
हि यस्य कर्ता स तदुपादानाद्यभिज्ञः, यथा घटोत्पादकः
कुलालो मृत्पिण्डाद्यभिज्ञः। जगतः कर्ता चायम्। तस्मात्सर्वज्ञ
10 इति। उपादानं हि जगतः पार्थिवाप्यतैजसवायवीयलक्षणा-
श्चतुर्विधाः परमाणवः, निमित्तकारणमदृष्टादि, भोक्तात्मा,
भोग्यं तन्वादि। न चैतदनभिज्ञस्य क्षित्यादौ कर्तृत्वं संभव-
त्यस्मदादिवत्। ते च तदीयज्ञानादयो नित्याः, कुलालादि-
ज्ञानादिभ्यो विलक्षणत्वात्। एकत्वं च क्षित्यादिकर्तुरनेक-
15 कर्तृणामेकाधिष्ठातृनियमितानां प्रवृत्त्युपपत्तेः सिद्धम्। प्रसिद्धा
हि स्थपत्यादीनामेकसूत्रधारपरतन्त्राणां महाप्रासादादिकार्य-
करणे प्रवृत्तिः। न च "ईश्वरस्यैकरूपत्वे नित्यत्वे च कार्याणां
कादाचित्कत्वं वैचित्र्यं च विरुध्यते" इति वाच्यं, कादाचित्क-
विचित्रसहकारिलाभेन कार्याणां कादाचित्कत्ववैचित्र्यसिद्धौ
20 विरोधासंभवात्। ननु क्षित्यादेर्बुद्धिमद्धेतुकत्वेऽक्रियादर्शिनोऽपि
जीर्णकूपप्रासादादिवत् कृतबुद्धिरुत्पद्यते, न चात्र सा उत्पद्यमाना
दृष्टा, [illegible] दृष्टान्तदृष्टस्य हेतोर्धर्मिण्यभावादसिद्धत्वम्।

तदयुक्तं, यतः प्रामाणिकमितरं वापेक्ष्येदमुच्यते ? यदीतरं, तर्हि धूमादावप्यसिद्धत्वानुषङ्गः । प्रामाणिकस्य तु नासिद्धत्वं, कार्यत्वस्य बुद्धिमत्कर्तृपूर्वकत्वेन प्रतिपन्नाविनाभावस्य क्षित्यादौ प्रसिद्धेः, पर्वतादौ धूमादिवत् । न च यावन्तः पदार्थाः कृतकाः, तावन्तः कृतबुद्धिमात्मन्याविर्भावयन्तीति नियमोऽस्ति, खातप्रतिपूरितायां भुव्यक्रियादर्शिनः कृतबुद्ध्युत्पादाभावात् । किं च बुद्धिमत्कारणाभावो ऽस्यानुपलब्धितो भवता प्रसाध्यते । एतच्चायुक्तं, दृश्यानुपलब्धेरेवाभावसाधकत्वोपपत्तेः । न चेयमत्र संभवति, जगत्कर्तुरदृश्यत्वात् । अनुपलम्भस्य चाभावसाधकत्वे पिशाचादेरपि तत्प्रसक्तिः स्यादिति ॥

अत्र प्रतिविधीयते । तत्र यत्तावत् क्षित्यादेर्बुद्धिमद्धेतुकत्वसिद्धये कार्यत्वसाधनमुक्तं, तत् किं सावयवत्वं १ प्रागसतः स्वकारणसत्तासमवायः २ कृतमिति-प्रत्ययविषयत्वं ३ विकारित्वं ४ वा स्यात् ॥ यदि सावयवत्वं, तदिदमपि किमवयवेषु वर्तमानत्वं १ अवयवैरारभ्यमाणत्वं २ प्रदेशवत्त्वं ३ सावयवमिति-बुद्धिविषयत्वं ४ वा । तत्राद्यपक्षेऽवयवसामान्येनानैकान्तिको ऽयं हेतुः, तद्ध्यवयवेषु वर्तमानमपि निरवयवमकार्यं च प्रोच्यते । द्वितीयपक्षे तु साध्यसमो हेतुः । यथैव हि क्षित्यादेः कार्यत्वं साध्यं, एवं परमाण्वाद्यवयवारभ्यत्वमपि । तृतीयोऽप्याकाशेनानैकान्तिकः, तस्य प्रदेशवत्त्वेऽप्यकार्यत्वात् । प्रसाधयिष्यते चाग्रतोऽस्य प्रदेशवत्त्वम् । चतुर्थकल्पनायामपि तेनैवानेकान्तो न चास्य निरवयवत्वं, व्यापित्वविरोधात्परमाणुवत् ॥१॥ नापि प्रागसतः स्वकारणसत्ता-

समवायः कार्यत्वं, तस्य नित्यत्वेन तल्लक्षणायोगात्। तल्लक्षणत्वे वा कार्यस्यापि क्षित्यादेस्तद्वन्नित्यत्वानुषङ्गात्, कस्य बुद्धिमद्धेतुकत्वं साध्यते। किं च योगिनामशेषकर्मक्षये पश्चान्तःपातिन्य-प्रवृत्तत्वेन भागासिद्धोऽयं हेतुः, तत्प्रक्षयस्य प्रध्वंसाभावरूपत्वेन

5 सत्तास्वकारणसमवाययोरभावात् ॥२॥ कृतमिति-प्रत्ययविषयत्वमपि न कार्यत्वं, खननोत्सेचनादिना कृतमाकाशमित्य-कार्येऽप्याकाशे वर्तमानत्वेनानैकान्तिकत्वात् ॥३॥ विकारित्वस्यापि कार्यत्वे महेश्वरस्यापि कार्यत्वानुषङ्गः, सतो वस्तुनो ऽन्यथाभावो हि विकारित्वम्। तत्रेश्वरस्याप्यत्नौत्यस्यापरबुद्धि-

10 मद्धेतुकत्वप्रसङ्गादनवस्था स्यात्, अविकारित्वे चास्य कार्यकारित्व-मतिदुर्घटमिति ॥४॥

कार्यस्वरूपस्य विचार्यमाणस्यानुपपद्यमानत्वादसिद्धः कार्यत्वादित्ययं हेतुः। किं च। कादाचित्कं वस्तु लोके कार्यत्वेन प्रसिद्धम्। जगतस्तु महेश्वरवत्सदासत्त्वात्कथं कार्यत्वम्। तदन्तर्गत-

15 तरुतृणादीनां कार्यत्वात्तस्यापि कार्यत्वे महेश्वरान्तर्गतानां बुद्ध्यादीनां परमाण्वाद्यन्तर्गतानां पाकजरूपादीनां च कार्यत्वात्, महेश्वरादेरपि कार्यत्वानुषङ्गः। तथा चास्याप्यपरबुद्धिमद्धेतुककल्पनायामनवस्थापत्तिद्वान्तस्यानुषज्येते। अस्तु वा यथा कथंचिज्जगतः कार्यत्वं, तथापि कार्यमात्रमिह हेतुत्वेन विवक्षितं तद्वि-

20 शेषो वा। आद्यपक्षः, तर्हि न ततो बुद्धिमत्कर्तृविशेषसिद्धिः, तेन समं व्याप्त्यसिद्धेः। किं तु कर्तृसामान्यस्य, तथा च हेतो-रकिंचित्करत्वं साध्यविरुद्धसाधनाद्विरुद्धत्वं वा। ततः कार्यत्वं

कृतबुद्ध्युत्पादकम्। बुद्धिमत्कर्तृगमकं न सर्वम्। सारूप्यमात्रेण च गमकत्वे बाष्पादेरप्यग्निं प्रति गमकत्वप्रसङ्गः, महेश्वरं प्रत्यात्मत्वादेः साधर्म्यात्संसारित्वकिंचिज्ज्ञत्वाखिलजगदकर्तृत्वानुमापकानुषङ्गः, तुल्याक्षेपसमाधानत्वात्। ततो बाष्पधूमयोः केनचिदंशेन साम्येऽपि यथा कुतश्चिद्विशेषाद्धूमोऽग्निं गमयति न बाष्पादिः, 5
तथा क्षित्यादीतरकार्यत्वयोरपि कश्चिद्विशेषोऽभ्युपगम्यः॥

अथ द्वितीयः, तर्हि हेतोरसिद्धत्वं कार्यविशेषस्याभावाद्भावे वा जीर्णकूपप्रासादादिवदक्रियादर्शिनोऽपि कृतबुद्ध्युत्पादकत्वप्रसङ्गः। समारोपान्नेति चेत्, सोऽप्युभयत्राविशेषतः किं न स्यात्, उभयत्र कर्तुरतीन्द्रियत्वाविशेषात्॥ अथ प्रामाणिकस्यास्त्येवात्र 10
कृतबुद्धिः, ननु कथं तस्य तत्र कृतत्वावगमोऽनेनानुमानेनानुमानान्तरेण वा। आद्येऽन्योन्याश्रयः। तथाहि। सिद्धविशेषणाद्धेतोरस्योत्थानं, तदुत्थाने च हेतोर्विशेषणसिद्धिरिति। द्वितीयपक्षेऽनुमानान्तरस्यापि सविशेषणहेतोरेवोत्थानम्। तत्राप्यनुमानान्तरात्तत्सिद्धावनवस्था। तन्न कृतबुद्ध्युत्पादकत्वरूपविशेषणसिद्धिः। 15
तथा च विशेषणासिद्धत्वं हेतोः। यदुच्यते "खातप्रतिपूरितभूमिदर्शनेन कृतकानामात्मनि कृतबुद्ध्युत्पादकत्वनियमाभावः" इति तदप्यसत्, तत्राकृत्रिमभूभागादिसारूप्यस्य तदनुत्पादकस्य सद्भावात्तदनुत्पादकस्योपपत्तेः। न च क्षित्यादावप्यकृत्रिमसंस्थानसारूप्यमस्ति, येनाकृत्रिमत्वबुद्धिरुत्पद्यते, तस्यैवानभ्युपगमात्, अभ्यु- 20
पगमे चापसिद्धान्तप्रसक्तिः स्यादिति। कृतबुद्ध्युत्पादकत्वरूपविशेषणासिद्धेर्विशेषणासिद्धत्वं हेतोः। सिध्यतु वा, तथाप्यसौ विरुद्धः,

घटादाविव शरीरादिविशिष्टस्यैव बुद्धिमत्कर्तुरत्र प्रसाधनात्।
नन्वेवं दृष्टान्तदार्ष्टान्तिकसाम्यान्वेषणे सर्वत्र हेतूनामनुपपत्तिरिति
चेत्। न, धूमाद्यनुमाने महानसेतरसाधारणस्याग्नेः प्रतिपत्तेः।
अत्राप्येवं बुद्धिमत्सामान्यप्रसिद्धेर्न विरुद्धत्वमित्यप्ययुक्तं, दृश्यविशे-
5 षाधारस्यैव तत्सामान्यस्य कार्यत्वहेतोः प्रसिद्धेर्नादृश्यविशेषाधारस्य,
तस्य स्वप्नेऽप्यप्रतीतेः, खरविषाणाधारतत्सामान्यवत्। ततो यादृ-
शात्कारणाद्यादृशं कार्यमुपलब्धं तादृशादेव तादृशमनुमातव्यं, यथा
यावद्धर्मात्मकादग्नेर्यावद्धर्मात्मकस्य धूमस्योत्पत्तिः सुदृढप्रमाणा-
त्प्रतिपन्ना तादृशादेव धूमात्तादृशस्यैवाग्नेरनुमानमिति, एतेन
10 साध्यसाधनयोर्विशेषेण व्याप्तौ गृह्यमाणायां सर्वानुमानोच्छेद-
प्रसक्तिरित्याद्यपास्तं द्रष्टव्यमिति। तथाकृष्टप्रभवैस्तृणादि-
भिर्व्यभिचार्ययं हेतुः। द्विविधानि कार्याण्युपलभ्यन्ते, कानि-
चिद्बुद्धिमत्पूर्वकाणि यथा घटादीनि, कानिचित्तु तद्विपरीतानि
यथाकृष्टप्रभवतृणादीनि। तेषां पक्षीकरणादव्यभिचारे, स
15 श्यामस्तत्पुत्रत्वादितरतत्पुत्रवदित्यादेरपि गमकत्वप्रसङ्गान्न
कश्चिद्धेतुर्व्यभिचारी स्यात्, व्यभिचारविषयस्य सर्वत्रापि पक्षीकर्तुं
शक्यत्वात्। ईश्वरबुद्ध्यादिभिश्च व्यभिचारः, तेषां कार्यत्वे सत्यपि
समवायिकारणादीश्वरादिभिन्नबुद्धिमत्पूर्वकत्वाभावात्। तदभ्युप-
गमे चानवस्था। तथा कालात्ययापदिष्टश्चायं, अकृष्टप्रभवाङ्कुरादौ
20 कर्त्रभावस्याध्यक्षेणाध्यवसायात्, अग्नेरनुष्णत्वे साध्ये द्रव्यत्ववत्।
ननु तत्राप्यदृश्य ईश्वर एव कर्तेति चेत्। तन्न, यतस्तत्र तत्सद्भावो
ऽस्मादेवान्यतो वा प्रमाणात्सिध्येत्। प्रथमपक्षे चक्रकम्।

ततो हि तत्सद्भावे सिद्धे ऽस्यादृश्यत्वेनानुपलम्भसिद्धिः, तत्सिद्धौ च कालात्ययापदिष्टत्वाभावः, तदभावात्तत्सद्भावसिद्धिरिति। द्वितीयपक्षो ऽप्ययुक्तः, तत्सद्भावावेदकस्य प्रमाणान्तरस्यैवाभावात्। अस्तु वा तथा तत्सद्भावः, तथाप्यस्यादृश्यत्वे शरीराभावः कारणं, विद्यादिप्रभावः, जातिविशेषो वा। प्रथमपक्षे कर्तृत्वानुपपत्तिः अशरीरत्वात्, मुक्तात्मवत्। ननु शरीराभावेऽपि ज्ञानेच्छाप्रयत्नाश्रयत्वेन शरीरकरणे कर्तृत्वमुपपद्यत इत्यप्यसमीचिताभिधानं, शरीरसंबन्धेनैव तत्प्रेरणोपपत्तेः, शरीराभावे मुक्तात्मवत्तदसंभवात्। शरीराभावे च ज्ञानाद्याश्रयत्वमप्यसंभाव्यं, तदुत्पत्तावस्य निमित्तकारणत्वात्, अन्यथा मुक्तात्मनोऽपि तदुत्पत्तिप्रसक्तेः। विद्यादिप्रभावस्य चादृश्यत्वहेतुत्वे कदाचिदसौ दृश्येत। न खलु विद्याभृतां शाश्वतिकमदृश्यत्वं दृश्यते, पिशाचादिवत्। जातिविशेषोऽपि नादृश्यत्वे हेतुरेकस्य जातिविशेषाभावादनेकव्यक्तिनिष्ठत्वात्तस्य॥

अस्तु वा दृश्यो ऽदृश्यो वासौ, तथापि किं सत्तामात्रेण१ ज्ञानवत्त्वेन२ ज्ञानेच्छाप्रयत्नवत्त्वेन३ तत्पूर्वकव्यापारेण४ ऐश्वर्येण५ वा क्षित्यादेः कारणं स्यात्। तत्राद्यपक्षे कुम्भकारादीनामपि जगत्कर्तृत्वमनुषज्यते, सत्ताविशेषात्। द्वितीये तु योगिनामपि कर्तृत्वापत्तिः। तृतीयो ऽप्यसाम्प्रतः, अशरीरस्य पूर्वमेव ज्ञानाद्याश्रयत्वप्रतिषेधात्। चतुर्थो ऽप्यसंभाव्यः, अशरीरस्य कायवाक्कृतव्यापाराणामसंभवात्। ऐश्वर्यमपि ज्ञातृत्वं कर्तृत्वमन्यद्वा। ज्ञातृत्वं चेत्, तत्किं ज्ञातृत्वमात्रं सर्वज्ञातृत्वं वा। आद्यपक्षे ज्ञानवन्तो

स्यादीश्वरः; अस्मदाद्यन्यज्ञातृत्ववत् । द्वितीये ऽस्यास्य सर्वज्ञत्वमेव
स्यादैश्वर्यं, सुगतादिवत् । अथ कर्तृत्वं, तर्हि कुम्भकारादीना-
मप्यनेककार्यकारिणामैश्वर्यप्रसक्तिः । नाप्यन्यत्, इच्छाप्रयत्न-
व्यतिरेकेणान्यस्यैश्वर्यनिबन्धनस्येश्वरे ऽभावात् ॥ किं चेश्वरस्य
5 जगन्निर्माणे यथारुचिप्रवृत्तिः १ कर्मपारतन्त्र्येण २ करुणया ३
क्रीडया ४ निग्रहानुग्रहविधानार्थं ५ स्वभावतो ६ वा । अथा-
द्यविकल्पे कदाचिदन्यादृश्येव सृष्टिः स्यात् । द्वितीये स्वात-
न्त्र्यहानिः । तृतीये सर्वमपि जगत्सुखितमेव करोति । अथेश्वरः
किं करोति । पूर्वार्जितैरेव कर्मभिर्वशीकृता दुःखमनुभवन्ति ।
10 तदा तस्य कः पुरुषकारः, अदृष्टापेक्षस्य च कर्तृत्वे किं तत्कल्प-
नया, जगतस्तदधीनतैवास्तु । चतुर्थपञ्चमयोस्तु रागद्वेषताभावः
प्रसज्यते । तथाहि "रागवानीश्वरः क्रीडाकारित्वाद्बालव-
त्तथा, अनुग्रहप्रदत्वाद्राजवत्तथा द्वेषवानसौ निग्रहप्रदत्वात्तद्व-
देव" इति । अथ स्वभावतः, तर्ह्यचेतनस्यापि जगत एव
15 स्वभावतः प्रवृत्तिरस्तु; किं तत्कर्तृकल्पनयेति । न कार्यत्वहेतु-
र्बुद्धिमन्तं कर्तारमीश्वरं साधयति । एवं सन्निवेशविशिष्टत्वा-
दचेतनोपादानत्वादभूतभावित्वादित्यादयोऽपि स्वयमुत्थाप्याः,
तुल्याक्षेपसमाधानत्वात् । किं च क्षित्यादेर्बुद्धिमत्पूर्वकत्वे साध्ये
प्रदीयमानाः सर्वेऽपि हि हेतवो विरुद्धा दृष्टान्तानुग्रहेण
20 सशरीरासर्वज्ञासर्वकर्तृपूर्वकत्वसाधनात् । न च धूमात्पावकानु-
माने ऽप्ययं दोषः, तत्र तार्णपार्णादिविशेषाधारवह्निमात्र-
व्याप्तस्य धूमस्य दर्शनात् । नैवमत्र सर्वज्ञासर्वज्ञकर्तृविशेषाधि-

कारणतत्सामान्येन कार्यत्वस्यास्ति व्याप्तिः, सर्वज्ञस्य कर्तुरतो ऽनुमानात्प्रागसिद्धेः। व्यभिचारित्वस्यासौ बुद्धिमन्तमन्तरेणापि विद्युदादीनां प्रादुर्भावविभावनात्, स्वप्नाद्यवस्थायामबुद्धिमत्पूर्वस्यापि कार्यस्य दर्शनाच्चेति। कालात्ययापदिष्टश्चैते, प्रत्यक्षागमबाधितपक्षानन्तरं प्रयुक्तत्वात्। तद्बाधा च पूर्वमेव दर्शिता। 5 प्रकरणसमास्यासौ, प्रकरणचिन्ताप्रवर्तकानां हेत्वन्तराणां सद्भावात्। तथाहि। ईश्वरो जगत्कर्ता न भवति निरुपकरणत्वात्, दण्डचक्रचीवराद्युपकरणरहितकुलालवत्, तथा व्यापित्वादाकाशवत्, एकत्वात्तद्वदित्यादय इति। नित्यत्वादीनि तु विशेषणानि तद्व्यवस्थापनायानीयमानानि षण्ढं प्रति कामिन्या रूपसंपन्निरूपणप्रायाण्युपकर्षणीयान्येव। विचारासहत्वख्यापनार्थं तु किंचिदुच्यते। तत्रादौ नित्यत्वं विचार्यते। तच्चेश्वरे न घटते। तथाहि। नेश्वरो नित्यः, स्वभावभेदेनैव क्षित्यादिकार्यकर्तृत्वात्, अप्रच्युतानुत्पन्नस्थिरैकस्वभावं कूटस्थं नित्यमिति हि नित्यलक्षणाभ्युपगमात्। स्वभावभेदानभ्युपगमे च सृष्टिसंहारादिविरुद्धकार्यकारित्वमतिदुर्घटम्। नापि तज्ज्ञानादीनां नित्यत्वं वाच्यं, प्रतीतिविरोधात्, ईश्वरज्ञानादयो न नित्या ज्ञानादित्वादस्मदादिज्ञानादिवदित्यनुमानविरोधाच्च। एतेन तदीयज्ञानादयो नित्या इत्यादि यदवादि, तदपोहितमूहनीयम्। सर्वज्ञत्वमप्यस्य केन प्रमाणेन ग्राह्यम्। न तावत्प्रत्यक्षेण, तस्येन्द्रियार्थसंनिकर्षोत्पन्नत्वेनातीन्द्रियार्थग्रहणासमर्थत्वात्। नाप्यनुमानेन, अव्यभिचारिलिङ्गाभावात्। ननु जगद्वैचित्र्यान्यथानुप-

पतिरूपं तदस्त्वेवेति चेत् । न, तेन सहाविनाभावाभावात्, जगद्वैचित्र्यस्य सार्वज्ञ्यं विनापि शुभाशुभकर्मपरिपाकादिवशेनोपपद्यमानत्वात् । किं चायं यदि सर्वज्ञः, तदा जगदुपप्लवकरणस्वैरिणः पश्चादपि कर्तव्यनिग्रहानसुरादींस्तदधिक्षेपकृतो ऽस्मदादींश्च किमर्थं सृजतीति नायं सर्वज्ञः । तथा बहूनामेककार्यकरणे वैमत्यसंभावनाभयेन महेशितुरेकत्वकल्पना भोजनादिव्ययभयात् कृपणस्यात्यन्तवल्लभपुत्रकलत्रमित्रादिपरित्यजनेन शून्यारण्यानीसेवनतुल्यामाकलयति । अनेककीटिकाशरघाशतसंपाद्यत्वेऽपि शक्रमूर्धमधुच्छत्रादिकार्याणामेकरूपतयाविगानेनोपलम्भात् । किं चेश्वरस्याखिलजगत्कर्तृत्वे ऽभ्युपगम्यमाने शास्त्राणां प्रमाणेतरताव्यवस्थाविलोपः स्यात् । तथाहि । सर्वं शास्त्रं प्रमाणमीश्वरप्रणीतत्वादितरप्रणीतशास्त्रवत् । प्रतिवाद्यादिव्यवस्थाविलोपश्च, सर्वेषामीश्वरादेशविधायित्वेन तत्प्रतिलोमाचरणानुपपत्तेः प्रतिवाद्यभावप्रसङ्गात् । इति न सृष्टिकरस्य महेश्वरस्य कथंचिदपि सिद्धिः । ततः सद्भूतार्थप्रकाशकत्वाद्वीतराग एव सर्वज्ञो देवो देवत्वेनाभ्युपगमनार्हो नापरः कश्चिदिति स्थितम् ॥

अथ जल्पन्ति जैमिनीयाः । इह हि सर्वज्ञादिविशेषणविशिष्टो भवदभिमतः कश्चनापि देवो नास्ति, तद्ग्राहकप्रमाणाभावात् । तथाहि । न तावत्प्रत्यक्षं तद्ग्राहकं,

संबद्धं वर्तमानं हि गृह्यते चक्षुरादिना ।

इति वचनात् ।

न चानुमानं, प्रत्यक्षदृष्ट एवार्थे तत्प्रवर्तनात् । न चागमः, सर्वज्ञस्यासिद्धत्वेन तदागमस्यापि विवादास्पदत्वात् । न चोपमानं, सर्वज्ञसदृशस्यापरस्याभावात् । न चार्थापत्तिरपि, सर्वज्ञसाधकस्यान्यथानुपपन्नार्थस्यादर्शनात् । ततः प्रमाणपञ्चकाप्रवृत्तेरभावप्रमाणगोचर एव सर्वज्ञः । तदुक्तम् ।

प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते ।
वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता ॥ इति ।

प्रयोगोऽपि । नास्ति सर्वज्ञः, प्रमाणपञ्चकाग्राह्यत्वात्, खरविषाणवत् ॥

किं च । यथानादेरपि सुवर्णमलस्य क्षारपुटपाकादिप्रक्रियया विशोध्यमानस्य निर्मलत्वं, एवमात्मनोऽपि निरन्तरं ज्ञानाभ्यासेन विगतमलत्वात्सर्वज्ञत्वं किं न भवेदिति मतिस्तदपि न, अभ्यासेन हि शुद्धेस्तारतम्यमेव भवेन्न परमः प्रकर्षः, न हि नरस्य लङ्घनमभ्यासतस्तारतम्यवदुपलभ्यमानं सकललोकविषयमुपलभ्यते । उक्तं च ।

दशहस्तान्तरं व्योम्नो यो नामोत्प्लुत्य गच्छति ।
न योजनशतं गन्तुं शक्तोऽभ्यासशतैरपि ॥ १ ॥ इति ।

अपि च स सर्वं वस्तुजातं केन प्रमाणेन जानाति । किं प्रत्यक्षेण यथासंभवं सर्वैरेव प्रमाणैः । न तावत्प्रत्यक्षेण, तस्य यत्किंचित्प्रतिनियतार्थग्राहित्वात् । नाप्यतीन्द्रियप्रत्यक्षेण, तत्सद्भावे प्रमाणाभावात् । नापि सर्वैरेव प्रमाणैः, तेषां प्रत्यक्षपूर्वकत्वात् सर्वेषां सर्वज्ञतापत्तेरिति ॥ अन्यच्च । अनाद्यनन्तः संसारः ।

तत्तद्वस्त्वन्वयानन्तानि क्रमेण विदन्, कथमनन्तेनापि कालेन सर्ववेदी भविष्यति । किं च यथावस्थितवस्तुवेदित्वे ऽशुच्यादिरसास्वादप्रसङ्गः, तेषां यथावस्थिततया संवेदनात् । आह च

अशुच्यादिरसास्वादप्रसङ्गश्चानिवारितः । इति ।

5 किं चातीतानागतवस्तूनि स किं स्वेन स्वेन रूपेण जानाति किं वा वर्तमानतयैव । प्रथमपक्षे तज्ज्ञानस्याप्रत्यक्षतापत्तिः, अवर्तमानवस्तुग्राहित्वात्, स्मरणादिवत् । द्वितीये तु तज्ज्ञानस्य भ्रान्तत्वप्रसङ्गः, अन्यथास्थितस्यार्थस्यान्यथाग्रहणात्, द्विचन्द्रादिवदिति ॥

10 अत्र प्रतिविधीयते । तत्र यत्तावदुक्तं "तद्ग्राहकप्रमाणाभावात्" इति साधनं, तदसम्यक्, तत्साधकानामनुमानप्रमाणानां सद्भावात् । तथाहि । ज्ञानतारतम्यं क्वचिद्विश्रान्तं, तरतमशब्दवाच्यत्वात्, परिमाणवदिति । नायमसिद्धो हेतुः, प्रतिप्राणि प्रज्ञामेधादिगुणपाटवरूपस्य ज्ञानस्य तारतम्येनोपलम्भेः । ततो

15 ऽवश्यमस्य सर्वान्तिमप्रकर्षेण भाव्यं, यथा परिमाणस्याकाशे । स च ज्ञानस्य सर्ववस्तुप्रकाशकत्वरूपो यत्र विश्रान्तः स भगवान् सर्वज्ञः । ननु संताप्यमानपाथस औष्ण्यतारतम्ये सत्यपि सर्वान्तिमवह्निरूपतापत्तिरूपप्रकर्षादर्शनाद्व्यभिचारोऽयं हेतुरिति चेत् । न, यतो यो द्रव्यस्य सहजो धर्मो न तु सहकारिसव्यपेक्षः—

20 (सहजो ऽपि च यः स्वाश्रये विशेषमारभते)—यो ऽभ्यासक्रमेण प्रकर्षपर्यन्तमासादयति, यथा कलधौतस्य पुटपाकप्रबन्धाहिता विशुद्धिः । न च पाथसस्तापः सहजो धर्मः, किं तर्ह्यग्न्यादिसह-

कारित्वव्यपेक्षः। तत्कथं तत्र तापो ऽभ्यस्यमानः परां काष्ठां गच्छेत्। अनन्ततापे प्रत्युत पात्रस्य परिक्षयात्। ज्ञानं तु जीवस्य सहजो धर्मः स्वाश्रये च विशेषमाधत्ते। तेन तस्य निरन्तराभ्यासाहिताधिकोत्तरोत्तरविशेषाधानात् प्रकर्षपर्यन्त-प्राप्तिर्नायुक्ता। एतेन "लङ्घनाभ्यास" इत्यादि निरस्तं, 5 लङ्घनस्यासहजधर्मत्वात्, स्वाश्रये च विशेषानाधानात्, प्रत्युत तेन सामर्थ्यपरिक्षयादिति। तथा जलधिजलपलप्रमाणादयः कस्यचित्प्रत्यक्षाः, प्रमेयत्वात्, घटादिगतरूपादिविशेषवत्। न च प्रमेयत्वमसिद्धं, अभावप्रमाणस्य व्यभिचारप्रसक्तेः। तथाहि। प्रमाणपञ्चकातिक्रान्तस्य हि वस्तुनो ऽभावप्रमाणविषयता 10 भवताभ्युपगम्यते। यदि च जलधिजलपलप्रमाणादिषु प्रमाण-पञ्चकातिक्रान्तरूपमप्रमेयत्वं स्यात्, तदा तेष्वप्यभावप्रमाणविष-यता स्यात्। न चात्र तत्त्वे ऽपि सा संभविनीति। यस्य च प्रत्यक्षाः, स भगवान् सर्वज्ञ इति। तथास्ति कश्चिदतीन्द्रियार्थ-सार्थसाक्षात्कारी, अनुपदेशालिङ्गाविसंवादिविशिष्टदिग्देशका- 15 लप्रमाणाद्यात्मकचन्द्रादिग्रहणाद्युपदेशदायित्वात्। यो यद्विषये ऽनुपदेशालिङ्गाविसंवाद्युपदेशदायी स तत्साक्षात्कारी यथास्म-दादिः, अनुपदेशालिङ्गाविसंवाद्युपदेशदायी च कश्चित्, तस्मात्त-त्साक्षात्कारी; तथाविधश्च श्रीसर्वज्ञ एवेति। यच्चोक्तं "प्रमाणप-ञ्चकाप्रवृत्तेः सर्वज्ञस्याभावप्रमाणगोचरत्वं", तदपि वाङ्मात्रं, 20 प्रमाणपञ्चकाप्रवृत्तेरसंभवात्। सा हि बाधकत्वेन स्यात्, न च सर्वज्ञे बाधकसंभवः। तथाहि। तद्बाधकं प्रत्यक्षं १ अनुमानं २

आगमः ३ उपमानं ४ अर्थापत्तिर्वा ५ । तत्राद्यः पक्षो न श्रेयान्, यतो यदि प्रत्यक्षं वस्तुनः कारणं व्यापकं वा स्यात्, तदा तन्निवृत्तौ वस्तुनो ऽपि निवृत्तिर्युक्तिमती, वह्न्यादिकारणवृक्षत्वादिव्यापकनिवृत्तौ धूमत्वादिशिंशपात्वादिनिवृत्तिवत् । न
5 चार्थस्याध्यक्षं कारणं, तदभावे ऽपि देशादिव्यवधाने ऽर्थस्य भावात् । नापि व्यापकं, तन्निवृत्तावपि देशादिविप्रकृष्टवस्तूनामनिवर्तमानत्वात् । न चाकारणाव्यापकनिवृत्तावकार्याव्याप्यनिवृत्तिरुपपद्यतेऽतिप्रसक्तेरिति । नाप्यनुमानं तद्बाधकं, धर्मिसाध्यधर्मसाधनानां स्वरूपासिद्धेः । तत्र हि धर्मित्वेन किं
10 सर्वज्ञो ऽभिप्रेतः १ सुगतादिः २ सर्वपुरुषा वा ३ । यदि सर्वज्ञः, तदा किं तत्र साध्यमसत्त्वं १ असर्वज्ञत्वं वा २ । यद्यसत्त्वं किं तत्र साधनमनुपलम्भो १ विरुद्धविधिः २ वक्तृत्वादिकं ३ वा । यद्यनुपलम्भः किं सर्वज्ञस्योत १ तत्कारणस्य २ तत्कार्यस्य ३ तद्व्यापकस्य ४ वा । यदि सर्वज्ञस्य,
15 सो ऽपि किं स्वसंबन्धी १ सर्वसंबन्धी २ वा । स्वसंबन्धी चेन्निर्विशेषण १ उतोपलब्धिलक्षणप्राप्तत्वविशेषणो २ वा । आद्ये परचित्तविशेषादिभिरनैकान्तिको ऽनुपलम्भादिति हेतुः, तेषामनुपलम्भे ऽप्यसत्त्वानभ्युपगमात् । नाप्युपलब्धिलक्षणप्राप्तत्वविशेषणः, सर्वत्र सर्वदा च सर्वज्ञाभावसाधनस्याभावप्रसङ्गात् ।
20 न हि सर्वथाप्यसत उपलब्धिलक्षणप्राप्तत्वं घटते, कथंचित्सत्त्वाविनाभावित्वात्तस्य । एतेन सर्वसंबन्धिपक्षो ऽपि प्रत्याख्यातः । किं चायं हेतुः सर्वसंबन्ध्यनुपलम्भो ऽसर्वविदा

प्रतिपन्नमप्रत्यक्षत्वात्। न खलु सर्वात्मनां तज्ज्ञानानां चाप्रतिपत्तौ तत्संबन्धी सर्वज्ञानुपलम्भः प्रतिपत्तुं शक्यः। नापि कारणानुपलम्भः, तत्कारणस्य ज्ञानावरणादिकर्मक्षयस्यानुमानेनोपलम्भात्। एतद्बाधकं चानुमानं, युक्त्यग्रे वक्ष्यन्ते। कार्यानुपलम्भो ऽप्यसिद्धः, तत्कार्यस्याविसंवाद्यागमस्योपलम्भः। 5
व्यापकानुपलम्भो ऽप्यसिद्धः, तद्व्यापकस्य सर्वार्थसाक्षात्कारित्वस्यानुमानेन प्रतीतेः। तथाहि। अस्ति कश्चित्सर्वार्थसाक्षात्कारी, तद्ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिबन्धप्रत्ययत्वात्। यद्यद्ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिबन्धकं तत्तत्साक्षात्कारि, यथापगततिमिरादिप्रतिबन्धं लोचनं रूपसाक्षात्कारीति नानुपलम्भादिति 10
साधनं सर्वज्ञाभावं साधयति॥ विरुद्धविधिरपि साक्षात्परंपरया वा सर्वज्ञाभावं साधयति। प्रथमपक्षे सर्वज्ञत्वेन साक्षाद्विरुद्धस्यासर्वज्ञत्वस्य कचित्कदाचिद्विधानात्सर्वत्र सर्वदा वा। तत्राद्यपक्षे न सर्वत्र सर्वदा सर्वज्ञाभावः सिध्येत्। यत्रैव हि तद्विधानं तत्रैव तदभावः, नान्यत्र। न हि कचित्कदाचिदग्नेर्विधाने सर्वत्र 15
सर्वदा वा तद्व्यापकविरुद्धशीताभावो दृष्टः। द्वितीयो ऽप्ययुक्तो ऽर्वाग्दृष्टः, सर्वत्र सर्वदा वा सर्वज्ञत्वविरुद्धासर्वज्ञत्वविधेरसंभवात्। तत्संभवे च तस्यैव सर्वज्ञत्वापत्तेः सिद्धं नः समीहितम्। परंपरयापि किं तद्व्यापकविरुद्धस्य १ तत्कारणविरुद्धस्य २ तत्कार्यविरुद्धस्य ३ वा विधिः सर्वज्ञाभावमादिशेत्। न तावद्व्यापक- 20
विरुद्धविधिः। स हि सर्वज्ञस्य व्यापकमखिलार्थसाक्षात्कारित्वं, तेन विरुद्धं तदसाक्षात्कारित्वं नियतार्थग्राहित्वं वा। तस्य च

विधिः कश्चित्कदाचित्तदभावं साधयेन्न पुनः सर्वत्र सर्वदा वा, तुषारस्पर्शव्यापकशीतविरुद्धाग्निविधानात्, कश्चित्कदाचित्तुषार-स्पर्शनिषेधवत्। कारणविरुद्धविधिरपि कश्चित्कदाचिदेव सर्वज्ञा-भावं साधयेत्, न सर्वत्र। सर्वज्ञत्वस्य हि कारणमशेषकर्मक्षयः।
5 तद्विरुद्धस्य कर्मोचयस्य च विधिः कश्चित्कदाचिदेव सर्वज्ञाभा-वसाधकः, रोमहर्षादिकारणशीतविरुद्धाग्निविधानात्, कश्चित्क-दाचिच्छीतकार्यरोमहर्षादिनिषेधवत्। न पुनः साकल्येन, सकलकर्मप्रचयस्य साकल्येन संभवाभावात्, कश्चिदप्यात्मनि तत्क्षये प्रसाधयिष्यमाणत्वात्। नापि विरुद्धकार्यविधिः।
10 सर्वज्ञत्वेन हि विरुद्धं किंचिज्ज्ञत्वम्। तत्कार्यं नियतार्थविषयं वचः, तस्य विधिः। स च न सामस्त्येन सर्वज्ञाभावं साध-येत्। यत्रैव हि तद्विधिस्तत्रैवास्य तदभावसाधनसमर्थत्वात्, शीतविरुद्धदहनकार्यधूमविशिष्टप्रदेश एव शीतस्पर्शनिषेधवत्। तन्न विरुद्धविधिरपि सर्वविदो बाधकः॥ नापि वक्तृत्वादिकं,
15 सर्वज्ञसत्त्वानभ्युपगमे तस्यानुपपत्त्यासिद्धत्वात्, तदुपपत्तौ च स्ववचनविरोधो नास्ति सर्वज्ञो वक्तृत्वादिधर्मोपेतश्चेति। तन्न सर्वज्ञस्यासत्त्वं कुतोऽपि हेतोः साधयितुं शक्यम्॥ नाप्यसर्व-ज्ञत्वं साध्यं सर्वज्ञोऽसर्वज्ञ इत्येवं, विरोधस्यात्राप्यविशिष्टत्वात्। किं चासर्वज्ञत्वे साध्ये सर्वज्ञस्य प्रमाणविरुद्धार्थवक्तृत्वं १
20 तद्विपरीतं २ वक्तृत्वमात्रं ३ वा हेतुत्वेन विवक्षितम्। प्रथमोऽसिद्धो हेतुः, सर्वज्ञस्य तथाभूतार्थवक्तृत्वासंभवात्। द्वितीयपक्षे तु विरुद्धः, दृष्टेष्टाविरुद्धार्थवक्तृत्वस्य सर्वज्ञत्वे

तत्रैव संभवात्। तृतीयपक्षे ऽप्यनैकान्तिकः, वक्तृत्वमात्रस्य सर्वज्ञत्वेन विरोधासंभवात्॥ एतेन सुगतादिधर्मिपक्षो ऽपि प्रत्याख्यायि, प्रोक्तदोषानुषङ्गाविशेषात्। किं च प्रतिनियतसुगतादेः सर्वज्ञतानिषेधे ऽन्येषां तद्विधिरवश्यंभावी, विशेषनिषेधस्य शेषाभ्यनुज्ञानान्तरीयकत्वात्, "अयमब्राह्मणः" इत्यादिवदिति॥ 5
अथ सर्वपुरुषानुररीकृत्य तेषामसर्वज्ञता वक्तृत्वादेः साध्यते। तत्र, विपक्षात्तस्य व्यतिरेकासिद्धा संदिग्धविपक्षव्यावृत्तिकत्वात् सर्वज्ञो ऽपि भविष्यति वक्तापीति। तस्मान्नानुमानं सर्वज्ञबाधकम्॥

नाप्यागमः। स हि पौरुषेयो ऽपौरुषेयो वा। न तावद्- 10
पौरुषेयः, तस्याप्रामाण्यात्, वचनानां गुणवद्वक्त्रधीनतया प्रामाण्योपपत्तेः। किं चास्य कार्य एवार्थे प्रामाण्याभ्युपगमान्न सर्वतः स्वरूपनिषेधे प्रामाण्यं स्यात्। न चाशेषज्ञानाभावसाधकं किंचिद्वेदवाक्यमस्ति, "हिरण्यगर्भः सर्वज्ञः" इत्यादिवेदवाक्यानां तत्प्रतिपादकानामनेकशः श्रवणात्॥ 15

नाप्युपमानं तद्बाधकम्। तत्खलूपमानोपमेययोरध्यक्षत्वे सति गोगवयवत् स्यात्। न चाशेषपुरुषाः सर्वज्ञश्च केनचिद्दृष्टाः, येन "अशेषपुरुषवत्सर्वज्ञः सर्वज्ञवद्वा ते" इत्युपमानं स्यात्। अशेषपुरुषदृष्टौ च तस्यैव सर्वज्ञत्वापत्तिरिति॥

नाप्यर्थापत्तिस्तद्बाधिका, सर्वज्ञाभावमन्तरेणानुपपद्यमानस्य 20
कस्याप्यर्थस्याभावात्, वेदप्रामाण्यस्य च सर्वज्ञे सत्येवोपपत्तेः। न हि गुणवद्वक्तुरभावे वचसां प्रामाण्यं घटत इति न सर्वज्ञे बाधकसंभवः। तदभावे च प्रमाणपञ्चकाप्रवृत्तिरप्यसिद्धा। तथा

यदुक्तं "प्रमाणपञ्चकाप्रवृत्त्याभावप्रमाणविषयित्वं", यदप्यनैका-
न्तिकं, हिमवत्पलपरिमाणपिशाचादीनां प्रमाणपञ्चकाप्रवृत्त्या-
वप्यभावप्रमाणगोचरत्वाभावादिति "प्रमाणपञ्चकं यत्र" इत्या-
द्यपास्तं द्रष्टव्यम्॥ यच्चोक्तं "सर्वं वस्तुजातं केन प्रमाणेन"
5 इत्यादि, तदप्ययुक्तं, सकलज्ञानावरणविलयोत्थाविकलकेवला-
लोकेन सकललोकालोकादिवस्तुवेत्तृत्वात्सर्वज्ञस्येति। यच्चोक्तं
"अशुच्यादिरसास्वाद" इत्यादि, तदपि परं प्रत्यक्षस्यामात्रमेव
व्यनक्ति, सर्वज्ञस्यातीन्द्रियज्ञानित्वेन करणव्यापारनिरपेक्षत्वात्
जिह्वेन्द्रियव्यापारनिरपेक्षं यथावस्थितं तटस्थतयैव वेदनं, न तु
10 भवदुक्तव्यापारसापेक्षं वेदनमिति। यदप्यवादि "कालतो-
ऽनाद्यनन्तः संसारः" इत्यादि, तदप्यसम्यक्, युगपत्संवेदनात्।
न च तदसंभवि दृष्टत्वात्। तथाहि। यथा स्वभ्यस्तसकलशा-
स्त्रार्थः सामान्येन युगपत्प्रतिभासते, एवमशेषविशेषकलितो
ऽपि। यथा चोक्तम्।

15 यथा सकलशास्त्रार्थः स्वभ्यस्तः प्रतिभासते।
मनस्येकक्षणेनैव तथानन्तादिवेदनम्॥ १॥ इति॥

यच्चोक्तं "अतीतानागत" इत्यादि, तदपि स्वप्रणेतुरज्ञानि-
त्वमेव ज्ञापयति, यतो यद्यपीदानीं तनकालापेक्षयातीतानागत-
वस्तुनी असती, तथापि यथातीतमतीतकाले ऽवतिष्ट यथा च
20 भावि वर्तिष्यते, तथैव तयोः साक्षात्कारित्वेन न कश्चनापि
दोष इति सिद्धः सुखादिवस्तुनिश्चितासंभवद्बाधकप्रमाणत्वात्
सर्वज्ञ इति॥

अथ दिक्पटाः प्रकटयन्ति। ननु भवतु सुनिश्चितासंभवद्बाधकप्रमाणत्वात्सर्वज्ञसिद्धिः। किं तस्य कवलाहार इति न मृष्यामहे। तथाहि। केवलिनः कवलाहारो न भवति, तत्कारणाभावात्, न च कारणाभावे कार्यस्योत्पत्तिः, अतिप्रसक्तेः। न च तत्कारणाभावोऽसिद्धः, आहारादाननिदानभूते वेदनादिषट्के एकस्यापि, तस्य केवलिन्यभावात्। तथाहि। न तावत्तस्य वेदनोत्पद्यते, तद्वेदनीयस्य दग्धरज्जुस्थानिकत्वात्। सत्यामपि वेदनायां न तस्य तत्कृता पीडा, अनन्तवीर्यत्वात्। वैयावृत्त्यकरणं तु भगवति त्रैलोक्यपूज्ये न संभवत्येवेति। ईर्यापथं पुनः केवलज्ञानावरणक्षयात् सम्यगवलोकयत्यसौ। संयमस्तु तस्य यथाख्यातचारित्रिणो निष्ठितार्थत्वादनन्तवीर्यत्वाच्च नाहारकारणं भवति। प्राणवृत्तिरपि तस्यानपवर्त्यायुष्कत्वादनन्तवीर्यत्वाच्चान्यथासिद्धैव। धर्मचिन्तावसरस्त्वपगतः, निष्ठितार्थत्वात्। तदेवं केवलिनः कावलिकाहारो बहुदोषदुष्टत्वान्न घटत इति॥

अत्रोच्यते। तत्र यत्तावदुक्तं "तत्कारणाभावात्" इति साधनं, तदसिद्धं, आहारकारणस्य वेदनीयस्य केवलिनि तथैव सद्भावात्। तथा च किमिति सा शारीरी स्थितिः प्राक्तनी न स्यात्। प्रयोगोऽत्र। स्यात्केवलिनो भुक्तिः, समग्रसामग्रीकत्वात्, पूर्वभुक्तिवत्। सामग्री चेयं पर्याप्तत्वं वेदनीयोदय आहारपक्तिनिमित्तं तैजसशरीरं दीर्घायुष्कं चेति। सा च समग्रापि केवलिनि समस्ति। यदपि दग्धरज्जुस्थानिकत्वं वेदनीयस्योच्यते, तदप्यनागमिकमयुक्तिकं च, आगमे ऽत्यन्तघातोदयस्य केवलिनि प्रति-

पादनात्। भुक्तिरपि, यदि घातिकर्मक्षयाज्ज्ञानादयस्तस्य भवेयुः वेदनीयोद्भवायाः क्षुधः किमायातं येनासौ न भवति। न तयोश्छायातपयोरिव शीतोष्णवत्सहानवस्थानलक्षणो भावाभावयोरिव परस्परपरिहारलक्षणो वा कश्चिद्विरोधोऽस्ति सातासातयोर-
5 न्तर्मुहूर्तपरिवर्तमानतया सातोदयवत् असातोदयोऽप्यस्तीत्यन-न्तवीर्यत्वे सत्यपि शरीरबलापचयः क्षुदुद्भवपीडा च भवत्येव। न चाहारग्रहणे तस्य किंचित्क्षूयते केवलमाहोपुरुषिकामात्र-मेवेति। यदुच्यते "वेदनीयस्योदीरणाभावात् प्रभूततरपुद्गलो-दयाभावः, तदभावाच्चात्यन्तं पीडाभावः" इति, तदयुक्तं,
10 तुर्यादिगुणस्थानकेषु वेदनीयस्य गुणश्रेणीसद्भावात्, प्रचुरपुद्ग-लोदये सत्यपि तत्कृतपीडाल्पत्वस्यैव दर्शनात्, जिने सातोद-यवत्, प्रचुरपुद्गलोदयाभावेऽपि तीव्रप्रदर्शनाच्चेति। यदप्यु-च्यते "आहाराकाङ्क्षा क्षुत्, सा च परिग्रहबुद्धिः, सा च मोहनीयविकारः, तस्य चापगतत्वात्केवलिनो न भुक्तिः" इति,
15 तदसम्यक्, यतो मोहनीयविपाकात्क्षुन्न भवति, तद्विपाकस्य प्रतिपक्षभावनया निवर्तमानत्वात्, क्रोधादीनां तथोपरमोपलब्धेः। तदुक्तं "उवसमेण हणे कोहं" इत्यादि। न च क्षुदेदनीयं तद्विपक्षभावनया निवर्तमानं दृष्टम्। अतो न मोहविपाक-स्वभावा क्षुदिति। एतेन यदुच्यते

20 "अपवर्तयते कृतार्थं नायुर्ज्ञानादयो न हीयन्ते।"
"जगदुपकारावसानं वीर्यं किं गतक्षयो भुक्तिः॥"

इत्यादि निरस्तं, एवंविधौदारिकत्वादिसामग्रीसद्भावेन कव-

छद्मस्थावस्थायामपि केवलिनो ऽभुक्तिप्रसक्तेः । अनन्तवीर्यान्तरायक्ष-
याभावाच्छद्मस्थस्य भुक्तिरिति चेत्, तदयुक्तम् । यतः,
किं तथायुष्कस्यापवर्तनं स्यात्किं वा चतुर्णां ज्ञानानां काचि-
द्धानिः स्यात्, येन भुक्तिः । तेन यथा दीर्घकालस्थितेरायुष्कं
कारणमेवमाहारो ऽपि, यथा सिद्धिगतेर्व्युपरतक्रियाध्यानचर- 5
मक्षणः कारणं, एवं सम्यक्त्वादिकमपीति, अनन्तवीर्यतापि
तस्याहारग्रहणे न विरुध्यते । यथा तस्य देवच्छन्दादीनि
विश्रामकारणानि गमननिषीदनानि च भवन्ति, एवमाहारक्रि-
यापि, विरोधाभावात् । न च बलवत्तरस्य वीर्यवतो ऽल्पीयसी
क्षुद्व्यभिचारात् । किं चागमो ऽपि केवलिनो भुक्तिं प्रतिपाद- 10
यति । तथाहि तत्त्वार्थसूत्रम् [९, ११] । "एकादश जिने"
इति । व्याख्या । एकादश परीषहाः क्षुत्पिपासाशीतोष्णदंशम-
शकचर्याशय्यावधरोगतृणस्पर्शमलाख्या जिने केवलिनि
भवन्ति, तत्कारणस्य वेदनीयस्याद्यापि विद्यमानत्वात् । न च
कारणानुच्छेदे कार्यस्योच्छेदः संभाव्यते, अतिप्रसक्तेः । अत एव 15
केवलिनि क्षुद्वेदनीयपीडा संभाव्यते, किं त्वसावनन्तवीर्यत्वान्न
विक्लवीभवति, न चासौ निष्ठितार्थो निःप्रयोजनमेव पीडां
सहते, न च शक्यते वक्तुं "एवंभूतमेव भगवतः शरीरं, यदुत
क्षुत्पीडया न बाध्यते" इति, अनुमानेन तस्यासत्त्व सिद्धत्वात् ।
तथाहि । केवलिशरीरं क्षुदादिना पीड्यते, शरीरत्वात्, 20
अस्मदाद्यधिष्ठितशरीरवत् । तथा । यथा तच्छरीरं स्वभावेन
प्रस्वेदादिरहितं, एवं प्रक्षेपाहाररहितमपीत्यपकर्णनीयमेव, अश-

-माणकत्वात् । तदेवं देशोन पूर्वकोटिकालस्य केवलिस्थितेः सम्भवादौदारिकशरीरस्थितेश्च यथायुष्कं कारणमेवं प्रक्षेपाहारो ऽपि । तथाहि । तैजसशरीरेण मृदूकृतस्याभ्यवहृतस्य स्वपर्यास्या परिणामितस्योत्तरोत्तरपरिणामक्रमेणौदारिकशरीरिणामनेन
5 प्रकारेण क्षुदुद्भवो भवति । वेदनीयोदये चेयं समस्तापि सामग्री भगवति केवलिनि संभवति । ततः केन हेतुनासौ न भुङ्क्ते इति । न च घातिचतुष्टयस्य क्षुद्वेदनीयं प्रति सहकारिकारणभावो ऽस्ति येन तदभावात्तदभाव इत्युच्यते । इति सिद्धा केवलिभुक्तिः । तथा प्रयोगश्चात्र । केवलिनः प्रक्षेपा-
10 हारो भवति, कवलाहारकेवलित्वयोरविरोधात्, सातवेदनीयवदिति । इति केवलिभुक्तिव्यवस्थापनस्थलमिति ॥

अथ तत्त्वान्याह ।

**जीवाजीवौ तथा पुण्यं पापमास्रवसंवरौ ।**
**बन्धो विनिर्जरामोक्षौ नव तत्त्वानि तन्मते ॥४७॥**

15 व्याख्या ॥ चेतनालक्षणो जीवः, तद्विपरीतलक्षणस्त्वजीवः । धर्माधर्माकाशकालपुद्गलभेदेन स्वसौ पञ्चधा व्यवस्थितः । अनयोरेव द्वयोर्जगद्वर्तिनः सर्वे ऽपि भावा अन्तर्भवन्ति । न हि ज्ञानादयो रूपरसादयश्च द्रव्यगुणा उत्क्षेपणादीनि च कर्माणि सामान्यविशेषसमवायाश्च जीवाजीवव्यतिरेकेणात्मस्थितिं लभन्ते,
20 तद्भेदेनैकान्ततस्तेषामनुपलम्भात्, तेषां तदात्मकत्वेन प्रतिपत्तेः, अन्यथा तदवस्तुत्वप्रसङ्गात् । बौद्धादिपरिकल्पितदुःखादितत्त्वानि

जीवाजीवाभ्यां पृथग्जात्यन्तरतया न वक्ष्यामि, जीवाजीवरा-
शिद्वयेन सर्वस्य जगतो व्याप्तत्वात्, तदव्याप्तस्य शशशृङ्गतुल्य-
त्वात्॥ तर्हि पुण्यपापास्रवादीनामपि ततः पृथगुपादानं न
युक्तिप्रधानं स्यात्, राशिद्वयेन सर्वस्य व्याप्तत्वादिति चेत्। न,
पुण्यादीनां विप्रतिपत्तिनिरासार्थत्वात्, आस्रवादीनां सकारण- 5
संसारमुक्तिप्रतिपादनपरत्वाद्वा पृथगुपादानस्यादुष्टता। यथा च
संवरनिर्जरयोर्मोक्षहेतुता आस्रवस्य बन्धनिबन्धनत्वं पुण्यापुण्य-
द्विभेदबन्धस्य च संसारहेतुत्वं तथागमात्प्रतिपत्तव्यम्। तत्र पुण्यं
शुभाः कर्मपुद्गलाः ३। त एव त्वशुभाः पापं ४। आस्रवति
कर्म यतः स आस्रवः कायवाङ्मनोव्यापारः, पुण्यापुण्यहेतुतया 10
चासौ द्विविधः ५। आस्रवनिरोधः संवरः, गुप्तिसमितिधर्मानु-
प्रेक्षादीनां चास्रवप्रतिबन्धकारित्वात्; स च द्विविधः सर्वदेश-
भेदात् ६। योगनिमित्तः सकषायस्यात्मनः कर्मवर्गणापुद्गलैः
संश्लेषविशेषो बन्धः। स च सामान्येनैकविधोऽपि प्रकृतिस्थि-
त्यनुभागप्रदेशभेदेन चतुर्धा, पुनरेकैको ज्ञानावरणादिमूल- 15
प्रकृतिभेदादष्टधा, पुनरपि मत्यावरणादितदुत्तरप्रकृतिभेदादने-
कविधः। अयं च कश्चित्तीर्थकरत्वादिफलनिर्वर्तकत्वात्प्रशस्तः,
अपरस्तु नारकादिफलनिर्वर्तकत्वादप्रशस्तः, प्रशस्ताप्रशस्तपरिणा-
मोद्भूतस्य कर्मणः सुखदुःखसंवेदनीयफलनिर्वर्तकत्वात् ७।
आत्मसंश्लिष्टकर्मनिर्जरणकारणं निर्जरा द्वादशविधतपोरूपा। सा 20
चोक्तरूपा शुक्लध्यानरूपा "तपसा निर्जरा च" [तत्त्वार्थाधिगमसू० ९.३]
इति वचनात्, ध्यानस्य चाभ्यन्तरतपोरूपत्वात् ८। विनिर्मुक्ताशे-

पचबन्धनस्य· प्राप्तनिजस्वरूपस्यात्मनो लोकान्ते ऽवस्थानं मोक्षः;
बन्धविप्रयोगो मोक्ष इति वचनात् । ९ ॥ तानि नवसंख्यानि
तत्त्वानि तन्मते जैनमते ज्ञातव्यानि ॥

अथ शास्त्रकार एव तत्त्वानि क्रमेण व्याख्याति । तत्र
5 यथोद्देशं निर्देश इति न्यायात् प्रथमं जीवतत्त्वमाह ।

**तत्र ज्ञानादिधर्मेभ्यो भिन्नाभिन्नो विवृत्तिमान् ।**
**शुभाशुभकर्मकर्ता भोक्ता कर्मफलस्य च ॥ ४८ ॥**
**चैतन्यलक्षणो जीवो यश्चैतद्विपरीतवान् ।**
**अजीवः स समाख्यातः पुण्यं सत्कर्मपुद्गलाः ॥ ४९ ॥**

10 युग्मम् ॥ तत्रेति निर्धारणार्थः । ये ज्ञानदर्शनचारित्रसुखदुः-
खवीर्यभव्याभव्यत्वसत्त्वप्रमेयत्वद्रव्यत्वप्राणधारित्वक्रोधादिपरिणत -
त्वसंसारित्वसिद्धत्वपरवस्तुव्यावृत्तत्वादयः स्वपरपर्याया जीवस्य
भवन्ति, ते ज्ञानादयो धर्मा उच्यन्ते । तेभ्यो जीवो न भिन्नो
नाप्यभिन्नः, किं तु जात्यन्तरतया भिन्नाभिन्नः । यदि हि
15 ज्ञानादिधर्मेभ्यो जीवो भिन्नः स्यात्, तदा "अहं जानामि",
"अहं पश्यामि", "अहं ज्ञाता", "अहं द्रष्टा", "अहं सुखितः",
"अहं भव्यः" इत्याद्यभेदप्रतिभासो न स्यात् । अस्ति च सर्वप्राणिनां
सो ऽभेदप्रतिभासः । तथा यद्यभिन्नः स्यात्, तदा "अयं धर्मी";
"एते धर्माः" इति भेदबुद्धिर्न स्यात् । अस्ति च सा । अथवा-
20 भिन्नतायां ज्ञानादिसर्वधर्माणामैक्यं स्यात्, एकजीवाभिन्नत्वात् ।
तथा च "मम ज्ञानं मम दर्शनं चास्ति" इत्यादिज्ञानादिमिथो-
भेदप्रतीतिर्न स्यात् । अस्ति च सा । ततो ज्ञानादिधर्मेभ्यो

भिन्नाभिन्न एवाभ्युपगन्तव्यः। अनेन धर्मधर्मिणोर्वैशेषिकाद्यभिमतं भेदैकान्तं सौगतस्वीकृतं चाभेदैकान्तं प्रतिक्षिपति, सौगतेनापि बुद्धिक्षणपरंपरारूपस्यात्मनो धर्मित्वेन स्वीकारात्॥ तथा विविधं वर्तनं विवृत्तिर्नरामरादिपर्यायान्तरानुसरणं, तद्वान् विवृत्तिमान्। अनेन भवान्तरगामिनमात्मानं प्रति 5 विप्रतिपन्नांश्चार्वाकान् कूटस्थनित्यात्मवादिनो नैयायिकादींश्चिरस्यति॥ तथा शुभाशुभानि कर्माणि करोतीति शुभाशुभकर्मकर्ता॥ तथा स्वकृतस्य कर्मणो यत्फलं सुखादिकं, तस्य साक्षाद्भोक्ता च। चकारो विशेषणानां समुच्चये। एतेन विशेषणद्वयेनाकर्तारमुपचरितवृत्त्या भोक्तारं चात्मानं मन्यमानानां 10 सांख्यानां निरासः॥ तथा चैतन्यं साकारनिराकारोपयोगात्मकं लक्षणं स्वरूपं यस्य, स चैतन्यलक्षणः। एतेन जडस्वरूपो नैयायिकादिसंमत आत्मा व्यवच्छिद्यते। एवंविशेषणो जीवः समाख्यात इत्यत्रापि संबन्धनीयमिति॥

अत्र चार्वाकाश्चर्चयन्ति यथा। इह कायाकारपरिणतानि 15 चेतनाकारणभूतानि भूतान्येवोपलभ्यन्ते। न पुनस्तेभ्यो व्यतिरिक्तो भवान्तरयायी यथोक्तलक्षणः कश्चनाप्यात्मा, तत्सद्भावे प्रमाणाभावात्। तथाहि। भूतव्यतिरिक्तात्मसद्भावे किं प्रत्यक्षं प्रमाणं प्रवर्ततेतानुमानम्। न तावत्प्रत्यक्षं, तस्य प्रतिनियतेन्द्रियसंबद्धरूपादिगोचरतया तद्विलक्षणे जीवे प्रवृत्त्यनुपपत्तेः। न च 20 "घटमहं वेद्मीत्यहंप्रत्यये ज्ञानकर्तृतयात्मा भूतव्यतिरिक्तः प्रतिभाति" इत्यभिधातव्यं, तस्य "स्थूलो ऽहं" "कृशो ऽहं" इत्यादि-

स्वशरीरविषयत्वस्यैवोपपत्तेः । न खलु तत्प्रत्ययस्यात्मालम्बन-
त्वमस्ति, आत्मनि स्थौल्यादिधर्मासंभवात् । तथा "घटमहं
वेद्मि" इत्यत्रापि प्रत्ययस्य न शरीरादन्यो भवत्परिकल्पितः
कश्चनाप्यात्मालम्बनत्वेन स्वप्ने ऽपि प्रतीयते । अप्रतीतस्यापि
5 कल्पने कल्पनागौरवं प्रतिनियतवस्तुव्यवस्थाया अभावश्च स्यात् ।
न च "जडरूपस्य शरीरस्य घटादेरिवाहंप्रत्ययो ऽनुपपन्नः"
इति वाच्यं, चेतनायोगेन तस्य सचेतनत्वात् । न च "सा
चेतना जीवकर्तृका" इति वाच्यं, तस्याप्रतीतत्वात् । तत्कर्तृत्व-
मयुक्तं, खपुष्पादेरपि तत्प्रसङ्गात् । ततः प्रसिद्धत्वाच्छरीरस्यैव
10 चैतन्यं प्रति कर्तृत्वं युक्तं, तदन्वयव्यतिरेकानुविधायित्वाच्च ।
प्रयोगश्चात्र । यत्खलु यस्यान्वयव्यतिरेकावनुकरोति तत्तस्य
कार्यं, यथा घटो मृत्पिण्डस्य । शरीरस्यान्वयव्यतिरेकावनुक-
रोति च चैतन्यम् । तस्मात्तत्कर्तृत्वम् । अन्वयव्यतिरेकसमधि-
गम्यो हि सर्वत्र कार्यकारणभावः । तौ चात्र विद्येते, सति
15 शरीरे चैतन्योपलब्धेः, असति चानुपलब्धेः । न च "मृतशरीरे
चैतन्यानुपलब्धेस्तदन्वयव्यतिरेकानुविधायित्वमसिद्धं" इति वाच्यं,
मृतावस्थायां वायुतेजसोरभावेन शरीरस्यैवाभावात्, विशिष्ट-
भूतसंयोगस्यैव शरीरत्वप्रतिपादनात् । न च शरीराकारमात्रे
चैतन्योत्पत्तिर्युक्ता, चित्रलिखिततुरङ्गमादिष्वपि चैतन्योत्पत्ति-
20 प्रसङ्गात् । ततः सिद्धं शरीरकार्यमेव चैतन्यम् । ततश्च चैतन्य-
विशिष्टे शरीर एवाहंप्रत्ययोत्पत्तिः प्रसिद्धा । इति न आत्म-
[illegible] आत्मा । ततश्चासिद्ध[illegible] एव । [illegible] ।

नास्त्यात्मा, अत्यन्ताप्रत्यक्षत्वात्। यदत्यन्ताप्रत्यक्षं तन्नास्ति,
यथा खपुष्पम्। यच्चास्ति तत्प्रत्यक्षेण गृह्यत एव, यथा घटः।
अणवोऽपि ह्यप्रत्यक्षाः किं तु घटादिकार्यतया परिणताश्च
प्रत्यक्षत्वमुपयान्ति, न पुनरेवमात्मा कदाचिदपि प्रत्यक्षभावमु-
पगच्छति। अतोऽत्यन्तेति विशेषणमिति न परमाणुभिर्व्य- 5
भिचार इति ॥ १ ॥ तथा नाप्यनुमानं भूतव्यतिरिक्तात्मसद्भावे
प्रवर्तते, तस्याप्रमाणत्वात्, प्रमाणत्वे वा प्रत्यक्षबाधितप्रयोगान-
न्तरं प्रयुक्तत्वेन हेतोः कालात्ययापदिष्टत्वात्। शरीरव्यतिरि-
क्तात्मपक्षो हि प्रत्यक्षेणैव बाध्यते। किं च। लिङ्गलिङ्गिसंबन्ध-
स्मरणपूर्वकं ह्यनुमानम्। यथा। पूर्वं महानसादावग्निधूमयोर्लि- 10
ङ्गिलिङ्गयोरन्वयव्यतिरेकवन्तमविनाभावमध्यक्षेण गृहीत्वा ततः
उत्तरकालं क्वचित्कान्तारपर्वतनितम्बादौ गगनावलम्बिनीं धूम-
लेखामवलोक्य प्राग्गृहीतसंबन्धमनुस्मरति। तद्यथा। यत्र यत्र
धूमस्तत्र तत्र वह्निसद्भावः, यथा महानसादौ। धूमश्चात्र
दृश्यते। तस्मादत्राग्निनापीह भवितव्यमित्येवं लिङ्गग्रहणसंबन्धस्मर- 15
णाभ्यां तत्र प्रमाता हुतभुजमवगच्छति। न चैवमात्मना
लिङ्गिना सार्धं क्वापि लिङ्गस्य प्रत्यक्षेण संबन्धः सिद्धोऽस्ति,
यतस्तत्संबन्धमनुस्मरतः पुनस्तल्लिङ्गदर्शनाज्जीवे संप्रत्ययः स्यात्।
यदि पुनर्जीवलिङ्गयोः प्रत्यक्षतः संबन्धसिद्धिः स्यात्, तदा
जीवस्यापि प्रत्यक्षत्वापत्त्यानुमानवैयर्थ्यं स्यात्, तत एव जीव- 20
सिद्धेरिति। न च वाच्यं "सामान्यतोदृष्टादनुमानादादित्यगति-
वज्जीवः सिध्यति, यथा गतिमानादित्यो देशान्तरप्राप्तिदर्शनात्,

देवदत्तवत्" इति, यतो हन्त देवदत्ते दृष्टान्तधर्मिणि सामा-
न्येन देशान्तरप्राप्तिर्गतिपूर्विका प्रत्यक्षेणैव निश्चिता। सूर्ये ऽपि
तां तथैव प्रमाता साधयतीति युक्तम्। न चैवमत्र क्वचिदपि
दृष्टान्ते जीवत्वेनाविनाभूतः को ऽपि हेतुरध्यक्षेणोपलक्ष्यत
5 इत्यतो न सामान्यतोदृष्टादप्यनुमानात्तद्गतिरिति ॥ २ ॥ तथा
नाप्यागमगम्य आत्मा। अविसंवादिवचनाप्तप्रणीतत्वेन आगमस्य
प्रामाण्यम्। न चैवंभूतमविसंवादिवचनं कंचनाप्याप्तमुपलभा-
महे, यस्यात्मा प्रत्यक्ष इति। अनुपलभ्यमानाच्च कथमात्मानं
विप्रलभेमहि। किं चागमाश्च सर्वे परस्परविरुद्धप्ररूपिणः।
10 ततश्च कः प्रमाणं कश्चाप्रमाणमिति संदेहदावानलज्वालावलीढ-
मेवागमस्य प्रामाण्यम्। ततश्च नागमप्रमाणादप्यात्मसिद्धिः ॥ ३॥
तथा नोपमानप्रमाणोपमेयो ऽप्यात्मा। तत्र हि यथा गौस्तथा
गवय इत्यादाविव सादृश्यमसंनिकृष्टे ऽर्थे बुद्धिमुत्पादयति। न
चात्र त्रिभुवने ऽपि कश्चनात्मसदृशः पदार्थो ऽस्ति यद्दर्शनादा-
15 त्मानमवगच्छामः। कालाकाशदिगादयो जीवतुल्या विद्यन्त
एवेति चेत्। न, तेषामपि विवादास्पदीभूतत्वेन तदंह्रिबद्ध-
त्वात् ॥ ४ ॥ तथार्थापत्तिसाध्यो ऽपि नात्मा। न हि दृष्टः श्रुतो
वा को ऽप्यर्थ आत्मानमन्तरेण नोपपद्यते, यद्बलात्तं साधयामः।
ततः सकलप्रमाणविषयातीतत्वात्तत्प्रतिषेधसाधकाभावा-
20 त्प्रमाणविषयीकृत एव जीव इति स्थितम् ॥

अत्र प्रतिविधीयते। यत्तावदुक्तं 'इह कायाकारपरिणतानि
भूतान्येवोपलभ्यन्ते, न पुनस्तद्व्यतिरिक्त आत्मा, तदसद्भावे

प्रमाणाभावात्" इत्यादि, तदसमीक्षिताभिधानं, प्रत्यक्षेणैव तत्सद्भावे प्रमाणस्य सद्भावात्। तथाहि "सुखमहमनुभवामि" इत्यन्योन्यविविक्तज्ञेयज्ञातृज्ञानोल्लेखी प्रतिप्राणि स्वसंवेद्यः प्रत्ययो जायमानः संवेद्यते। न चायं मिथ्या, बाधकाभावात्। नापि संदिग्धः, उभयकोटिसंस्पर्शाभावात्। न चेत्थंभूतस्यास्य ज्ञानालम्बनत्वं युक्तं, रूपादिज्ञानानामप्यनालम्बनत्वप्रसङ्गात्। नापि शरीरालम्बनत्वं, बहिःकारणनिरपेक्षान्तःकरणव्यापारेणोत्पत्तेः। न खलु शरीरमित्थंभूताहंप्रत्ययवेद्यं, बहिःकरणविषयत्वात्। अतः शरीरातिरिक्तः कश्चिदेतस्यालम्बनभूतो ज्ञानवानर्थो ऽभ्युपगन्तव्यः, तस्यैव ज्ञातृत्वोपपत्तेः। स च जीव एवेति सिद्धः स्वसंवेदनवेद्याहंप्रत्ययोत्पादयुक्तः, न त्वचेतनः प्रत्यक्षलक्ष्य आत्मा॥ तथा यदुक्तं "चेतनायोगेन स चेतनत्वाच्छरीरस्यैवाहंप्रत्ययः" इत्यादि, तदपि प्रलापमात्रं, यतश्चेतनायोगे ऽपि स्वयं चेतनस्यैवाहंप्रत्ययोत्पादो युक्तः, न त्वचेतनस्य। यथा परःस्वस्थप्रदीपप्रभायोगे ऽपि स्वयमप्रकाशस्वरूपस्य घटस्य प्रकाशकत्वं न दृष्टं, किं तु प्रदीपस्यैव, एवं चेतनायोगे ऽपि न स्वयमचेतनस्य देहस्य ज्ञातृत्वं, किं त्वात्मन एवेति तस्यैव चाहंप्रत्ययोत्पादः। यो ऽपि "स्थूलोऽहं" "कृशोऽहं" इत्यादिप्रत्ययः समुत्पद्यते, सोऽप्यात्मोपकारकत्वेन शरीरे जायमान औपचारिक एव, अत्यन्तोपकारके भृत्ये "अहमेवायं" इति प्रत्ययवत्॥ तथा शरीरस्यैव चैतन्यं प्रति "कर्तृत्वं" इत्यादि यदभ्यवादि वादिमुखेन, तदप्युक्तवचनरचनामात्रमेव, चेतनायाः शरीरेण

संख्यान्वयव्यतिरेकाभावात्। मत्तमूर्च्छितप्रसुप्तानां तादृशशरीर-
सद्भावे ऽपि न तथाविधं चैतन्यमुपलभ्यते। दृश्यते च केषांचित्
कृशतरशरीराणामपि चेतनाप्रकर्षः, केषांचित् स्थूलदेहानामपि
तदपकर्षः। ततो न तदन्वयव्यतिरेकानुविधायि चैतन्यम्।
5 अतो न तत्कार्यम्। किं च। न हि चैतन्यस्य भूतकार्यत्वे
किमपि प्रमाणमुपलभामहे। तथाहि। न तावत्प्रत्यक्षं,
अतीन्द्रियविषये तदप्रवर्तनात्। न ह्युत्पद्यमानमुत्पन्नं वा चैतन्यं
भूतानां कार्यमिति प्रत्यक्षव्यापारमुपैति, तस्य स्वयोग्यसंनिहि-
तार्थग्रहणरूपत्वात्, चैतन्यस्य चामूर्तत्वेन तदयोग्यत्वात्। न च
10 "भूतानामिदं कार्यं" इत्येवमात्मविषयं भूतकार्यत्वं प्रत्यक्षमवग-
न्तुमर्हं, कार्यकारणभावस्यान्वयव्यतिरेकसमधिगम्यत्वात्। न च
भूतचैतन्यातिरिक्तः कश्चिदन्वयी तदुभयान्वयव्यतिरेकज्ञाताभ्यु-
पगम्यते, आत्मसिद्धिप्रसङ्गात्॥ तथा नानुमानेनापि चैतन्यस्य
भूतकार्यत्वं प्रतीयते, तस्यानभ्युपगमात्, प्रत्यक्षमेवैकं प्रमाणं
15 नान्यदिति वचनात्। अभ्युपगमेऽपि न ततो विवक्षितार्थप्रती-
तिसिद्धिः। ननु कायाकारपरिणतेभ्यो भूतेभ्यश्चैतन्यं समुत्प-
द्यते, तद्भाव एव चैतन्यभावात्, मद्याङ्गेभ्यो मदशक्तिवदित्याद्य-
नुमानात्सिध्यत्येव चैतन्यस्य भूतकार्यत्वसिद्धिरिति चेत्। न,
तद्भाव एव तद्भावादिति हेतोरनैकान्तिकत्वात्, मृतावस्थायां
20 तद्भावेऽपि चैतन्यस्याभावात्। स्यादेतत्, पृथिव्यप्तेजोवायुलक्ष-
णभूतचतुष्टयसमुदयजन्यं हि चैतन्यं, न च मृतशरीरे वायु-
रस्ति, तदभावात्तत्र चैतन्याभाव इति न तत्र व्यभिचारः।

प्रबोध्यते इति । शुषिरे तत्र वातः सुतरां संभाव्यत एव । किं
च । यदि तत्र वायुविकलत्वाच्चैतन्यस्याभावः, ततो बस्त्यादिभिः
संपादिते वायौ तत्र चैतन्यमुपलभ्येत । न च तत्र तत्संपादिते
ऽपि वायौ चैतन्यमुपलभ्यते अथ प्राणापानलक्षणवाय्वोरभावान्न
तत्र चैतन्यमिति चेत् । न, अन्वयव्यतिरेकानुविधायित्वा-
भावान्न प्राणापानवाय्वोश्चैतन्यं प्रति हेतुता, यतो मरणा- 5
वस्थायां प्रचुरतरदीर्घश्वासोच्छ्वाससंभवे ऽपि चैतन्यस्यात्यन्त-
परिक्षयः । तथा ध्यानस्तिमितलोचनस्य संवृतमनोवाक्काययोगस्य
निस्तरङ्गमहोदधिकल्पस्य योगिनो निरुद्धप्राणापानस्यापि
परमप्रकर्षप्राप्तश्चेतनोपचयः समुपलभ्यते । अथ तेजसो ऽभावान्न
मृतावस्थायां चैतन्यमिति चेत्, तर्हि तत्र तेजस्युपनीते सति 10
कथं न चेतनोपलभ्यते । किं च । मृतावस्थायां यदि वायुतेज-
सोरभावेन चैतन्याभावो ऽभ्युपगम्यते, तर्हि मृतशरीरे कियत्का-
लानन्तरं समुत्पन्नानां कृम्यादीनां कथं चैतन्यम् । ततो यत्किं-
चिदेतत् । किं च । न चैतन्यं भूतमात्रकारणम् । तथा सति
चैतन्यस्य भूतमात्रजन्यस्वभावत्वात् तेषामपि तज्जनकस्वभावत्वात् 15
सर्वदा सर्वत्र घटादौ पुरुषादिष्विव व्यक्तचैतन्योत्पादो भवेत्,
निमित्ताविशेषात् । एवं च घटादिपुरुषयोरविशेषः स्यात् । ननु
कायाकारपरिणामप्राणापानपरिग्रहवद्भ्यो भूतेभ्यश्चैतन्यमुपलभ्यत
इति वचनात् पूर्वोक्तो ऽतिप्रसङ्गदोषावकाश इति चेत् । तन्न,
तस्यैव कायाकारपरिणामस्यैवानुपपद्यमानत्वात् । तथाहि । स 20
कायाकारपरिणामः किं पृथिव्यादिभूतमात्रनिबन्धन उत वस्तु-

न्तरनिमित्त उताहेतुक इति त्रयी गतिः। तत्र न तावदाद्यः पक्षः कक्षीकरणीयः, पृथिव्यादिसत्तायाः सर्वत्र सद्भावात् सर्वत्रापि कायाकारपरिणामप्रसङ्गः। तथाविधसाम्यादिभावसह-कारिकारणवैकल्यान्न सर्वत्र तत्प्रसङ्ग इति चेत्। तन्न, यतः सोऽपि साम्यादिभावो न वस्त्वन्तरनिमित्तः, तत्त्वान्तरापत्ति-
5 प्रसङ्गात्; किं तु पृथिव्यादिसत्तामात्रनिमित्तः, अतस्तस्यापि सर्वत्राप्यविशेषेण भावप्रसङ्गात् कुतः सहकारिकारणवैकल्यमिति। अथ "वस्त्वन्तरनिमित्तः" इति पक्षस्तदप्ययुक्तं, तथाभ्युपगमे जीवसिद्धिप्रसङ्गात्। अथाहेतुकः, तर्हि सदाभावादिप्रसङ्गः,
10 नित्यं सत्त्वमसत्त्वं वा हेतोरन्यानपेक्षणादिति वचनात्। तन्न लक्षते कायाकारपरिणामः संगच्छते। तदभावे तु दूरोत्सा-रितमेव प्राणापानपरिग्रहवत्त्वममीषां भूतानामिति चैतन्यं न भूतकार्यमित्यतो जीवगुण एव चेतनेत्यभ्युपगन्तव्यम्। किं च। गुणप्रत्यक्षत्वादात्मापि गुणी प्रत्यक्ष एव। प्रयोगो
15 यथा। प्रत्यक्ष आत्मा, स्मृतिजिज्ञासाचिकीर्षाजिगमिषासंश-यादिज्ञानविशेषाणां तद्गुणानां स्वसंवेदनप्रत्यक्षत्वात्। इह यस्य गुणाः प्रत्यक्षाः स प्रत्यक्षो दृष्टः, यथा घट इति। प्रत्यक्ष-गुणश्च जीवः। तस्मात्प्रत्यक्षः॥ अत्राह परः। अनैकान्तिको ऽयं हेतुः, यत आकाशगुणः शब्दः प्रत्यक्षः, न पुनराकाशम्।
20 तदयुक्तं, यतो नाकाशगुणः शब्दः किं तु पुद्गलगुणः, ऐन्द्रि-यकत्वात्, रूपादिवत्। एतच्च पुद्गलविचारे समर्थयिष्यते। अत्राह। ननु भवतु गुणानां प्रत्यक्षत्वात्तदभिन्नत्वाद्गुणिनो ऽपि

प्रत्यक्षत्वम्। किं तु देह एव ज्ञानादयो गुणा उपलभ्यन्ते।
अतः स एव तेषां गुणी युक्तः, यथा रूपादीनां घटः। प्रयोगो
यथा। ज्ञानादयो देहगुणा एव, तत्रैवोपलभ्यमानत्वात्, गौर-
त्वस्थूलत्वादिवत्। अत्रोच्यते। प्रत्यनुमानबाधितो ऽयं पक्षा-
भासः। तच्चेदम्। देहस्य गुणा ज्ञानादयो न भवन्ति, तस्य 5
मूर्तत्वाच्चाक्षुषत्वाद्वा, घटवत्। अतः सिद्धो गुणप्रत्यक्षत्वाद्गुणी
जीवो ऽपि प्रत्यक्षः। ततश्चाहंप्रत्ययग्राह्यं प्रत्यक्षमात्मानं निह्नु-
वानस्याश्रावणः शब्द इत्यादिवत् प्रत्यक्षविरुद्धो नाम पक्षाभासः।
तथा वक्ष्यमाणात्मास्तित्वानुमानसद्भावात् नित्यः शब्द इत्यादि-
वदनुमानविरुद्धो ऽपि आबालगोपालाङ्गनादिप्रसिद्धं चात्मानं 10
निराकुर्वतः "नास्ति सूर्यः प्रकाशकर्ता" इत्यादिवल्लोकविरोधः।
"अहं नाहं" चेति गदतः "माता मे वन्ध्या" इत्यादिवत्
स्ववचनविरोधश्च। तथा प्रतिपादितयुक्त्यात्मनः स्वसंवेदनप्रत्य-
क्षत्वादत्यन्ताप्रत्यक्षत्वादिति हेतुरप्यसिद्ध इति स्थितम्॥ तथा-
नुमानगम्यो ऽप्यात्मा। तानि चामूनि। जीवच्छरीरं प्रयत्नव- 15
ताधिष्ठितं, इच्छानुविधायिक्रियाश्रयत्वात्, रथवत्। १। श्रो-
त्रादीन्युपलब्धिसाधनानि कर्तृप्रयोज्यानि, करणत्वात्, वास्या-
दिवत्। २। देहस्यास्ति विधाता, आदिमत्प्रतिनियताकार-
त्वात्, घटवत्। यत्पुनरकर्तृकं तदादिमत्प्रतिनियताकारमपि
न भवति, यथाभ्रविकारः। यः स्वदेहस्य कर्ता स जीवः। 20
प्रतिनियताकारत्वं मेर्वादीनामप्यस्ति न च तेषां कश्चिद्विधा-
तेति तैरनैकान्तिको हेतुः स्यात्। अतस्तद्व्यवच्छेदार्थमादिम-

स्वविशेषणं द्रष्टव्यम्। ३। तथेन्द्रियाणामस्त्यधिष्ठाता, करणत्वात्, यथा दण्डचक्रादीनां कुलालः। ४। विद्यमानभोक्तृकं शरीरं, भोग्यत्वात्, भोजनवत्। यश्च भोक्ता स जीवः। ५। अथ साध्यविरुद्धसाधकत्वाद्विरुद्धा एवैते हेतवः। तथाहि। घटादीनां कर्त्रादिरूपाः कुम्भकारादयो मूर्ता अनित्यादिस्वभावाश्च दृष्टा इति। अतो जीवोऽप्येवंविध एव सिध्यति। एतद्विपरीतश्च जीव इष्ट इति। अतः साध्यविरुद्धसाधकत्वाद्विरुद्धत्वं हेतूनामिति चेत्। न, यतः खलु संसारिणो जीवस्याष्टकर्मपुद्गलवेष्टितत्वेन सशरीरत्वात् कथंचिन्मूर्तत्वान्नायं दोषः। तथा रूपादिज्ञानं क्वचिदाश्रितं, गुणत्वात्, रूपादिवत्। ६। तथा ज्ञानसुखादिकमुपादानकारणपूर्वकं, कार्यत्वात्, घटादिवत्। ७। न च शरीरे तदाश्रितत्वस्य तदुपादानत्वस्य चेष्टत्वात्सिद्धसाधनमित्यभिधातव्यं, तत्र तदाश्रितत्वतदुपादानत्वयोः प्राक्प्रतिव्यूढत्वात्। तथा प्रतिपक्षवानयमजीवशब्दः, व्युत्पत्तिमच्छुद्धपदप्रतिषेधात्। यत्र व्युत्पत्तिमतः शुद्धपदस्य प्रतिषेधो दृश्यते स प्रतिपक्षवान्। यथाघटोऽघटप्रतिपक्षवान्। अत्र अघटप्रयोगे शुद्धस्य व्युत्पत्तिमतश्च घटस्य पदस्य प्रतिषेधः। अतोऽवश्यं घटरूपेण प्रतिपक्षेण भाव्यम्। यस्तु न प्रतिपक्षवान्, न तत्र व्युत्पत्तिमतः शुद्धपदस्य प्रतिषेधः, यथाखरविषाणमडित्थ इति वा। अखरविषाणमित्यत्र खरविषाणमित्यशुद्धस्य सामासिकस्य पदस्य निषेधः। अत्र व्युत्पत्तिमत्त्वेऽपि शुद्धपदत्वाभावाद्विपक्षो नास्ति। अडित्थ

इत्यत्र तु व्युत्पत्तिमत्त्वाभावात् सत्यपि शुद्धपदत्वे नावश्यं जित्य-
लक्षणः कश्चित्पदार्थो जीववद्विपक्षभूतो ऽस्तीति। ८। तथा स्वश-
रीरे स्वसंवेदनप्रत्यक्षमात्मानं साधयित्वा परशरीरे ऽपि सामान्य-
तोदृष्टानुमानेन साध्यते। यथा। परशरीरे ऽप्यस्त्यात्मा, इष्टा-
निष्टयोः प्रवृत्तिनिवृत्तिदर्शनात्, यथा स्वशरीरे। दृश्येते च पर-
शरीर इष्टानिष्टयोः प्रवृत्तिनिवृत्ती। तस्मात्सात्मकं, आत्माभावे
तयोरभावात्, यथा घट इति। एतेन यदुक्तं "न सामान्यतो-
दृष्टानुमानादप्यात्मसिद्धिः" इत्यादि, तदप्यपास्तं द्रष्टव्यम्। ९।
तथा नास्ति जीव इति यो ऽयं जीवनिषेधध्वनिः स जीवास्ति-
त्वेनान्तरीयक एव, निषेधशब्दत्वात्। यथा नास्त्यत्र घट इति
शब्दो ऽन्यत्र घटास्तित्वाविनाभाव्येव। प्रयोगश्चात्र। इह यस्य
निषेधः क्रियते तत्क्वचिदस्त्येव, यथा घटादिकम्। निषिध्यते
च भवता "नास्ति जीवः" इतिवचनात्। तस्मादस्त्येवासौ।
यत्तु सर्वथा नास्ति, तस्य निषेधो ऽपि न दृश्यते, यथा पञ्च-
भूतातिरिक्तषष्ठभूतस्येति। नन्वसतो ऽपि खरविषाणादेर्निषेध-
दर्शनादनैकान्तिको ऽयं हेतुरिति चेत्। न। इह यत्किमपि
वस्तु निषिध्यते, तस्यान्यत्र सत एव विवक्षितस्थाने संयोग-१-
समवाय-२-सामान्य-३-विशेष-४-लक्षणं चतुष्टयमेव निषि-
ध्यते, न तु सर्वथा तदभावः प्रतिपाद्यते। यथा नास्ति गृहे
देवदत्त इत्यादिषु गृहे देवदत्तादीनां सतामेव संयोगमात्रं
निषिध्यते, न तु तेषां सर्वथैवास्तित्वमपाक्रियते। तथा
नास्ति खरविषाणमित्यादिषु खरविषाणादीनां सतामेव सम-

वाच्यमात्रं निराक्रियते । तथा नास्त्यन्यश्चन्द्रमा इत्यादिषु विद्यमानस्यैव चन्द्रमसो ऽन्यचन्द्रनिषेधाच्चन्द्रसामान्यमात्रं निषिध्यते न तु सर्वथा चन्द्राभावः प्रतिपाद्यते । तथा न सन्ति घटप्रमाणानि मुक्ताफलानीत्यादिषु घटप्रमाणतामात्ररूपो
5 विशेषो मुक्ताफलानां निषिध्यते, न तु तदभावः ख्याप्यत इति । एवं नास्त्यात्मेत्यत्रापि विद्यमानस्यैवात्मनो यत्र क्वचन येन केनचित्सह संयोगमात्रमेव त्वया निषेद्धव्यं, यथा नास्त्यात्मास्मिन् वपुषीत्यादि, न तु सर्वथात्मनो ऽसत्त्वमिति । अत्राह कश्चित् । ननु यदि यन्निषिध्यते तदस्ति, तर्हि मम त्रिलो-
10 केश्वरताप्यस्तु, युष्मदादिभिर्निषिध्यमानत्वात् । तथा चतुर्णां संयोगादिप्रतिषेधानां पञ्चमो ऽपि प्रतिषेधप्रकारो ऽस्ति, त्वयैव निषिध्यमानत्वात् । तदयुक्तम् । त्रिलोकेश्वरताविशेषमात्रं भवतो निषिध्यते, यथा घटप्रमाणत्वं मुक्तानां, न तु सर्वथेश्वरता, स्वशिष्यादीश्वरतायास्तवापि विद्यमानत्वात् । तथा प्रतिषेध-
15 स्यापि पञ्चसंख्याविशिष्टत्वमविद्यमानमेव निवार्यते । न तु सर्वथा प्रतिषेधस्याभावश्चतुःसंख्याविशिष्टस्य सद्भावात् । न तु सर्वमप्यसंबद्धमिदम् । तथाहि । अस्त्रिलोकेश्वरत्वं तावदस्त्येव निषिध्यते प्रतिषेधस्यापि पञ्चसंख्याविशिष्टत्वमपि विद्यमानमेव निवार्यते । तथा संयोगसमवायसामान्यविशेषाणामपि गृहदेव-
20 दत्तखरविषाणादिष्वसतामेव प्रतिषेध इति । अतो यन्निषिध्यते तदस्त्येवेत्येतत्कथं न भवत इति । अत्रोच्यते । देवदत्तादीनां संयोगादयो गृहादिष्वेवासंतो निषिध्यन्ते । अर्थान्तरे तु तेषां

ते सन्त्येव । तथाहि । गृहेणैव सह देवदत्तस्य संयोगः विद्यते,
अर्थान्तरेण त्वारामादिना वर्तत एव । गृहस्यापि देवदत्तेन सह
संयोगो नास्ति, खट्वादिना तु विद्यत एव । एवं विषाणस्यापि
खर एव समवाययोगो नास्ति, गवादावस्त्येव । सामान्यमपि
द्वितीयचन्द्राभावश्चन्द्र एव नास्ति, अर्थांतरे तु घटादावस्त्येव ।
षट्प्रमाणत्वमपि मुक्तासु नास्ति, अन्यत्र विद्यत एव । त्रिलो-
केश्वरतापि भवत एव नास्ति, तीर्थंकारादावस्त्येव । पञ्चसंख्या-
विशिष्टत्वमपि प्रतिषेधप्रकारेषु नास्ति, अनुत्तरविमानादावस्त्ये-
वेत्यनया विवक्षया ब्रूमः "यन्निषिध्यते तत्सामान्येन विद्यत एव"।
न त्वेवं प्रतिजानीमहे यद्यत्र निषिध्यते तत्तत्रैवास्तीति येन
व्यभिचारः स्यादेवं सत एव जीवस्य यत्र क्वापि निषेधः स्यान्न
पुनः सर्वत्रेति । तथास्ति देहेन्द्रियातिरिक्त आत्मा, इन्द्रियो-
परमे ऽपि तदुपलब्धार्थानुस्मरणात्, पञ्चवातायनोपलब्धार्थानु-
स्मर्तृदेवदत्तवत् । इति सिद्धमनुमानग्राह्य आत्मेति ॥ अनुमान-
ग्राह्यत्वे सिद्धे तदन्तर्भूतत्वेनागमोपमानार्थापत्तिग्राह्यतापि
सिद्धा ॥ किं च "प्रमाणपञ्चकाभावेन" इत्यादि यदप्यवादि,
तदपि मदिराप्रमादिविजृम्भितसोदरं, यतो हिमवदुत्पलपरि-
णामादीनां पिशाचादीनां च प्रमाणपञ्चकाभावे ऽपि विद्य-
मानत्वादिति । अतो यत्र प्रमाणपञ्चकाभावस्तदसदेवेत्यनै-
कान्तिकम् । इति सिद्धः प्रत्यक्षादिप्रमाणग्राह्य आत्मा ॥ स च
विवृत्तिमान्परलोकयायी । तत्र चानुमानमिदम् । तदहर्जात-
बालकस्याद्यस्तन्याभिलाषः पूर्वाभिलाषपूर्वकः, अभिलाषत्वात्,

द्वितीयदिनाद्यस्तनाभिलाषवत् । तदिदमनुमानमाद्यस्तनाभि-लाषस्याभिलाषान्तरपूर्वकत्वमनुमापयदर्थापत्त्या परलोकगामिनं जीवमाक्षिपति, तस्य जन्मान्यभिलाषान्तराभावादिति स्थितम् ॥

तथा कूटस्थनित्यतयात्मनो न घटते, यतो यथाविधः 5 पूर्वदशायामात्मा, तथाविध एव चेज्ज्ञानोत्पत्तिसमये ऽपि भवेत्, तदा प्रागिव कथमेष पदार्थपरिच्छेदकः स्यात्, प्रति-नियतस्वरूपाप्रच्युतिरूपत्वात्कौटस्थ्यस्य । पदार्थपरिच्छेदे तु प्रागप्रमातुः प्रमातृरूपतया परिणामात्कुतः कौटस्थ्यमिति ॥

तथा सांख्याभिमतमकर्तृत्वमप्ययुक्तम् । तथाहि । कर्तात्मा, 10 स्वकर्मफलभोक्तृत्वात् । यः स्वकर्मफलभोक्ता स कर्तापि दृष्टः । यथा कृषीवलः । तथा सांख्यकल्पितः पुरुषो वस्तु न भवति, अकर्तृकत्वात्, खपुष्पवत् । किं चात्मा भोक्तृत्वं स्वीक्रियते स च भुजिक्रियां करोति न वा । यदि करोति तदापराभिः क्रियाभिः किमपराद्धम् । अथ भुजिक्रियामपि न करोति, 15 तर्हि कथं भोक्तेति चिन्त्यम् । प्रयोगश्चात्र । संसार्यात्मा भोक्ता न भवति, अकर्तृत्वात्, मुक्तात्मवत् । अकर्तृभोक्तृत्वाभ्युपगमे च कृतनाशाकृताभ्यागमादिदोषप्रसङ्गः । प्रकृत्या कृतं कर्म न च तस्याः फलेनाभिसंबन्ध इति कृतनाशः । आत्मना च न कृतमथ च तत्फलेनाभिसंबन्ध इत्यकृतागम इत्यात्मनः कर्तृत्व-20 मङ्गीकर्तव्यम् ॥

तथा जडस्वरूपत्वमप्यात्मनो न घटते, तस्याबाधितानुभव-[illegible] । तथाहि । अनुपयोगस्वभाव आत्मा [illegible],

अचेतनत्वात्, गगनवत् । अथ चेतनासमवायादात्मनश्चेतनत्वमिति चेत्, तर्हि यथात्मनश्चेतनासमवायाच्चेतनत्वं, तथा घटस्यापि चेतनत्वप्रसङ्गः, समवायस्य नित्यस्यैकस्य व्यापिनः सर्वत्राप्यविशेषादित्यत्र बहु वक्तव्यम् । तत्तु नोच्यते, ग्रन्थगौरवभयात् । ततश्चात्मनः पदार्थपरिच्छेदकत्वमङ्गीकुर्वाणैश्चैतन्यस्वरूपतावश्य- अङ्गे पादिकान्यायेन प्रतिपत्तव्येति स्थितं चैतन्यलक्षणो जीव इति ॥

जीवश्च पृथिव्यप्तेजोवायुवनस्पतिद्वित्रिचतुःपञ्चेन्द्रियभेदादनेकविधः । ननु भवतु जीवलक्षणोपेतत्वाद्द्वीन्द्रियादीनां जीवत्वं, पृथिव्यादीनां तु जीवत्वं कथं श्रद्धेयं, व्यक्ततल्लिङ्गस्यानुपलब्धेरिति चेत् । सत्यं; यद्यपि तेषु व्यक्तं जीवलिङ्गं नोपलभ्यते, तथाप्यव्यक्तं तदुपलभ्यत एव । यथा हृत्पूरव्यतिमिश्रमदिरापानादिभिर्मूर्छितानां व्यक्तलिङ्गाभावेऽपि सजीवत्वमव्यक्तलिङ्गैर्व्यवह्रियते, एवं पृथिव्यादीनामपि सजीवत्वं व्यवहरणीयम् । ननु मूर्छितेषूच्छ्वासादिकमव्यक्तं चेतनालिङ्गमस्ति, न पुनः पृथिव्यादिषु तथाविधं किंचिच्चेतनालिङ्गमस्ति । नैतदेवं, पृथिवीकाये तावत्स्वस्वाकारावस्थितानां लवणविद्रुमोपलादीनां समानजातीयाङ्कुरोत्पत्तिमत्त्वमर्शोमांसाङ्कुरस्येव चेतनाचिह्नमस्त्येव । अव्यक्तचेतनानां हि संभावितैकचेतनालिङ्गानां वनस्पतीनामिव चेतनाभ्युपगन्तव्या । वनस्पतेश्च चैतन्यं विशिष्टर्तुफलप्रदत्वेन स्पष्टमेव । साधयिष्यते च । ततोऽव्यक्तोपयोगादिलक्षणसद्भावात्सचित्ता पृथिवीति स्थितम् । ननु च विद्रुम-

पाषाणादिपृथिव्याः कठिनपुद्गलात्मिकायाः कथं सचेतनत्वमिति चेत् । नैवं । उच्यते । यथास्थि शरीरानुगतं सचेतनं कठिनं च दृष्टं, एवं जीवानुगतं पृथिवीशरीरमपीति । अथवा पृथिव्यप्तेजोवायुवनस्पतयो जीवशरीराणि, छेद्यभेद्योत्क्षेप्यभोग्यघ्रेयरसनीयस्पृश्यद्रव्यत्वात्, सास्नाविषाणादिसंघातवत् । न हि पृथिव्यादीनां छेद्यत्वादि कश्चिदपह्नोतुं शक्यम् । न च पृथिव्यादीनां जीवशरीरत्वमनिष्टं साध्यते, सर्वस्य पुद्गलद्रव्यस्य शरीरत्वाभ्युपगमात् । जीवसहितत्वासहितत्वे च विशेषः । अथ शस्त्रोपहतं पृथिव्यादि कदाचिदचेतनं संघातत्वात्, पाणिपादसंघातवत् । तदेवं कथंचित्किंचिदचेतनमपि, शस्त्रोपहतत्वात्, पाण्यादिवदेव । न चात्यन्तं सदचित्तमेवेति ॥

अथ नाप्कायो जीवः, तल्लक्षणायोगात्, प्रस्रवणादिवदिति चेत् । नैवं, हेतोरसिद्धत्वात् । यथा हि हस्तिनः शरीरं कललावस्थायामधुनोत्पन्नस्य द्रवं चेतनं च दृष्टं, एवमप्कायो ऽपि, यथा वाण्डके रसमात्रमसंजातावयवमनभिव्यक्तचञ्च्वादिविभागं चेतनावद्दृष्टम् । एवं चाप्कायजीवानामपि । प्रयोगश्चायम् । सचेतना आपः शस्त्रानुपहतत्वे सति द्रवत्वात्, हस्तिशरीरोपादानभूतकललवत् । हेतोर्विशेषणोपादानात् प्रस्रवणादिव्युदासः । १ । तथा सात्मकं तोयमनुपहतद्रवत्वात्, अण्डकमध्यस्थितकललवदिति । २ । एते वा प्राग्वज्जीववच्छरीरत्वे सिद्धे सति प्रमाणम् । सचेतना हिमादयः क्वचित्, अप्कायत्वात्, इतरोदकवदिति । तथा क्वचन चेतनावत्य आपः, खातभूमि-

स्वाभाविकसंभवात्, दर्दुरवत् । अथवा सचेतना अन्तरिक्षोद्भवा
आपः, अभ्रादिविकारे स्वत एव संभूय पातात्, मत्स्यवदिति ।
तथा शीतकाले बहु शीते पतति नद्यादिष्वल्पे ऽल्पो बहौ बहु-
र्बहुतरे च बहुतरो य ऊष्मा संवेद्यते, स जीवहेतुक एव, अल्प-
बहुबहुतरमिलितमनुष्यशरीरेष्वल्पबहुबहुतरोष्मवत् । प्रयोग- 5
श्चायम् । शीतकाले जलेषूष्मा उष्णस्पर्शवस्तुप्रभवः, उष्णस्पर्शत्वात्,
मनुष्यशरीरोष्मवदिति । न च जलेष्वयमुष्णस्पर्शो भवन्तः,
"अप्सु स्पर्शः शीत एव" इति वैशेषिकादिवचनात् । तथा शीत-
काले शीते पतति निस्तरङ्गसरस्तडागादेः पश्चिमाया दिशि
स्थितैः यदा तडागादिकं निरीक्ष्यते, तदा तज्जलान्निर्गतो 10
बाष्पसंघातो दृश्यते, सोऽपि जीवहेतुक एव । प्रयोगश्चे-
दम् । शीतकाले जलेषु बाष्प उष्णस्पर्शवस्तुप्रभवः, बाष्पत्वात्,
शीतकाले शीतजलसिक्तमनुष्यशरीरबाष्पवत् । प्रयोगद्वयेऽपि
यदेवोष्णस्पर्शस्य बाष्पस्य च निमित्तमुष्णस्पर्शं वस्तु, तदेव
तेजःशरीरोपेतमात्माख्यं वस्तु प्रतिपत्तव्यं, जलेष्वन्ययोरुष्णस्पर्श- 15
बाष्पयोर्निमित्तस्य वस्तुनोऽभावात् । न च शीतकाल उत्कुरु-
टिकावकरतलगतोष्णस्पर्शेन तन्मार्गनिर्गतबाष्पेण च प्रकृतहेतो-
र्व्यभिचारः शङ्क्यः, तयोरप्यवकरमध्योत्पन्नमृतजीवशरीरनिमि-
त्तत्वाभ्युपगमात् । ननु मृतजीवानां शरीराणि कथमुष्णस्पर्श-
बाष्पयोर्निमित्तीभवन्तीति चेत् । उच्यते । यथाग्निदग्धपाषाण- 20
खण्डिकासु जलप्रक्षेपे विध्यातादप्यग्नेरुष्णस्पर्शबाष्पौ भवतः,
तथा शीतसंयोगे मृतेष्वपीति । एवमन्यत्रापि बाष्पोष्म-

स्पर्शयोर्निमित्तं सचित्तमचित्तं वा यथासंभवं वक्तव्यम्। इत्थमेव च शीतकाले पर्वतनितम्बस्य निकटे हृदादीनामूष्मा च उष्मा संवेद्यते, सोऽपि मनुष्यवपुरूष्मवज्जीवहेतुरेवावगन्तव्यः। एवं ग्रीष्मकाले बाह्यतापेन तैजसशरीरकस्य मन्दीभवनात् जलादिषु यः शीतलस्पर्शः सोऽपि मानुषशरीरशीतलस्पर्शव-ज्जीवहेतुको ऽभ्युपगन्तव्यः। तत एवंविधलक्षणभाक्त्वाज्जीवा भवन्त्यप्कायाः ॥ २ ॥

यथा रात्रौ खद्योतकस्य देहपरिणामो जीवप्रयोगनिर्वर्तितशक्तिराविष्कारितः एवमङ्गारादीनामपि प्रतिविशिष्टप्रकाशा-दिशक्तिरनुमीयते जीवप्रयोगविशेषाविर्भावितेति। यथा वा ज्वरोष्मा जीवप्रयोगं नातिवर्तते, एवमुष्माप्यग्निजन्तूनां, न च मृता ज्वरिणः क्वचिदुपलभ्यन्ते। एवमन्वयव्यतिरेकाभ्यामग्नेः सचित्तता ज्ञेया। प्रयोगश्चात्र। आत्मसंयोगाविर्भूतोऽङ्गा-रादीनां प्रकाशपरिणामः, शरीरस्थत्वात्, खद्योतदेहपरि-णामवत् ।१। तथात्मसंयोगपूर्वको ऽङ्गारादीनामूष्मा, शरीरस्थ-त्वात्, ज्वरोष्मवत्। न चादित्यादिभिरनैकान्तः, सर्वेषामुष्ण-स्पर्शस्यात्मसंयोगपूर्वकत्वात् ।२। तथा सचेतनं तेजः, यथा-योग्याहारोपादानेन वृद्ध्यादिविकारोपलम्भात्, पुरुषवपुर्वत्। एवमादिलक्षणैराग्नेयजन्तवोऽवसेयाः ॥ ३ ॥

यथा देवस्य स्वशक्तिप्रभावान्मनुष्याणां चाञ्जनविद्यामन्त्रै-रन्तर्धाने शरीरं चक्षुषानुपलभ्यमानमपि विद्यमानं चेतनाव-च्चाध्यवसीयते, एवं वायावपि चक्षुषोर्ग्राह्यं रूपं न भवति, सूक्ष्म-

परिणामात्, परमाणोरिव वह्निप्रेरणापाषाणगुडिकागता-विसारैरिव वा। प्रयोगश्चायम्। चेतनावान् वायुः, अपर-प्रेरिततिर्यगनियमितदिग्गतिमत्त्वात्, गवाश्वादिवत्। तिर्यगेव गमननियमादनियमितविशेषणोपादानाच्च परमाणुना न व्यभि-चारः, तस्य नियमितगतिमत्त्वात्, जीवपुद्गलयोरनुश्रेणिगतिरिति वचनात्। एवं वायुरप्युपपत्त्या चेतनावानवगन्तव्यः ॥ ६ ॥

वनस्पतिकायस्यानेकविधस्य [illegible] शरीराणि न जीवव्यापारमन्तरेण मनुष्यशरीरसमानधर्मभाञ्जि भवन्ति। तथाहि। यथा पुरुषशरीरं बालकुमारयुववृद्धतापरिणाम-विशेषवत्त्वाच्चेतनावदधिष्ठितं स्पष्टमुपलभ्यते, तथेदं वनस्पतिशरीरम्। यतो बालः केतकतरुर्युवा वृद्धश्च संवृत्त इति, अतः पुरुषशरीरतुल्यत्वात् सचेतनो वनस्पतिरिति। तथा, यथेदं मनुष्यशरीरमनवरतं बालकुमाराद्यवस्था-विशेषैः प्रतिनियतं वर्धते, तथेदमपि वनस्पतिशरीरमङ्कुर-किसलयशाखाप्रशाखादिभिर्विशेषैः प्रतिनियतं वर्धत इति। तथा, यथा मनुष्यशरीरं ज्ञानेनानुगतं, एवं वनस्पतिशरीर-मपि, यतः शमीप्रपुन्नाटसिद्धेसरकासुन्दकबब्बूलकागस्त्यामलकी-कङ्किप्रभृतीनां स्वापविबोधतस्तद्भावः। तथाधोनिखातद्रविण-राशेः स्वप्ररोहेणावेष्टनम्। तथा वटपिप्पलनिम्बादीनां प्रावृड्जलधरनिनादशिशिरवायुसंस्पर्शादङ्कुरोद्भेदः। तथा मत्त-कामिनीसनूपुरसुकुमारचरणताडनादशोकतरोः पल्लवकुसुमो-द्भेदः। तथा युवत्यालिङ्गनात् पनसस्य। तथा सुरभिसुरा-

गण्डूषसेकाद्बकुलस्य। तथा सुरभिनिर्मलजलसेकाच्चम्पकस्य। तथा कटाक्षवीक्षणात्तिलकस्य। तथा पञ्चमस्वरोद्गारादशोकस्य विरहकस्य च पुष्पविकिरणम्। तथा पद्मादीनां प्रातर्विकसनं, घोषातक्यादिपुष्पाणां च संध्यायां, कुमुदादीनां तु चन्द्रोदये। तथासन्नमेघवृष्टौ शम्या अवकरणम्। तथा वल्लीनां वृत्त्याद्याश्रयोपसर्पणम्। तथा लज्जालुप्रभृतीनां हस्तादिसंस्पर्शात्पत्रसंकोचादिका परिस्फुटा क्रियोपलभ्यते। अथवा सर्वमप्येते-ष्विन्द्रियैव ज्ञानात्, न चैतदनन्तराभिहितं तत्सर्वमपि [illegible] ज्ञानमन्तरेण घटते। तस्मात्सिद्धं चेतनावत्त्वं वन-

10 स्पतेरिति। तथा, यथा मनुष्यशरीरं शस्त्रादिच्छिन्नं शुष्यति, तथा तरुशरीरमपि पल्लवकुसुमादिच्छिन्नं विशोषमुपगच्छद्दृष्टम्। न चाचेतनानामयं धर्मोऽस्ति। तथा, यथा मनुष्यशरीरं स्तनक्षीरव्यञ्जनौदनाद्याहाराभ्यवहारादाहारकं, एवं वनस्पतिशरीरमपि भूजलाद्याहाराभ्यवहारादाहारकम्। न चैतदाहारकत्व-

15 मचेतनानां दृष्टम्। अतस्तत्सद्भावाच्चेतनत्वमिति। तथा, यथा मनुष्यशरीरं नियतायुष्कं, तथा वनस्पतिशरीरमपि नियतायुष्कम्। तथाह्यस्य दशवर्षसहस्राण्युत्कृष्टमायुः। तथा, यथा मनुष्यशरीरमिष्टानिष्टाहारादिप्राप्त्या वृद्धिहान्यात्मकं, तथा वनस्पतिशरीरमपि। तथा, यथा मनुष्यशरीरस्य तत्तद्रोग-

20 संपर्काद्रोगपाण्डुत्वोदरवृद्धिशोफकृशत्वाङ्गुलिनासिकाविरलीभवन-विगलनादि, तथा वनस्पतिशरीरस्यापि तथाविधरोगोद्भवात्पुष्पफलपत्रत्वगन्यथाभवनपतनादि। तथा, यथा

मनुष्यशरीरस्यौषधप्रयोगाद्वृद्धिहानिक्षतभग्नसंरोहणानि, तथा वनस्पतिशरीरस्यापि । तथा, यथा मनुष्यशरीरस्य रसायनस्नेहाद्युपयोगाद्विशिष्टकान्तिरसबलोपचयादि, तथा वनस्पतिशरीरस्यापि विशिष्टनभोऽम्बुजलसेकादिविशिष्टरसवीर्यस्निग्ध-त्वादि । तथा, यथा स्त्रीशरीरस्य तथाविधदोहदपूरणात्पुत्रादि-प्रसवनं, तथा वनस्पतिशरीरस्यापि तत्पूरणात्पुष्पफलादिप्रसवन-क्रियादि । तथा च प्रयोगः । वनस्पतयः सचेतनाः बालकुमार-वृद्धावस्था -१- प्रतिनियतवृद्धि -२- स्वापप्रबोधस्पर्शादिहेतुकोत्क्षे-पसंकोचाश्रयोपसर्पणादिविशिष्टानेकक्रिया -३- छिन्नावयवम्लानि -४- प्रतिनियतप्रदेशाहारग्रहण -५- वृक्षायुर्वेदाभिहितपुष्टा-निष्टाहारादिनिमित्तकवृद्धिहानि -६- -७- आयुर्वेदोदितन-द्रोग -८- विशिष्टौषधप्रयोगसंपादितवृद्धिहानिक्षतभग्नसंरो-हण -९- प्रतिनियतविशिष्टशरीररसवीर्यस्निग्धत्वरूक्षत्व -१०- विशिष्टदोहदा -११- दिमत्त्वान्यथानुपपत्तेः, विशिष्टस्त्रीशरीर-वत् । अथवैते हेतवः प्रत्येकं पक्षेण सह योज्याः अयं वा संक्षि-प्तोऽर्थः प्रयोगः । सचेतना वनस्पतयो जन्मजरामरणरोगा-दीनां समुदितानां सद्भावात्, स्त्रीवत् । अत्र समुदितानां जन्मादीनां ग्रहणात् "जातं तद्दधि" इत्यादिव्यपदेशदर्शना-द्दध्यादिभिरचेतनैर्न व्यभिचारः शङ्क्यः । तदेवं पृथिव्यादीनां सचेतनत्वं सिद्धम् । आप्तवचनाद्वा सर्वेषां सात्मकत्वसिद्धिः ॥

द्वीन्द्रियादिषु च कृमिपिपीलिकाभ्रमरमनुष्यजलचरस्थल-चरखचरपश्वादिषु न केषांचित्सात्मकत्वे विगानमस्ति । ये तु

तत्रापि विप्रतिपद्यन्ते, तान् प्रतीदमभिधीयते । इन्द्रियेभ्यो व्यतिरिक्त आत्मा, इन्द्रियव्यपगमे ऽपि तदुपलब्धार्थानुस्मरणात् । प्रयोगो ऽत्र । इह यो यदुपरमे यदुपलब्धानामर्थानामनुस्मर्ता, स तेभ्यो व्यतिरिक्तः, यथा गवाक्षैरुपलब्धानामर्थानां गवाक्षोपरमे ऽपि देवदत्तः । अनुस्मरति चायमात्मान्धबधिरत्वादिकाले ऽपीन्द्रियोपलब्धानर्थान् । अतः स तेभ्यो ऽतिरिक्त इति । तथेन्द्रियेभ्यो व्यतिरिक्त आत्मा, इन्द्रियव्यापारे ऽपि कदाचिदनुपयुक्तावस्थायां वस्त्वनुपलम्भात् । प्रयोगश्चात्र । इन्द्रियेभ्यो व्यतिरिक्त आत्मा, तद्व्यापारे ऽप्यर्थानुपलम्भात् । इह यो यद्व्यापारे ऽपि नैवोपलभ्यमर्थं नोपलभते, स तेभ्यो भिन्नो दृष्टः, यथान्यमनस्कतयानुपयुक्तो ऽपाङ्गेभ्यो देवदत्त इति । अथवेदमनुमानम् । समस्तेन्द्रियेभ्यो भिन्नो जीवो ऽन्येनोपलब्धे ऽन्येन विकारग्रहणात् । इह यो ऽन्येनोपलब्धे ऽन्येन विकारं प्रतिपद्यते, स तस्माद्भिन्नो दृष्टः, यथा स्वप्रासादोपरि पूर्ववातायनेन रमणीमवलोक्यापरवातायनेन समायातायास्तस्याः करादिना कुचस्पर्शादिविकारमुपदर्शयन्देवदत्तः । तथा चायमात्मा चक्षुषावलोक्याम्लं दृष्ट्वा रसनेन लालास्रवणादिकं विकारं प्रतिपद्यते । तस्मात्तयोर्भिन्न इति । अथवेन्द्रियेभ्यो व्यतिरिक्त आत्मा अन्येनोपलब्धस्यान्येन ग्रहणात् । इह यो घटादिकमन्येनोपलब्धमन्येन गृह्णाति, स ताभ्यां भेदवान् दृष्टः, यथा पूर्ववातायनेन घटमुपलभ्यापरवातायनेन गृह्णन् ताभ्यां देवदत्तः । गृह्णाति च चक्षुषोपलब्धं घटादिकमर्थं

कृष्णादिना जीवः; तलक्षणाभ्यां भिन्न इति । एवमन्यान्यनेकान्तानु-मानानि जैनाश्च युक्त्या विशेषावश्यकटीकादिभ्यः स्वयं कर्त-व्यानीति । प्रोक्तं विस्तरेण प्रथमं जीवतत्त्वम् ॥

अजीवतत्त्वं व्याचिख्यासुराह "यश्चैतद्विपरीतवान्" इत्यादि । चैतन्यादिविपरीतानि विशेषणानि विद्यन्ते यस्य स एतद्विप-रीतवान्, सो ऽजीवः समाख्यातः । "यश्चैतद्वैपरीत्यवान्" इति पाठे तु । यः पुनरेषां जीवधर्माणां वैपरीत्यमन्यथात्वं तद्वानजीवः स समाख्यातः । चैतन्यादिधर्मेभ्यो रूपरसगन्धस्पर्शादिभ्यो भिन्ना-भिन्नो नरामरादिभवान्तरानुयायी ज्ञानावरणादिकर्मणामक-र्ता तत्फलस्य भोक्ता जडस्वरूपश्चाजीव इत्यर्थः । स च धर्माधर्माकाशकालपुद्गलभेदात्पञ्चविधो ऽभिधीयते । तत्र धर्मो लोकव्यापी नित्यो ऽवस्थितो ऽरूपी द्रव्यमस्तिकायो ऽसंख्य-प्रदेशो गत्युपष्टम्भकारी च भवति । अत्र नित्यशब्देन स्वभावा-दप्रच्युत आख्यायते । अवस्थितशब्देनान्यूनाधिक आविर्भाव्यते । अन्यूनाधिकत्वानादिनिधनत्वे यताभ्यां न स्वतत्त्वं व्यभिचरन्ति । तथारूपिग्रहणादमूर्तं उच्यते । अमूर्तश्च रूपरसगन्धस्पर्शपरि-णामबाह्यवर्त्यभिधीयते । न खलु मूर्तिं स्पर्शादयो व्यभिचरन्ति, सहचारित्वात् । यत्र हि रूपपरिणामस्तत्र स्पर्शरसगन्धैरपि भाव्यम् । अतः सहचरमेतच्चतुष्टयमन्ततः परमाणावपि विद्यते । तथा द्रव्यग्रहणाद्गुणपर्यायवान् प्रोच्यते, गुणपर्यायवद्द्रव्यमिति वचनात् । तथास्तयः प्रदेशाः प्रकृष्टा देशाः प्रदेशा निर्वि-भागानि खण्डानीत्यर्थः । तेषां कायः समुदायः कथ्यते । तथा

लोकव्यापीति वचनेनासंख्येयप्रदेशत्वेन च लोकाकाशप्रदेश-प्रमाणप्रदेशो निर्दिश्यते । तथा स एव गतेः परिणतानां जीवपुद्गलानामुपकारको ऽपेक्षाकारणमित्यर्थः । कारणं हि त्रिविधमुच्यते, यथा घटस्य मृत्परिणामिकारणं १, दण्डादयो ऽपेक्षाकारणं निमित्तकारणं २, कुम्भकारो निर्वर्तकं कारणम् ३ । तदुक्तम् ।

निर्वर्तकं निमित्तं परिणामश्च त्रिधेष्यते हेतुः ।
कुम्भस्य कुम्भकारो यथा मृदिति समसंख्यम् ॥

निमित्तकारणं च द्वेधा निमित्तकारणमपेक्षाकारणं च । यत्र दण्डादिषु प्रायोगिकी वैस्रसिकी च क्रिया भवति नास्ति कुम्भकारोऽपि निमित्तकारणम् । यत्र तु धर्मादिद्रव्येषु वैस्रसिक्येव क्रिया नास्ति निमित्तकारणत्वेऽपि विशेषकारणत्वज्ञापनार्थ-मपेक्षाकारणमित्युच्यते । धर्मादिद्रव्यमतः क्रियापरिणाममपेक्षमाणं जीवादिकं गत्यादिक्रियापरिणतिं पुष्णातीति कृत्वा ततो ऽयं धर्मो ऽपेक्षाकारणम् १ । एवमधर्मो ऽपि लोकव्यापित्वादिसकल-विशेषणविशिष्टो धर्मवन्निर्विरोधं मन्तव्यः, नवरं स्थित्युपष्टम्भ-कारी स्वत एव स्थितिपरिणतानां जीवपुद्गलानां स्थितिविषये ऽपेक्षाकारणं वक्तव्यः २ । एवमाकाशमपि लोकालोकव्यापक-मनन्तप्रदेशं नित्यमवस्थितमरूपि द्रव्यमस्तिकायो ऽवगाहोप-कारकं च वक्तव्यं, नवरं लोकालोकव्यापकमिति । ये केचना-चार्याः कालं द्रव्यं नाभ्युपयन्ति किं तु धर्मादिद्रव्याणां पर्यायमेव, तन्मते धर्माधर्माकाशपुद्गलजीवाख्यपञ्चास्तिकायात्मको लोकः ।

द्रव्यत्वं भजते, तथैकः समयो ऽपीति। अयं च कालो न निर्वर्तककारणं नापि परिणामिकारणं, किं तु स्वयं संभवतां भावानामस्मिन् काले भवितव्यं नान्यदेत्यपेक्षाकारणम्। कालकृता वर्तनाद्या वक्ष्यमाणा उपकाराः। अथवा वर्तनाद्या उपकाराः
5 कालस्य लिङ्गानि। ततस्तानाह "वर्तना परिणामः क्रिया परत्वापरत्वे च" [तत्त्वार्थाधिगमः ५, २२]। तत्र वर्तन्ते स्वयं पदार्थाः, तेषां वर्तमानानां प्रयोजिका कालाश्रया वृत्तिर्वर्तना, प्रथमसमयाश्रया स्थितिरित्यर्थः १। परिणामो द्रव्यस्य स्वजात्यपरित्यागेन परिस्पन्देतरप्रयोगजपर्यायस्वभावः परिणामः।
10 तद्यथा। वृक्षस्याङ्कुरमूलाद्यवस्थाः परिणामः, आसीदङ्कुरः सम्प्रति स्कन्धवानिदानीं पुष्पिष्यतीति। पुरुषद्रव्यस्य बालकुमारवृद्धाद्यवस्थाः परिणामः। एवमन्यत्रापि। परिणामो द्विविधः, अनादिरमूर्तेषु धर्मादिषु, मूर्तेषु तु सादिरभ्रेन्द्रधनुरादिषु स्तम्भकुम्भाम्भोरुहादिषु च। ऋतुविभागकृतो वेलाविभागकृतश्च
15 परिणामस्तुल्यजातीयानां वनस्पत्यादीनामेकस्मिन्काले विचित्रो भवति २। प्रयोगविस्रसाभ्यां जनितो जीवानां परिणामेन व्यापारकरणं क्रिया, तस्या अनुग्राहकः कालः। तद्यथा। नष्टो घटः, सूर्यं पश्यामि, भविष्यति वृष्टिरित्यादिका अतीतादिव्यपदेशाः परस्परासंकीर्णा यदपेक्षया वर्तन्ते, स कालः ३।
20 इदं परमिदमपरमितिप्रत्ययाभिधाने कालनिमित्ते ४-५ तदेवं वर्तनाद्युपकारानुमेयः कालो द्रव्यं मानुषक्षेत्रे। मनुष्यलोकाद्बहिः कालद्रव्यं नास्ति। यतो हि भावानामत्र नवनवोत्पद्यन्ते व्यय-

भिव्यक्ति च ते । तथा स्वभावविप्रकर्षाद्भूतपिशाचादयो नोपलभ्यन्ते, न च ते न सन्ति ।१। तथातिसामीप्यात् । यथा । नेत्रकज्जलं नोपलभ्यते । तत्किं तन्नास्ति । तदस्त्येव, पुनरतिसामीप्यान्नोपलभ्यते ।२। तथेन्द्रियघातात् । यथा । अन्धबधिरादयो रूपशब्दादीन्नोपलभन्ते । तत्किं रूपादयो न सन्ति । सन्त्येव ते, पुनरिन्द्रियघातान्नोपलभ्यन्ते ।३। तथा मनोनवस्थानात् । यथा । अनवस्थितचेता न पश्यति । उक्तं च ।

इषुकारनरः कश्चिद्बाणासक्तः परिष्कुर्वन् ।
न जानाति पुरो यान्तं यथा ध्यानं समाचरेत् ॥१॥

तत्किं राजा न गतः । स गत एव, पुनरनवस्थितचेतस्त्वान्न दृष्टवान् । नष्टचेतसां वा सतो ऽपि भावस्यानुपलब्धिः ।४। तथा सौक्ष्म्यात् । यथा । जालकान्तरगतधूमोष्मनीहारादीनां त्रसरेणवो नोपलभ्यन्ते, परमाणुद्व्यणुकादयो वा सूक्ष्मनिगोदादयो नोपलभ्यन्ते । तत्किं न सन्ति । सन्त्येव ते, पुनः सौक्ष्म्यान्नोपलब्धिः ।५। तथावरणात् । कुड्यादिव्यवधानाज्ज्ञानाद्यावरणाच्चानुपलब्धिः । तत्र व्यवधानात् । यथा । कुड्यान्तरे व्यवस्थितं वस्तु नोपलभ्यते । तत्किं नास्ति । किं तु तदस्त्येव, पुनर्व्यवधानान्नोपलब्धिः । एवं स्वकर्णकन्धरामस्तकपृष्ठानि नोपलभ्यन्ते चन्द्रमण्डलस्य च सदपि परभागो न दृश्यते, अर्वाग्भागेन व्यवहितत्वात् । ज्ञानाद्यावरणाच्चानुपलब्धिः । यथा । मतिमान्द्यात्सतामपि शास्त्रसूक्ष्मार्थविशेषाणामनुपलब्धिः, सतो ऽपि वा जलधिजलपलप्रमाणस्यानुपलब्धिः । विस्मृतेर्वा, पूर्वोपलब्धस्य वस्तुनो

ऽनुपलब्धिः। सौक्ष्म्यात्, यतामपि तत्त्वानां जीवादीनामनुप-लब्धिरित्यादि। ६। तथाभिभवात्, सूर्यादितेजसाभिभूतानि ग्रहनक्षत्राणि नोपलभ्यन्ते। तत्कथं तेषामभावः। किं तु तानि सन्त्येव, पुनरभिभवान्न दृश्यन्ते। एवमन्धकारे ऽपि घटाद्यो नोपलभ्यन्ते। ७। समानाभिहाराच्च, यथा मुद्गराशौ मुद्गमुष्टिः तिलराशौ तिलमुष्टिर्वा क्षिप्ता सती सूपलक्षितापि नोप-लभ्यते, जले क्षिप्तानि लवणादीनि वा नोपलभ्यन्ते। तत्कथं तेषामभावः। तानि सन्त्येव, पुनः समानाभिहारान्नोपलब्धिः।८। तथा चोक्तं सांख्यसप्ततौ [७]॥ 

अतिदूरात्सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात्। 10
सौक्ष्म्याद्व्यवधानादभिभवात्समानाभिहाराच्च॥ १॥ इति॥

एवमष्टधापि सत्स्वभावानामपि भावानां यथानुपलब्धो ऽभिहितः, एवं धर्मास्तिकायाद्यो ऽपि विद्यमाना अपि स्वभावविप्रकर्षान्नोपलभ्यन्त इति मन्तव्यम्॥

आह परः। ये ऽत्र देशान्तरगतदेवदत्ताद्यो दर्शिताः, 15 ते ऽस्माकमप्रत्यक्षा अपि देशान्तरगतलोकानां केषांचि-त्प्रत्यक्षा एव सन्ति। तेन तेषां सत्त्वं प्रतीयते। धर्मास्तिकाया-द्यस्तु केषांचिदपि कदापि नोपलभ्यन्ते। तत्कथं तेषां सत्ता निश्चीयत इति। अत्रोच्यते। यथा देवदत्तादयः केषांचित्प्रत्य-क्षत्वात्सन्तो निश्चीयन्ते, तथा धर्मास्तिकायाद्यो ऽपि केवलिनां 20 प्रत्यक्षत्वात्किं न सन्तः प्रतीयन्ताम्। यथा वा परमाणवो नित्यमप्रत्यक्षा अपि कार्यानुमेयाः स्युः, तथा धर्मास्तिकाया-

द्यो ऽपि किं न स्वकार्यानुमेया भवेयुः । धर्मास्तिकायादीनां कार्याणि चामूनि । तत्र धर्मो गत्युपग्रहकार्यानुमेयः, अधर्मः स्थित्युपग्रहकार्यानुमेयः, अवगाहोपकारानुमेयमाकाशं, वर्तना-
द्युपकारानुमेयः कालः, प्रत्यक्षानुमानावसेयाश्च पुद्गलाः । नन्वा-
5 काशादयः स्वकार्यानुमेया भवन्तु, धर्माधर्मौ तु कथम् । अत्रो-
च्यते युक्तिः । धर्माधर्मौ हि स्वत एव गतिस्थितिपरिणतानां
द्रव्याणामुपगृह्णाते ऽपेक्षाकारणतया, आकाशकालादिवत्;
न पुनर्निर्वर्तककारणतया । निर्वर्तकं हि कारणं तदेव जीव-
द्रव्यं पुद्गलद्रव्यं वा गतिस्थितिक्रियाविशिष्टं, धर्माधर्मौ पुनर्गति-
10 स्थितिक्रियाविशिष्टानां द्रव्याणामुपकारकावेव न पुनर्बलाद्गति-
स्थितिनिर्वर्तकौ । यथा च सरित्तटाकह्रदसमुद्रेषु वेगवाहिनि
सति मत्स्यस्य स्वयमेव संजातजिगमिषस्योपग्राहकं जलं निमित्त-
तयोपकरोति, दण्डादिवत्कुम्भकारे कर्तरि मृदः परिणामिन्याः,
नभोवद्वा नभश्चरतां नभश्चराणामपेक्षाकारणं; न पुनस्तज्जलं
15 गतेः कारणभावं बिभ्राणमगच्छन्तमपि मत्स्यं बलात्प्रेर्य गम-
यति, क्षितिर्वा स्वयमेव तिष्ठतो द्रव्यस्य स्थानभूयमापनीपद्यते
न पुनरतिष्ठद्द्रव्यं बलादवनिरवस्थापयति । व्योम वावगाहमानस्य
स्वत एव द्रव्यस्य हेतुतामुपेत्यवगाहं प्रति न पुनरनवगाहमान-
मवगाहयति खावष्टम्भात् । स्वयमेव कृषीवलानां कृष्यारम्भ-
20 मनुतिष्ठतां वर्षमपेक्षाकारणं दृष्टं न च पुनः कुर्वतस्तांस्तद्वर्ष-
मारम्भयद्वर्षवारि प्रतीतम् । प्रावृषि वा नवाम्भोधरध्वनिश्रवण-
निमित्तोपाधीयमानगर्भा स्वत एव प्रसूते बलाका न चाप्र-

सूयमानां तामभिनवजलधरनिनादः प्रसभं प्रसावयति । प्रति-
बुध्य वा पुरुषः प्रतिबोधनिमित्तामवस्थाविरतिमातिष्ठमानो दृष्टो
न च पुमांसमविरतं विरमयति बलात्प्रतिबोधः । न च गत्यु-
पकारो ऽवगाहलक्षणाकाशस्योपपद्यते किं तर्हि धर्मस्यैवोपकारः
स दृष्टः । स्थित्युपकारस्याधर्मस्य नावगाहलक्षणस्य व्योम्नः । अवश्य- 5
मेव हि द्रव्यस्य द्रव्यान्तरादसाधारणः कश्चिद्गुणो ऽभ्युपेयः ।
द्रव्यान्तरत्वं च युक्तेरागमाद्वा निश्चेयम् । युक्तिरनन्तरमेवाग्रतो
वक्ष्यते । आगमस्त्वयम् । "कइणं भंते दव्वा पण्णत्ता गोयमा छ
दव्वा पण्णत्ता । तं जहा । धम्मत्थिकाए, अधम्मत्थिकाए, आगास-
त्थिकाए, पुग्गलत्थिकाए, जीवत्थिकाए, अद्धासमए" ॥ 10

ननु धर्मद्रव्योपकारनिरपेक्षमेव शकुनेरुत्पतनमग्नेरूर्ध्वज्वलनं
मरुतश्च तिर्यक्पवनं स्वभावादेवानादिकालीनादिति । उच्यते ।
प्रतिज्ञामात्रमिदं, नार्हन्तं प्रति हेतुदृष्टान्तावनवद्यौ स्तः ।
स्वाभाविक्या गतेर्धर्मद्रव्योपकारनिरपेक्षायास्तं प्रत्यसिद्धत्वात्,
यतः सर्वेषामेव जीवपुद्गलानामासादितगतिपरिणतीनामुपग्राहकं 15
धर्ममनुरुध्यन्ते ऽनेकान्तवादिनः स्थितिपरिणामभाजां चाधर्मं;
आभ्यां च न गतिस्थिती क्रियेते, केवलं साचिव्यमात्रेणोप-
कारकत्वं, यथा भिक्षा वासयति कारीषो ऽग्निरध्यापयतीति ।
ननु तथापि लोकालोकव्यापिधर्माधर्मद्रव्यास्तित्ववादिनः संज्ञा-
मात्रमेव "तदुपकारौ गतिस्थित्युपग्राहौ" इति [तत्त्वार्थाधि- 20
गम० ५, १०]। अथ आगद्यते युक्तिः । अवधत्तां भवान् ।
गतिस्थिती ये जीवानां पुद्गलानां च ते स्वतःपरिणामावि-

भावात् परिणामिकत्वेन निमित्तकारणव्यतिरिक्तोदासीनकार-
णान्तरापेक्षात्मलाभे, स्वाभाविकपर्यायत्वे सति कदाचि-
द्भावात्, उदासीनकारणपानीयापेक्षात्मलाभझषगतिवत् । इति
धर्माधर्मयोः सिद्धिः । २ । अवगाहिनां धर्मादीनामवकाशदा-
5 यित्वेनोपकारेणाकाशमनुमीयते। अवकाशदायित्वं चोपकारो-
ऽवगाहः। स चात्मभूतो ऽस्य लक्षणमुच्यते। मकरादिगत्युप-
कारकारिजलादिदृष्टान्ता अत्राप्यनुवर्तनीयाः। नन्वयमवगाहो
पुद्गलादिसंबन्धी व्योमसंबन्धी च। ततः स उभयोर्धर्मः। कथ-
माकाशस्यैव लक्षणं, उभयजन्यत्वात्, अङ्गुल्यसंयोगवत् । न खलु
10 द्रव्यद्वयजनितः संयोगो द्रव्येणैकेन व्यपदेष्टुं पार्यते, लक्षणं
चैकस्य भवितुमर्हतीति। सत्यमेतत्। सत्यपि संयोगजन्यत्वे
लक्ष्यमाकाशं प्रधानम्। ततो ऽवगाहनमनुप्रवेशो यत्र, तदा-
काशमवगाह्यमवगाहलक्षणं विवक्षितं, इतरत्तु पुद्गलादिकमव-
गाहकम्। यस्माद्व्योमैवासाधारणकारणतयावगाह्यत्वेनोपकरोति,
15 अतो द्रव्यान्तरासंभविना स्वेनोपकारेणातीन्द्रियमपि व्योमानु-
मेयं, आत्मवत्, धर्मादिवद्वा। यथा पुरुषकरतलसंयोगभेर्या-
दिकारणः शब्दो भेरीशब्दो व्यपदिश्यते, भूजलानिलयवादि-
कारणकाङ्कुरो यवाङ्कुरो ऽभिधीयते, असाधारणकारणत्वात्,
एवमवगाहो ऽप्यम्बरस्य प्रतिपत्तव्यः। वैशेषिकास्तु शब्दलिङ्ग-
20 माकाशं संगिरन्ते, गुणगुणिभावेन व्यवस्थानादिति। तद-
युक्तं, रूपादिमत्त्वाच्छब्दस्य, रूपादिमत्ता च प्रतिघाताभि-
भवाभ्यां विनिश्चेया ३। कालश्च वर्तनादिभिर्लिङ्गैरनुमीयते।

यतो वर्तना प्रतिद्रव्यपर्यायमन्तर्नीतैकसमयस्वसत्तानुभूतिलक्षणा सा च सकलवस्त्वाश्रया कालमन्तरेण प्रतिसमयमनुपपन्ना, अतो ऽस्ति कार्यानुमेयः कालः पदार्थपरिणतिहेतुः। लोकप्रसिद्धाश्च कालद्रव्याभिधायिनः शब्दाः सन्ति, न तु सूर्यक्रियामात्राभिधायिनः। यथाह । 5

युगपदयुगपत्क्षिप्रं चिरं चिरेण परमपरमिदमिति च।
वर्त्स्यति नैतद्वर्त्स्यति वृत्तं तत्तच्च वृत्तमपि ॥१॥
वर्तत इदं न वर्तत इति कालापेक्षमेवाप्ता यत्।
सर्वे ब्रुवन्ति तस्मादस्तु सर्वेषां मतः कालः ॥२॥
श्वः ह्योऽद्य संप्रति परुत्परारि नक्तं दिवैषमः प्रातः । 10
सायमिति कालवचनानि कथं युक्तान्यसति काले ॥३॥

परिणामो ऽपि सजातीयानां चूतादिवस्तूनामेकस्मिन्काले ऋतुविभागकृतो वेलानियमकृतश्च विचित्रः कारणं नियामकमन्तरेणानुपपन्नः। ततः समस्ति तत्कारणं काल इत्यवसीयते। तथा विनष्टो विनश्यति विनंक्ष्यति च घट इत्यादिक्रियाव्यपदेशा अतीतवर्तमानानागतकालत्रयविभागनिमित्ताः परस्परासंकीर्णाः संव्यवहारानुगुणाः कालमन्तरेण न भवेयुः। ततो ऽस्ति कालः। तथेदं परमिदमपरमिति यन्निमित्ते प्रत्ययाभिधाने, स समस्ति काल इति ॥४॥ 15

पुद्गलाः प्रत्यक्षानुमानागमावसेयाः। तत्र काष्ठघटपटलकुटशकटादयो ऽध्यक्षसिद्धाः। अनुमानगम्या इत्थम्। स्थूलस्कन्धान्यथानुपपत्त्या सूक्ष्मपरमाणुद्व्यणुकादीनां सत्तावसीयते। आगम- 20

गम्यता चैवं "पुग्गलत्थिकाए" इत्यादि। तथा परमाणवः सर्वे ऽप्येकरूपा एव विद्यन्ते, न पुनर्वैशेषिकाभिमतचतुस्त्रिद्व्येक-स्पर्शादिगुणवतां पार्थिवाप्यतैजसवायवीयपरमाणूनां जातिभेदा-द्वद्रूपाः। यथा लवणहिंगुनी स्पर्शनचक्षूरसनघ्राणयोग्ये ऽपि

5 जले विलीने सती लोचनस्पर्शनाभ्यां ग्रहीतुं न शक्ये परि-णामविशेषवत्त्वात्, एवं पार्थिवादिपरमाणवो ऽप्येकजातीया एव परिणतिविशेषवत्त्वात् न सर्वेन्द्रियग्राह्या भवन्ति, न पुन-स्तज्जातिभेदादिति । शब्दादीनां तु पौद्गलिकतैवं ज्ञेया । शब्दः पुद्गलद्रव्यपरिणामः, तत्परिणामता चास्य मूर्तत्वात्,

10 मूर्तता चोरःकण्ठशिरोजिह्वामूलदन्तादिद्रव्यान्तरविक्रियापाद-नसामर्थ्यात्, पिप्पल्यादिवत्। तथा ताड्यमानपटहभेरीझल्लरि-तलस्थकिञ्चित्कादिप्रकम्पनात्, तथा शङ्खादिशब्दानामतिमात्र-प्रवृद्धानां श्रवणबधिरीकरणसामर्थ्यम्। तच्चाकाशादावमूर्ते नास्ति। अतो न तद्गुणः शब्दः। तथा प्रतीपघातित्वात्, पर्वत-

15 प्रतिहतप्रत्काररवत्। तथा शब्दो नाम्बरगुणः, द्वारानुविधायि-त्वात्, आतपवत्। तस्मिन्नेव पक्षे सति दर्शनसाधनपञ्चकं प्रपद्यते । यथा शब्दो ऽम्बरगुणो न भवति, संहारसामर्थ्यात्, अगुरुधूपवत्; तथा वायुना प्रेर्यमाणत्वात्, तृणपर्णादिवत्; सर्वदिग्ग्राह्यत्वात्, प्रदीपवत्; अभिभवनीयत्वात्, तारासमू-

20 हादिवत्; अभिभावकत्वात्, सवितृमण्डलप्रकाशवत्। महता हि शब्देनाल्पीयानभिभूयते शब्द इति प्रतीतमेव। तस्मात्पुद्गल-परिणामः शब्दः । अथ शङ्खे तद्विनाशे तदीयखण्डेषु च यथा

पौद्गलिकत्वाद्रूपमुपलभ्यते, तथा शब्देऽपि कुतो नेति चेत्। उच्यते। सूक्ष्मत्वात्, विध्यातप्रदीपशिखारूपादिवत् गन्धपरमाण्वव्यवस्थितरूपादिवद्वेति। गन्धादीनां तु पुद्गलपरिणामता प्रसिद्धैव। तमश्छायादीनां त्वेवम्। तमः पुद्गलपरिणामो, दृष्टिप्रतिबन्धकारित्वात्, कुड्यादिवत्; आवारकत्वात्, पटादिवत्। 5
छायापि शिशिरत्वात्, आप्यायकत्वात्, जलवातादिवत्। छायाकारेण परिणममाणं प्रतिबिम्बमपि पौद्गलिकं, साकारत्वात्। अथ कथं कठिनमादर्शं प्रतिभिद्य मुखतो निर्गताः पुद्गलाः प्रतिबिम्बमाजिहत इति चेत्। उच्यते। तत्प्रतिभेदः कठिनशिलातलपरिस्रुतजलेनायस्पिण्डे ऽग्निपुद्गलप्रवेशेन शरीरात्प्र- 10
स्वेदवारिलेशनिर्गमनेन च व्याख्येयः। आतपोऽपि द्रव्यं, तापकत्वात्, स्वेदहेतुत्वात्, उष्णत्वात्, अग्निवत्। उद्योतश्च चन्द्रिकादिर्द्रव्यं, आह्लादकत्वात्, जलवत्; प्रकाशकत्वात्, अग्निवत्। तथा पद्मरागादीनामनुष्णाशीत उद्योतः। अतो मूर्तद्रव्यविकारस्तमश्छायादिः। इति सिद्धाः पुद्गलाः। इति सुस्थितमजीवतत्त्वम्॥ 15

अथ पुण्यतत्त्वमभिधत्ते "पुण्यं सत्कर्मपुद्गलाः" इति पुण्यं सम्यक्तीर्थकरत्वस्वर्गादिफलनिर्वर्तकत्वात्प्रशस्ताः कर्मणां पुद्गला जीवसंबद्धाः कर्मवर्गणाः॥ अथ पापास्रवतत्त्वं व्याख्याति।

**पापं तद्विपरीतं तु मिथ्यात्वाद्यास्तु हेतवः।**
**ये बन्धस्य स विज्ञेय आस्रवो जिनशासने॥५०॥** 20

तुर्भिन्नक्रमे। पापं तु तस्मात्पुण्याद्विपरीतम्। नरकादि-

फलनिर्वर्तकत्वादसम्प्राप्ता जीवसंबद्धाः कर्मपुद्गलाः पापमित्यर्थः।
इह च वक्ष्यमाणबन्धतत्त्वान्तर्भूतयोरपि पुण्यपापयोः पृथग्नि-
र्देशः पुण्यपापविषयनानाविधपरमतभेदनिरासार्थः। परमतानि
चामूनि। केषांचित्तीर्थिकानामयं प्रवादः। पुण्यमेवैकमस्ति,
5 न पापम्। अन्ये त्वाहुः। पापमेवैकमस्ति, न पुण्यम्। अपरे
तु वदन्ति। उभयमप्यन्योन्यानुविद्धस्वरूपं मेचकमणिकल्पं
तन्मिश्रसुखदुःखाख्यफलहेतुः साधारणं पुण्यपापाख्यमेकं
वस्त्विति। अन्ये पुनराहुः। मूलतः कर्मैव नास्ति स्वभाव-
सिद्धः सर्वोऽप्ययं जगत्प्रपञ्च इति। तदेतानि निखिलानि
10 मतानि न सम्यगिति मन्तव्यानि, यतः सुखदुःखे विविक्ते
एवोभे सर्वैरनुभूयेते। ततस्तत्कारणभूते पुण्यपापे अपि
स्वतन्त्रे एवोभे अङ्गीकर्तव्ये, न पुनरेकतरं तदुभयं वा तन्मिश्र-
मिति। अथ कर्माभाववादिनो नास्तिका वेदान्तिनश्च वदन्ति।
ननु पुण्यपापे नभोम्भोजनिभे एव मन्तव्ये, न पुनः सद्भूते;
15 कुतः पुनस्तयोः फलभोगस्थाने स्वर्गनरकाविति चेत्। उच्यते।
पुण्यपापयोरभावे सुखदुःखयोर्निर्हेतुकत्वादनुत्पाद एव स्यात्।
स च प्रत्यक्षविरुद्धः। तथाहि। मनुजत्वे समानेऽपि दृश्यन्ते
केचन स्वामित्वमनुभवन्तो, अपरे पुनस्तत्प्रेष्यभावमाबिभ्राणाः।
एके च स्वकुक्षिंभरयः, अन्ये तु स्वोदरदरीपूरणेऽप्यनिपुणाः,
20 एके देवा इव निरन्तरं सरसविलाससुखभाजिनः, इतरे पुन-
र्नारका इवोन्निद्रदुःखविद्राणचित्तवृत्तय इति। अतोऽनुभूय-
मानसुखदुःखनिबन्धने पुण्यपापे स्वीकर्तव्ये। तदङ्गीकरणे च

विशिष्टयोरात्मनयोर्भोगस्थाने स्वर्गनरकावपि प्रतिपत्तव्यौ, अन्यथार्धजरतीयन्यायप्रसङ्गः स्यात्। प्रयोगश्चात्र। सुखदुःखे कारणपूर्वके, कार्यत्वात्, अङ्कुरवत्। ये च तयोः कारणे, ते पुण्यपापे मन्तव्ये, यथाङ्कुरस्य बीजम्। अथ नीलादिकं मूर्तं वस्तु यथा स्वप्रतिभासिविज्ञानस्यामूर्तस्य कारणं भवति, तथान्नस्रक्चन्दनादिकं मूर्तं दृश्यमानमेव सुखस्यामूर्तस्य कारणं भविष्यति, अहिविषकण्टकादिकं च दुःखस्य। ततः किमदृष्टाभ्यां पुण्यपापाभ्यां परिकल्पिताभ्यां प्रयोजनमिति चेत्। तदयुक्तं, व्यभिचारात्। तथाहि। तुल्यस्रगादिसाधनयोरपि द्वयोः पुरुषयोः सुखदुःखलक्षणे फले महान्भेदो दृश्यते। तुल्येऽपि चान्नादिके भुक्ते कस्याप्याह्लादो दृश्यते, अपरस्य तु रोगाद्युत्पत्तिः। अयं च फलभेदोऽवश्यमेव सकारणः, निःकारणत्वे नित्यं सत्त्वासत्त्वप्रसङ्गात्। यच्च तत्कारणं, तददृष्टं पुण्यपापरूपं कर्मेति। तदुक्तम्।

जो तुल्लसाहणाणं फले विसेसो न सो विणा हेउं।
कज्जत्तणओ गोयम घडो व्व हेऊ अ सो कम्मं॥ इति।

अथवा कारणानुमानात्कार्यानुमानाच्चैवं पुण्यपापे गम्येते। तत्र कारणानुमानमिदम्। दानादिशुभक्रियाणां हिंसाद्यशुभक्रियाणां चास्ति फलभूतं कार्यं, कारणत्वात्, कृष्यादिक्रियावत्। यच्चासां फलभूतं कार्यं तत्पुण्यं पापं चावगन्तव्यं, यथा कृष्यादिक्रियाणां शालियवगोधूमादिकम्। ननु यथा कृष्यादिक्रिया दृष्टशाल्यादिफलमात्रेणैवावसितप्रयोजना भवन्ति, तथा दानादिकाः प्राणिहिंसादिकाश्च सर्वा अपि क्रियाः श्लाघादिमा-

मांसभक्षणादिना च दृष्टफलमात्रेणैवावसितप्रयोजना भवन्तु, किमदृष्टधर्माधर्मफलकल्पनेन । लोको हि प्रायेण सर्वोऽपि दृष्टमात्रफलास्वेव कृषिवाणिज्यहिंसादिक्रियासु प्रवर्तते । अदृष्टफलासु पुनर्दानादिक्रियास्वल्प एव लोकः प्रवर्तते, न बहुः । ततश्च कृषिहिंसाद्यशुभक्रियाणामदृष्टफलाभावाद्दानादिशुभक्रियाणामप्यदृष्टफलाभावो भविष्यतीति चेत् । न । यत एव कृष्याद्यशुभक्रियासु दृष्टफलासु बहवः प्रवर्तन्ते, अदृष्टफलासु पुनर्दानादिशुभक्रियास्वल्प एव लोकः प्रवर्तते, तत एव कृषिहिंसादिका दृष्टफलाः क्रिया अदृष्टपापरूपफला अपि प्रतिपत्तव्याः, अनन्तसंसारिजीवसत्त्वान्यथानुपपत्तेः । ते हि कृषिहिंसादिक्रियानिमित्तमनभिलषितमप्यदृष्टं पापलक्षणं फलं बद्ध्वा अनन्तसंसारं परिभ्रमन्तोऽनन्ता इह तिष्ठन्ति । यदि हि कृषिहिंसाद्यशुभक्रियाणामदृष्टं पापरूपं फलं नाभ्युपगम्यते, तदा तत्कर्तारोऽदृष्टफलाभावान्मरणानन्तरमेव सर्वेऽप्ययत्नेन मुक्तिं गच्छेयुः । ततः प्रायः शून्य एव संसारः स्यात् । ततश्च संसारे दुःखी कोऽपि नोपलभ्येत । दानादिशुभक्रियानुष्ठातारः शुभतत्फलविपाकानुभवितार एव च केवलाः सर्वत्रोपलभ्येरन् । दुःखिनश्चात्र बहवो दृश्यन्ते, सुखिनस्त्वल्पाः । तेन ज्ञायते । कृषिवाणिज्यहिंसादिक्रियानिबन्धनो ऽदृष्टपापरूपफलविपाको दुःखिनां, इतरेषां तु दानादिक्रियाहेतुको ऽदृष्टधर्मरूपफलविपाक इति । व्यत्ययः कस्मान्न भवतीति चेत् । उच्यते । अशुभक्रियारम्भिणामेव च बहुत्वात् शुभक्रियानुष्ठातॄणामेव च

स्वत्वादिति कारणानुमानम्॥ अथ कार्यानुमानम्। जीवानामात्मत्वाविशेषेऽपि मनुष्यादिषु देहादिवैचित्र्यस्य कारणमस्ति, कार्यत्वात्, यथा घटस्य मृद्दण्डचक्रचीवरादिसामग्रीकलितः कुलालः। न च दृष्ट एव मातापित्रादिकस्तस्य हेतुरिति कर्तव्यं, दृष्टहेतुसाम्येऽपि, सुरूपेतरादिभावेन देहादीनां वैचित्र्यदर्शनात्, तस्य चादृष्टशुभाशुभकर्माख्यहेतुमन्तरेणाभावात्। अत एव शुभदेहादीनां पुण्यकार्यत्वं, इतरेषां तु पापकार्यत्वमिति कार्यानुमानम्॥ सर्वज्ञवचनप्रामाण्याद्वा पुण्यपापयोरुभयोः सत्ता प्रतिपत्तव्या। विशेषार्थिना तु विशेषावश्यकटीकावलोकनीयेति॥ 5

अथास्रवमाह। "मिथ्यात्वाद्यास्तु हेतवः" इत्यादि। अदेवगुरुधर्मेषु सद्देवादिबुद्धिर्मिथ्यात्वम्। हिंसाद्यनिवृत्तिरविरतिः। प्रमादो मद्यविषयादिः। कषायाः क्रुधादयः। योगा मनोवाक्कायव्यापाराः। अत्रैवमक्षरघटना। मिथ्यात्वाविरत्यादिकाः पुनर्बन्धस्य ज्ञानावरणीयादिकर्मबन्धस्य ये हेतवः, स आस्रवो जिनशासने विज्ञेयः। आस्रवति कर्मैभ्यः स आस्रवः। ततो मिथ्यात्वादिविषया मनोवाक्कायव्यापारा एव शुभाशुभकर्मबन्धहेतुत्वादास्रव इत्यर्थः॥ अथ बन्धाभावे कथमास्रवस्योपपत्तिः, आस्रवात् प्राग्बन्धसद्भावे वा तस्य बन्धहेतुता, प्रागपि बन्धस्य सद्भावात्। न हि, यद्धेतुकं तत्तदभावेऽपि भवति, अतिप्रसङ्गात्। असदेतत्, यत आस्रवस्य पूर्वबन्धापेक्षया कार्यत्वमिष्यते, उत्तरबन्धापेक्षया च कारणत्वम्। एवं बन्धस्यापि पूर्वोत्तरास्रवापेक्षया कार्यत्वं कारणत्वं च ज्ञातव्यं, बीजाङ्कुरयोरिव 10 15 20

बन्धास्रवयोरन्योन्यं कार्यकारणभावनियमात् । न चैवमितरेत-
राश्रयदोषः, प्रवाहापेक्षयानादित्वात् । अयं चास्रवः शुभाशुभ-
कर्महेतुतया द्विविधः । द्विविधोऽप्ययं मिथ्यात्वाद्युत्तरभेदापेक्ष-
योत्कर्षापकर्षभेदापेक्षया वानेकप्रकारः । अस्य च शुभाशुभ-
मनोवाक्कायव्यापाररूपस्यास्रवस्य सिद्धिः स्वात्मनि स्वसंवेद-
नाध्यक्षतः परस्मिंश्च वाक्कायव्यापारस्य कस्यचित्प्रत्यक्षतः शेषस्य
च तत्कार्यप्रभवानुमानतश्चावसेया, आगमाच्च ॥

अथ संवरबन्धौ विवृणोति ।

**संवरस्तन्निरोधस्तु बन्धो जीवस्य कर्मणः ।**
**अन्योन्यानुगमात्मा तु यः संबन्धो द्वयोरपि ॥५१॥**

व्याख्या ॥ तेषां मिथ्यात्वाविरतिकषाययोगानामास्रवाणां
सम्यग्दर्शनविरतिप्रमादपरिहारक्षमादिगुप्तिप्रभृतिधर्मानुप्रेक्षाभि-
र्निरोधो निवारणं स्थगनं संवरः; पर्यायकथनेन व्याख्या ।
आत्मनः कर्मोपादानहेतुभूतपरिणामाभावः संवर इत्यभिप्रायः ।
स च देशसर्वभेदाद्द्वेधा । तत्र बादरसूक्ष्मयोगनिरोधकाले सर्व-
संवरः । शेषकाले चरणप्रतिपत्तेरारभ्य देशसंवरः ॥

अथ बन्धतत्त्वमाह । "बन्धो जीवस्य कर्मणः" इत्यादि । तत्र
बन्धः परस्पराश्लेषो जीवप्रदेशपुद्गलानां क्षीरनीरवत् । अथवा
बध्यते येनात्मा पारतन्त्र्यमापद्यते ज्ञानावरणादिना संबन्धः
पुद्गलपरिणामः । ननु जीवकर्मणोः संबन्धः किं व्योमात्मादिव-
त्परिमाणिकगुणसंयोगरूपः, उतात्मनः कश्चिद्विला-

संश्लेषः "द्वयोरपि" कर्मवर्गणायोग्यस्कन्धानां जीवस्य चान्यो-
न्यानुगमात्मान्योन्यानुगतिस्वरूपः परस्परानुप्रवेशरूप इत्यर्थः ।
अयमत्र भावः । वह्न्ययःपिण्डसंबन्धवत् क्षीरोदकसंपर्कवद्वा
जीवकर्मणोर्मिथोऽनुप्रवेशात्मक एव संबन्धो बन्धो बोद्धव्यो, न
पुनः कञ्चुकिकञ्चुकसंयोगकल्पोऽन्यो वेति । अत्राह । कथम- 5
मूर्तस्यात्मनो हस्ताद्यसंभवे सत्यादानशक्तिविरहात्कर्मग्रहणमुच्यत
इति चेत् । उच्यते । इयमेव तावदस्थानारेका प्रक्रिया भवतो
ऽनभिज्ञतां ज्ञापयति, यतः केनामूर्तताभ्युपेतात्मनः कर्मजीव-
संबन्धस्यानादित्वादेकत्वपरिणामे सति क्षीरोदकवन्मूर्त एव
कर्मग्रहणे व्याप्रियते । न च हस्तादिव्यापारादेयं कर्म, किं 10
तु पौद्गलमपि सदध्यवसायविशेषाद्रागद्वेषमोहपरिणामाभ्यञ्जन-
लक्षणादात्मनः कर्मयोग्यपुद्गलाश्लेषणमादानं स्नेहाभ्यक्त-
वपुषो रजोलगनवदिति । प्रतिप्रदेशानन्तपरमाणुसंश्लेषाज्जीवस्य
कर्मणा सह लोलीभावात्कथंचिन्मूर्तत्वमपि संसारावस्थायामभ्युप-
गम्यत एव स्याद्वादवादिभिरिति । स च प्रशस्ताप्रशस्तभेदाद् 15
द्वेधा । प्रकृतिस्थित्यनुभागप्रदेशभेदाच्च चतुर्विधा । प्रकृतिः
स्वभावो यथा ज्ञानावरणं ज्ञानाच्छादनस्वभावमित्यादि ।
स्थितिरध्यवसायकृतः कालविभागः । अनुभागो रसः । प्रदेशः
कर्मदलसंचय इति । पुनरपि मूलप्रकृतिभेदादष्टधा ज्ञानावर-
णादिकः । उत्तरप्रकृतिभेदादष्टपञ्चाशदधिकशतभेदः । सोऽपि 20
तीव्रतीव्रतरमन्दमन्दतरादिभेदादनेकविध इत्यादि कर्मग्रन्था-
दवसेयम् । उक्तं बन्धतत्त्वम् ॥

निर्जरातत्त्वमाह ।

**बद्धस्य कर्मणः शाटो यस्तु सा निर्जरा मता ।**
**आत्यन्तिको वियोगस्तु देहादेर्मोक्ष उच्यते ॥५२॥**

यस्तु बद्धस्य जीवेन संबद्धस्य कर्मणो ज्ञानावरणादेः शाटः 5 शटनं द्वादशविधेन तपसा विचटनं, सा निर्जरा मता संमता । सा च द्विधा, सकामाकामभेदात् । तत्राद्या चारित्रिणां दुष्करतरतपश्चरणकायोत्सर्गकरणद्वाविंशतिपरीषहपराणां लोचादिकायक्लेशकारिणामष्टादशशीलाङ्गधारिणां बाह्याभ्यन्तरसर्वपरिग्रहपरिहारिणां निःप्रतिकर्मशरीरिणां भवति । द्वितीया त्वन्यशरीरिणां 10 तीव्रतरशरीरमानसानेककटुकदुःखशतसहस्रसहनतो भवति ॥

अथोत्तरार्धेन मोक्षतत्त्वमाह "आत्यन्तिकः" इत्यादि । देहादेः शरीरपञ्चकेन्द्रियायुरादिबाह्यप्राणपुण्यापुण्यवर्णगन्धरसस्पर्शपुनर्जन्मग्रहणवेदत्रयकषायादिसङ्गाज्ञानासिद्धत्वादेरात्यन्तिको वियोगो विरहः पुनर्मोक्ष इष्यते । यो हि शश्वद्भवति न 15 पुनः कदाचिन्न भवति, स आत्यन्तिकः । अत्र पर आह । ननु भवतु देहस्यात्यन्तिको वियोगः, तस्य सादित्वात् । परं रागादिभिः सहात्यन्तिको वियोगो ऽसंभवी, प्रमाणबाधनात् । प्रमाणं चेदम् । यदनादिमत्, न तद्विनाशमाविशति, यथाकाशम् । अनादिमन्तश्च रागादय इति । उच्यते । यद्यपि रागा- 20 दयो दोषा जन्तोरनादिमन्तः, तथापि कश्चिद्यथावस्थितस्त्रीशरीरादिवस्तुतत्त्वावगमेन तेषां रागादीनां प्रतिपक्षभावनातः

प्रतिक्षणमपचयो दृश्यते। ततः संभाव्यते विशिष्टकालादिसाम-
ग्रीसद्भावे भावनाप्रकर्षतो निर्मूलमपि क्षयः, निर्मूलक्षयानभ्युप-
गमे ऽपचयस्याप्यसिद्धेः। यथा हि शीतस्पर्शसंपाद्या रोमहर्षादयः
शीतप्रतिपक्षस्य च वह्नेर्मन्दतायां मन्दा उपलब्धा उत्कर्षे च
निरन्वयविनाशिताः, एवमन्यत्रापि मन्दतासद्भावे निरन्वयविना- 5
शोऽवश्यमेष्टव्यः। अथ यथा ज्ञानावरणीयकर्मोदये ज्ञानस्य
मन्दता भवति तत्प्रकर्षे च ज्ञानस्य न निरन्वयो विनाशः, एवं
प्रतिपक्षभावनोत्कर्षे ऽपि न रागादीनामत्यन्तमुच्छेदो भविष्य-
तीति। तदयुक्तम्। द्विविधं हि बाध्यं, सहभूस्वभावं सहका-
रिसंपाद्यस्वभावं च। तत्र यत्सहभूस्वभावं, तत्र बाधकोत्कर्षे 10
कदाचिदपि निरन्वयं विनाशमाविशति। ज्ञानं चात्मनः सह-
भूस्वभावम्। आत्मा च परिणामिनित्यः। ततो ऽत्यन्तप्रकर्षव-
त्यपि ज्ञानावरणीयकर्मोदये ज्ञानस्य न निरन्वयो विनाशः।
रागादयस्तु लोभादिकर्मविपाकोदयसंपादितसत्ताकाः। ततः
कर्मणो निर्मूलमपगमे ते ऽपि निर्मूलमपगच्छन्ति। प्रयोग- 15
श्चात्र। ये सहकारिसंपाद्या यदुपधानादपकर्षिणः, ते तदत्य-
न्तवृद्धौ निरन्वयविनाशधर्माणः, यथा रोमहर्षादयो वह्निवृद्धौ।
भावनोपधानादपकर्षिणश्च सहकारिकर्मसंपाद्या रागादय इति।
अत्र "सहकारिसंपाद्या" इति विशेषणं सहभूस्वभावज्ञानादि-
व्यवच्छेदार्थम्। यदपि च प्रागुपन्यस्तं प्रमाणं "यदनादिमत्, न 20
तद्विनाशमाविशति" इति, तदप्यप्रमाणं, प्रागभावेन हेतोर्व्य-
भिचारात्। प्रागभावो ह्यनादिमानपि विनाशमाविशति,

अन्यथा कार्यानुत्पत्तेः । काञ्चनोपलयोः संयोगेन च हेतुरनै-
कान्तिकः । तत्संयोगो ऽपि ध्मानादिसंततिगतो ऽपि क्षारमृत्पु-
टपाकादिनोपायेन विघटमानो दृष्ट इति । अथ रागादयो
धर्मा धर्मिण आत्मनो भिन्नाश्चेत्, तदा सर्वेषां वीतरागत्वसि-
5 द्धत्वप्रसङ्गः, रागादिभ्यो भिन्नत्वात्, मुक्तात्मवत् । अभिन्नाश्चेत्,
तदा तेषां क्षये धर्मिणो ऽपि क्षय इति । तदयुक्तं, भेदाभे-
दपक्षस्य जात्यन्तरस्याभ्युपगमात् । कथमिति चेत् । उच्यते ।
धर्मिधर्माणां न भेद एव, अभेदस्यापि सत्त्वात्; नाप्यभेद
एव, भेदस्यापि सद्भावात् । ततो नोक्तदोषावकाश इति । अथ
10 कार्मणशरीरादेः सर्वथावियोगे कथं जीवस्योर्ध्वमा लोकान्तं
गतिरिति चेत् । पूर्वप्रयोगादिभिस्तस्योर्ध्वं गतिरिति ब्रूमः ।
तदुक्तं तत्त्वार्थभाष्ये ।

तदनन्तरमेवोर्ध्वमा लोकान्तात्स गच्छति ।
पूर्वप्रयोगासङ्गत्वबन्धच्छेदोर्ध्वगौरवैः ॥ १ ॥
15 कुलालचक्रे दोलायामिषौ चापि यथेष्यते ।
पूर्वप्रयोगात्कर्मेह तथा सिद्धगतिः स्मृता ॥ २ ॥
मृल्लेपसङ्गनिर्मोक्षाद्यथा दृष्टाप्स्वलाबुनः ।
कर्मसङ्गविनिर्मोक्षात्तथा सिद्धगतिः स्मृता ॥ ३ ॥
एरण्डपुटदेलाच्च बन्धच्छेदाद्यथा गतिः ।
20 कर्मबन्धनविच्छेदाज्जीवस्यापि तथेष्यते ॥ ४ ॥
ऊर्ध्वगौरवधर्माणो जीवा इति जिनोत्तमैः ।
अधोगौरवधर्माणः पुद्गला इति चोदितम् ॥ ५ ॥

यथाधस्तिर्यगूर्ध्वं च लोष्टवाय्वग्निवीचयः।
स्वभावतः प्रवर्तन्ते तथोर्ध्वगतिरात्मनः॥ ६॥
अधस्तिर्यक् तथोर्ध्वं च जीवानां कर्मजा गतिः।
ऊर्ध्वमेव स्वभावेन भवति क्षीणकर्मणाम्॥ ७॥
ततो ऽप्यूर्ध्वगतिस्तेषां कस्मान्नास्तीति चेन्मतिः।
धर्मास्तिकायस्याभावात्स हि हेतुर्गतेः परम्॥ ८॥

धर्मास्तिकायस्य गतिहेतुत्वं पुरापि व्यवस्थापितमेवेति। ननु भवतु कर्मणामभावे ऽपि पूर्वप्रयोगादिभिर्जीवस्योर्ध्वं गतिः, तथापि सर्वथा शरीरेन्द्रियादिप्राणानामभावान्मोक्षे जीवस्याजीवत्वप्रसङ्गः। यतो जीवनं प्राणधारणमुच्यते; तच्चेन्नास्ति, तदा जीवस्य जीवनाभावादजीवं स्यात्, अजीवस्य च मोक्षाभाव इति चेत्। न, अभिप्रायापरिज्ञानात्। प्राणा हि द्विविधाः, द्रव्यप्राणा भावप्राणाश्च। मोक्षे च द्रव्यप्राणानामेवाभावः, न पुनर्भावप्राणानाम्। भावप्राणास्तु मुक्तावस्थायामपि सन्त्येव। यदुक्तम्।

यस्मात्क्षायिकसम्यक्त्ववीर्यदर्शनज्ञानैः।
आत्यन्तिकैः स युक्तो निर्द्वन्द्वेनापि च सुखेन॥ १॥
ज्ञानादयस्तु भावप्राणा मुक्तो ऽपि जीवति स तैर्हि।
तस्मात्तज्जीवत्वं नित्यं सर्वस्य जीवस्य॥ २॥

तत्तस्मादनन्तज्ञानानन्तदर्शनानन्तवीर्यानन्तसुखलक्षणं जीवनं सिद्धानामपि भवतीत्यर्थः। सुखं च सिद्धानां सर्वसंसारसुखविलक्षणं परमानन्दरूपं ज्ञातव्यम्। उक्तं च।

न वि अत्थि माणुसाणं तं सुक्खं नेव सव्वदेवाणं।
जं सिद्धाणं सुक्खं अव्वाबाहं उवगयाणं॥ १॥
सुरगणसुहं समग्गं सव्वद्धा पिण्डियं अणन्तगुणं।
न वि पावइ मुत्तिसुहं णन्ताहिं वग्गवग्गूहिं॥ २॥
सिद्धस्स सुहो रासी सव्वद्धा पिण्डिओ जइ हविज्जा।
सो ऽणन्तवग्गभइओ सव्वागासे न माइज्जा॥ ३॥

तथा योगशास्त्रे ऽप्युक्तम्।

सुरासुरनरेन्द्राणां यत्सुखं भुवनत्रये।
तत्स्यादनन्तभागे ऽपि न मोक्षसुखसंपदः॥ १॥
10 स्वस्वभावजमत्यक्षं यस्मिन्नै शाश्वतं सुखम्।
चतुर्वर्गाग्रणीत्वेन तेन मोक्षः प्रकीर्तितः॥ २॥

अथ सिद्धानां सुखमयत्वे परे विप्रतिपद्यन्ते। तथाहि। आत्मनो मुक्तौ बुद्ध्यादिविशेषगुणोच्छेदात्कथं सुखमयत्वमिति वैशेषिकाः १। अत्यन्तचित्तसन्तानोच्छेदत आत्मन एवासंभवा-
15 दिति सौगताः २। अभोक्तृत्वात्कथमात्मनो मुक्तौ सुखमयत्वमिति सांख्याः ३॥ अथादौ वैशेषिकाः स्वमेमुक्तौ विशेषयन्ति। ननु मोक्षे विशुद्धज्ञानादिस्वभावतात्मनो ऽनुपपन्ना, बुद्ध्यादिविशेषगुणोच्छेदरूपत्वान्मोक्षस्य। तथाहि। प्रत्यक्षादिप्रमाणप्रतिपन्ने जीवस्वरूपे परिपाकं प्राप्ते तत्त्वज्ञाने नवानां जीवविशेष-
20 गुणानामत्यन्तोच्छेदे स्वरूपेणात्मनो ऽवस्थानं मोक्षः। तदुच्छेदे च प्रमाणमिदं। यथा। नवानामात्मविशेषगुणानां संतानो ऽत्यन्तमुच्छिद्यते, संतानत्वात्, प्रदीपादिसंतानवत्। न चायम-

सिद्धो हेतुः, पक्षे वर्तमानत्वात्। नापि विरुद्धः, सपक्षे प्रदीपादौ सत्त्वात्। नाप्यनैकान्तिकः, केवलपरमाण्वादावप्रवृत्तेः। नापि कालात्ययापदिष्टः, विपरीतार्थस्थापकयोः प्रत्यक्षानुमानयोरसंभवात्। ननु संतानोच्छेदहेतुर्वक्तव्य इति चेत्। उच्यते। निरन्तरशास्त्राभ्यासात्कस्यचित्पुंसस्तत्त्वज्ञानं जायते, तेन च 5 मिथ्याज्ञाननिवृत्तिर्विधीयते, तस्य निवृत्तौ तत्कार्यभूता रागादयो निवर्तन्ते, तदभावे तत्कार्या मनोवाक्कायप्रवृत्तिर्व्यावर्तते, तद्व्यावृत्तौ च धर्माधर्मयोरनुत्पत्तिः। आरब्धशरीरेन्द्रियकार्ययोस्तु सुखादिफलोपभोगात्प्रक्षयः। अनारब्धशरीरादिकार्ययोरव्यवस्थितयोस्तत्फलोपभोगादेव प्रक्षयः। ततश्च सर्वसंतानो- 10 च्छेदान्मोक्ष इति स्थितम्॥

अत्र प्रतिविधीयते। यत्तावदुक्तं "संतानत्वात्" इत्यादि, तदसमीचीनं, यत आत्मनः सर्वथा भिन्नानां बुद्ध्यादिगुणानां संतानस्योच्छेदः साध्यते ऽभिन्नानां वा कथंचिद्भिन्नानां वा। आद्यपक्षे आश्रयासिद्धो हेतुः, संतानिभ्यो ऽत्यन्तं भिन्नस्य 15 संतानस्यासत्कल्पत्वात्। द्वितीयपक्षे तु सर्वथाभिन्नानां तेषामुच्छेदसाधने संतानवत् संतानिनो ऽप्युच्छेदप्रसङ्गः। ततश्च कस्यासौ मोक्षः। भिन्नाभिन्नपक्षाभ्युपगमे चापसिद्धान्तः। किं च॥ विरुद्धश्चायं हेतुः, कार्यकारणभूतक्षणप्रवाहलक्षणसंतानत्वस्य नित्यानित्यैकान्तयोरसंभवात्। अर्थक्रियाकारित्वस्यात एव प्रति- 20 पादयिष्यमाणत्वात्। साध्यविकलश्च दृष्टान्तः, प्रदीपादेरत्यन्तोच्छेदासंभवात्, तैजसपरमाणूनां भास्वररूपपरित्यागेनान्धकार-

रूपतयावस्थानात् । प्रयोगश्चात्र । पूर्वापरस्वभावपरिहाराङ्गी-
कारस्थितिलक्षणपरिणामवान्प्रदीपः, सत्त्वात्, पटादिवदिति ।
अत्र बहु वक्तव्यं, तत्त्वभिधास्यते विस्तरेणानेकान्तप्रघट्टके । किं
च । इन्द्रियजानां बुद्ध्यादिगुणानामुच्छेदः साध्यमानो ऽस्तुताती-
5 न्द्रियाणाम् । तत्राद्यपक्षे सिद्धसाधनं, अस्माभिरपि तत्र तदुच्छे-
दाभ्युपगमात् । द्वितीयविकल्पे मुक्तौ कस्यचिदपि प्रवृत्त्यनुप-
पत्तेः । मोक्षार्थी हि सर्वो ऽपि निरतिशयसुखज्ञानादिप्राप्त्य-
भिलाषेणैव प्रवर्तते, न पुनः शिलाशकलकल्पमपगतसकलसु-
खसंवेदनमात्मानमुपपादयितुं यतते । यदि मोक्षावस्थायामपि
10 पाषाणकल्पो ऽपगतसुखसंवेदनाशेषः पुरुषः संपद्यते, तदा
कृतं मोक्षेण, संसार एव गरीयान्, यत्र सान्तरापि सुखलेश-
प्रतिपत्तिरप्यस्ति । अतो न वैशेषिकोपकल्पिते मोक्षे कस्य-
चिद्गन्तुमिच्छा । उक्तं च ।

वरं वृन्दावने वासः शृगालैश्च सहोषितम् ।
15 न तु वैशेषिकीं मुक्तिं गौतमो गन्तुमिच्छति ॥ १ ॥

एतेन यदूचुर्मीमांसका अपि

यावदात्मगुणाः सर्वे नोच्छिन्ना वासनादयः ।
तावदात्यन्तिकी दुःखव्यावृत्तिर्नावकल्पते ॥ १ ॥
धर्माधर्मनिमित्तो हि संभवः सुखदुःखयोः ।
20 मूलभूतौ च तावेव स्तम्भौ संसारसद्मनः ॥ २ ॥
तदुच्छेदे च तत्कार्यशरीराद्यनुपप्लवात् ।
आत्मनः सुखदुःखे स्त इत्यसौ मुक्त उच्यते ॥ ३ ॥

नतु तस्यामवस्थायां कीदृगात्मावशिष्यते ।
स्वरूपैकप्रतिष्ठानः परित्यक्तोऽखिलैर्गुणैः ॥ ४ ॥
ऊर्मिषट्कातिगं रूपं तदस्याहुर्मनीषिणः ।
संसारबन्धनाधीनदुःखक्लेशाद्यदूषितम् ॥ ५ ॥

(ऊर्मयः कामक्रोधमदगर्वलोभदम्भाः । न ह वै सशरीरस्य प्रियाप्रिययोरपहतिरस्ति । अशरीरं वाव सन्तं प्रियाप्रिये न स्पृशत इत्यादि), तदप्यपास्तं द्रष्टव्यम् । यतः किं शुभकर्मपरिपाकप्रभवाणि भवसंभवानि सुखानि मुक्तौ निषिध्यमानानि उत सर्वथा तदभावः । आद्ये सिद्धसाधनम् । द्वितीये ऽसिद्धः, आत्मनः सुखस्वरूपत्वात् । न च पदार्थानां स्वरूपमत्यन्तमुच्छिद्यते, अतिप्रसङ्गात् । न च सुखस्वभावत्वमेवासिद्धं, तत्सद्भावे प्रमाणसद्भावात् । तथाहि आत्मा सुखस्वभावः, अत्यन्तप्रियबुद्धिविषयत्वात् अनन्यपरतयोपादीयमानत्वाच्च, वैषयिकसुखवत् । यथा सुखार्थी मुमुक्षुप्रयत्नः, प्रेक्षापूर्वकारिप्रयत्नत्वात्, कृषीवलप्रयत्नवदिति । तच्च सुखं मुक्तौ परमातिशयप्राप्तं, सा चास्यानुमानात्प्रसिद्धा ; यथा, सुखतारतम्यं क्वचिद्विश्रान्तं, तरतमशब्दवाच्यत्वात्, परिमाणतारतम्यवत् । तथा ।

आनन्दं ब्रह्मणो रूपं तच्च मोक्षे ऽभिव्यज्यते ।
यदा दृष्ट्वा परं ब्रह्म सर्वं त्यजति बन्धनम् ॥
तदा तस्मिन्नित्यमानन्दं मुक्तः स्वात्मनि विन्दति ।

इति श्रुतिसद्भावात् । तथा ।

सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ।

तं वै मोक्षं विजानीयादुःप्रापमकृतात्मभिः ॥ १ ॥

इति श्रुतिवचनाच्च मोक्षस्य सुखमयत्वं प्रतिपत्तव्यमिति स्थितम् ॥

अथ सांख्या ब्रुवते । इह शुद्धचैतन्यस्वरूपो ऽयं पुरुषः,
5 तृणस्य कुब्जीकरणे ऽप्यसमर्थत्वादकर्ता, साक्षाद्भोक्ता, जडां प्रकृतिं सक्रियामाश्रितः । अज्ञानतमश्छन्नतया प्रकृतिस्थमपि सुखादिफलमात्मनि प्रतिबिम्बितं चेतयमानो मोदते मोह-मानश्च प्रकृतिं सुखस्वभावां मोहान्मन्यमानः संसारमधिवसति । यदा तु ज्ञानमस्याविर्भवति "दुःखहेतुरियं न ममानया कश्च
10 संसर्गो युक्तः" इति, तदा विवेकख्यातेर्न तत्संपादितं कर्मफलं भुङ्क्ते । सापि च "विज्ञातविरूपाहं न मदीयं कर्मफलमनेन भोक्तव्यम्" इति मत्वा कुण्ठिनी स्त्रीवद्दूरादपसर्पति । तत उपरतायां प्रकृतौ पुरुषस्य स्वरूपेणावस्थानं मोक्षः स्वरूपं च चेतनाशक्तिरपरिणामिन्यप्रतिसंक्रमाप्रतिदर्शितविषयानन्ता च ।
15 अत एवाद्वात्मक एव मुक्तात्मा न पुनरानन्दादिस्वभावः, तस्य प्रकृतिकार्यत्वात्, तस्याश्च जीवनाशं नष्टत्वात् ॥

अथ वयं ब्रूमः । यत्तावदुक्तं "संसार्यात्मा अज्ञानतमश्छन्न-तया"इत्यादि, तदसुन्दरं, यतः किमज्ञानमेव तम उताज्ञानं च तमश्चेति । प्रथमपक्षे मुक्तात्मापि सुखादिफलं किं नात्मस्थं
20 मन्येत, ज्ञानस्य बुद्धिधर्मत्वाद्बुद्धेश्च प्रकृत्या सममुपरतत्वात्, मुक्तात्मनो ऽपि ज्ञानाभावेनाज्ञानतमश्छन्नत्वाविशेषात् । द्वितीयपक्षे तु किमिदमज्ञानादन्यत्तमो नाम रागादिकमिति चेत्,

तच्च, तस्यात्मनोऽत्यन्तार्थान्तरभूतप्रकृतिधर्मतयात्माच्छादकत्वा-
नुपपत्तेः। आच्छादकत्वे वा मुक्तात्मनोऽप्याच्छादनं स्यात्,
अविशेषात्। किं च संसार्यात्मनोऽकर्तुरपि भोक्तृत्वेऽङ्गीक्रि-
यमाणे कृतनाशाकृतागमादयो दोषाः प्रसज्यन्ते। किं च।
प्रकृतिपुरुषयोः संयोगः केन कृतः। किं प्रकृत्योतात्मना वा। 5
न तावत्प्रकृत्या, तस्याः सर्वगतत्वान्मुक्तात्मनोऽपि तत्संयोग-
प्रसङ्गः। अथात्मना, तर्हि स आत्मा शुद्धचैतन्यस्वरूपः सन्
किमर्थं प्रकृतिमादत्ते। तत्र कोऽपि हेतुरस्ति न वेति
वक्तव्यम्। अस्ति चेत्, तर्हि स हेतुः प्रकृतिर्वा स्यादात्मा वा,
अन्यस्य कस्याप्यनभ्युपगमात्। आद्यपक्षे यथा सा प्रकृतिस्तस्या- 10
त्मनः प्रकृतिसंयोगे हेतुः स्यात्, तथा मुक्तात्मनः किं न स्यात्,
प्रकृतिसंयोगात्पूर्वं शुद्धचैतन्यस्वरूपत्वेनोभयोरप्यविशेषात् नियाम-
काभावाच्च। द्वितीयपक्षे स आत्मा प्रकृत्यात्मनोः संयोगे
हेतुत्वं प्रतिपद्यमानः किं स्वयं प्रकृतिसहकृतः सन् हेतुर्भवति
तद्वियुक्तो वा। आद्ये तस्यापि प्रकृतिसंयोगः कथमित्यनवस्था। 15
द्वितीये पुनः स प्रकृतिरहित आत्मा शुद्धचैतन्यस्वरूपः सन्
किमर्थं प्रकृत्यात्मनोः संयोगे हेतुत्वं प्रतिपद्यते। तत्र कोऽपि
हेतुर्विलोक्य इति तदेवावर्तत इत्यनवस्था। इति सहेतुकः
प्रकृत्यात्मन संयोगो निरस्तः। अथ निर्हेतुकः, तर्हि मुक्तात्मनो
ऽपि प्रकृतिसंयोगप्रसङ्गः। किं च अयमात्मा प्रकृतिमुपाददानः 20
पूर्वावस्थां जहाति वा न वा। आद्ये ऽनित्यत्वापत्तिः। द्वितीये तदु-
पादानमेव दुर्घटम्। न हि बाल्यावस्थामत्यजन् देवदत्तस्तारु-

त्वं प्रतिपद्यते । तच्च कथमपि सांख्यमते प्रकृतिसंयोगो घटते ततश्च संयोगाभावाद्वियोगो ऽपि दुर्घट एव, संयोगपूर्वकत्वाद्वियोगस्य ॥ किं च । यदुक्तं "विवेकख्यातेः" इत्यादि, तदपि विचारितरमणीयम् । तच्च केयं ख्यातिर्नाम । प्रकृतिपुरुषयोः स्वेन

5 स्वेन रूपेणावस्थितयोर्भेदेन प्रतिभासनमिति चेत् । सा कस्य, प्रकृतेः पुरुषस्य वा । न प्रकृतेः, तस्या असंवेद्यपर्वणि स्थितत्वाद्चेतनत्वादनभ्युपगमाच्च । नाप्यात्मनः, तस्याप्यसंवेद्यपर्वणि स्थितत्वात् । तथा यदपि "विज्ञातविरूपाहं" इत्याद्युक्तं, तदप्यसमीचिताभिधानं, प्रकृतेर्जडतयेत्थं विज्ञानानुपपत्तेः । किं

10 च विज्ञातापि प्रकृतिः संसारदशावन्मोचे ऽप्यात्मनो भोगाय स्वभावतो वायुवत्प्रवर्ततां, तत्स्वभावस्य नित्यतया तदापि सत्त्वात् । न हि प्रवृत्तिस्वभावो वायुर्विरूपतया येन ज्ञातस्तं प्रति तत्स्वभावादुपरमत इति ; कुतो मोक्षः स्यात् । तदा तदसत्त्वे वा प्रकृतेर्नित्यैकरूपताहानिः, पूर्वभावत्यागेनोत्तरस्वभावोपा-

15 दानस्य नित्यैकरूपतायां विरोधात्, परिणामिनि नित्य एव तदविरोधात् । प्रकृतेश्च परिणामिनित्यत्वाभ्युपगम आत्मनो ऽपि तदङ्गीकर्तव्यं, तस्यापि प्राक्तनसुखोपभोक्तृस्वभावपरिहारेण मोक्षे तद्भोक्तृस्वभावस्वीकारात्, असुक्तादिस्वभावत्यागेन मुक्तत्वादिस्वभावोपादानाच्च । सिद्धे चास्य परिणामिनित्यत्वे

20 सुखादिपरिणामैरपि परिणामित्वमस्याभ्युपगन्तव्यं, अन्यथा मोक्षाभावप्रसङ्गः । ततश्च न कथमपि सांख्यपरिकल्पितो मोक्षो घटत इति मोक्षावस्थ एवानन्तसुखादिस्वरूपो ऽभ्युपगन्तव्यः ॥

अथ सौगताः संगिरन्ते। ननु ज्ञानक्षणप्रवाहव्यतिरेकेण कस्याप्यात्मनोऽभावात्कस्य मुक्तौ ज्ञानादिस्वभावः प्रसाध्यते। मुक्तिस्त्वात्मदर्शिनो दूरोत्सारिता। यो हि पश्यत्यात्मानं स्थिरादिरूपं तस्यात्मनि स्थैर्यगुणदर्शननिमित्तस्नेहो ऽवश्यंभावी, आत्मस्नेहाच्चात्मसुखेषु परितृष्यन्सुखेषु च दोषांस्तिरस्कृत्य गुणानारोपयति, गुणदर्शी च परितृष्यन्ममेति सुखसाधनान्युपादत्ते। ततो यावदात्मदर्शनं तावत्संसार एव। तदुक्तम्।

> यः पश्यत्यात्मनं तत्रास्याहमिति शाश्वतः स्नेहः।
> स्नेहात्सुखेषु तृष्यति तृष्णा दोषांस्तिरस्कुरुते॥ १॥
> गुणदर्शी परितृष्यन्ममेति सुखसाधनान्युपादत्ते।
> तेनात्माभिनिवेशो यावत्तावत्स संसारः॥ २॥
> आत्मनि सति परसंज्ञा स्वपरविभागात्परिग्रहद्वेषौ।
> अनयोः संप्रतिबद्धाः सर्वे दोषाः समायान्ति॥ ३॥

ततो मुक्तिमिच्छता पुत्रकलत्रादिकं स्वरूपं वानात्मकमनित्यमशुचि दुःखमिति श्रुतमय्या चिन्तामय्या च भावनया भावयितव्यम्। एवं भावयतस्तत्राभिष्वङ्गाभावादभ्यासविशेषाद्वैराग्यमुपजायते। ततः सास्रवचित्तसंतानलक्षणसंसारविनिवृत्तिरूपा मुक्तिरुपपद्यते। अथ तद्भावनाभावे ऽपि कायक्लेशलक्षणात्तपसः सकलकर्मप्रक्षयान्मोक्षो भविष्यतीति चेत्। न, कायक्लेशस्य कर्मफलतया नारकादिकायसंतापवत् तपस्त्वायोगात्। विचित्रशक्तिकं च कर्म, विचित्रफलदानान्यथानुपपत्तेः। तत्र कथं कायसंतापमात्रात्क्षीयते, अतिप्रसङ्गात्। अथ तपःकर्मशक्तीनां

संकरेण 'क्षयकरणशीलमिति कृत्वा एकरूपादपि तपसस्त्रिव-
शक्तिकस्य कर्मणः क्षयः। नन्वेवं स्वल्पक्लेशेनोपवासादिना-
प्यशेषस्य कर्मणः क्षयापत्तिः, शक्तिसांकार्यान्यथानुपपत्तेः।
उक्तं च।

5 कर्मक्षयाद्धि मोक्षः स च तपसस्तच्च कायसंतापः।
कर्मफलत्वान्नारकदुःखमिव कथं तपस्तत्स्यात्॥ १॥
अन्यदपि चैकरूपं तच्चित्रक्षयनिमित्तमिह न स्यात्।
तच्छक्तिसंकरः क्षयकरीत्यपि वचनमात्रम्॥ २॥

तस्मान्नैरात्म्यभावनाप्रकर्षविशेषाच्चित्तस्य निःक्लेशावस्था मोक्षः॥

10 अत्र प्रतिविधीयते। तत्र यत्तावदुक्तं "ज्ञानक्षणप्रवाह"
इत्यादि, तदविचारितविलसितं, ज्ञानक्षणप्रवाहव्यतिरिक्तं मुक्ता-
कणानुस्यूतसूत्रोपममन्वयिनमात्मानमन्तरेण कृतनाशाकृताग-
मादिदोषप्रसक्तेः स्मरणाद्यनुपपत्तेश्च। यत्पुनरुक्तं "आत्मानं यः
पश्यति" इत्यादि, तत्सूक्तमेव; किं त्वज्ञो जनो दुःखानुषक्तं
15 सुखसाधनं पश्यन्नात्मस्नेहात्सांसारिकेषु दुःखानुषक्तसुखसाधनेषु
प्रवर्तते ऽपथ्यादौ च, मूर्खातुरवत्। हिताहितविवेचकस्त्वता-
त्त्विकसुखसाधनमङ्गनादिकं परित्यज्यात्मस्नेहादात्यन्तिकसुख-
साधने मुक्तिमार्गे प्रवर्तते, पथ्यादौ चतुरातुरवत्। यदप्युक्तं
"मुक्तिमिच्छता" इत्यादि, तदप्यज्ञानविजृम्भितं, सर्वथा-
20 नित्यानात्मकत्वादिभावनाया निर्विषयत्वेन मिथ्यारूपत्वात्सर्वथा
नित्यादिभावनावन्मुक्तिहेतुत्वानुपपत्तेः। न हि कालान्तरा-
वस्थाय्येकानुसंधातृव्यतिरेकेण भावनाप्युपपद्यते। तथा यो हि

विमलादिभिर्बद्धः, तस्यैव तन्मुक्तिकारणपरिज्ञानानुष्ठानाभिसंधिव्यापारे सति मोक्ष इत्येकाधिकरणे सत्येव बन्धमोक्षव्यवस्था लोके प्रसिद्धा । इह त्वन्यः क्षणो बद्धो ऽन्यस्य च तन्मुक्तिकारणपरिज्ञानमन्यस्य चानुष्ठानाभिसंधेर्व्यापारस्येति वैयधिकरण्यात्सर्वमयुक्तम् । किं च । सर्वो बुद्धिमान् बुद्धिपूर्वं प्रवर्तमानः 5
किंचिदिदमतो मम स्यादित्यनुसंधानेन प्रवर्तते । इह च कस्तथाविधो मार्गाभ्यासे प्रवर्तमानो मोक्षो मम स्यादित्यनुसंदध्यात् । क्षणः संतानो वा । न तावत्क्षणः, तस्यैकक्षणस्थायितया निर्विकल्पतया चैतावतो व्यापारान् कर्तुमसमर्थत्वात् । नापि संतानः, तस्य संतानिव्यतिरिक्तस्य सौगतैरभ्युपगमात् । किं च । 10
निरन्वयविनश्वरत्वे च संस्काराणां मोक्षार्थः प्रयासो व्यर्थ एव स्यात्, यतो रागाद्युपरमो हि भवन्मते मोक्ष उपरमश्च विनाशः, स च निर्हेतुकतयायत्नसिद्धः । ततस्तदर्थो ऽनुष्ठानादिप्रयासो निष्फल एव । किं च । तेन मोक्षार्थानुष्ठानेन प्राक्तनस्य रागादिक्षणस्य नाशः क्रियते भाविनो वानुत्पादस्तदुत्पा- 15
दकशक्तेर्वा क्षयः संतानस्योच्छेदो ऽनुत्पादो वा निराश्रयचित्तसंतत्युत्पादो वा । तत्राद्योऽनुपपन्नः, विनाशस्य निर्हेतुकतया भवन्मते कुतश्चिदुत्पत्तिविरोधात् । द्वितीयो ऽप्यत एवासाधीयान्, उत्पादाभावो ह्यनुत्पादः । सो ऽभावरूपत्वात्कथं कुतश्चिदुत्पद्यते, अपसिद्धान्तप्रसङ्गात् । तच्छक्तेः क्षयो ऽनुपपन्नः, 20
तस्याप्यभावरूपतया निर्हेतुकत्वेन भवन्मते कुतश्चिदुत्पत्तिविरोधात् । संतानस्योच्छेदार्थो ऽनुत्पादार्थो वा तत्प्रयास

इत्यप्यनेन निरस्तं, चणोच्छेदानुत्पादवत्। तयोरप्यभावरूपतया निर्हेतुकत्वात्कुतो ऽप्युत्पत्तिः, अनुपपत्तेः। किं च। वास्तवस्य संतानस्यानभ्युपगमात्किं तदुच्छेदादिप्रयासेन। न हि मृतस्य मारणं क्वापि दृष्टम्। तन्न संतानोच्छेदलचणा मुक्तिर्घटते।
5 अथ निराश्रयरूपचित्तसंतत्युत्पत्तिलचणा सा तत्प्रयाससाध्येति पचस्तु ज्यायान्। केवलं सा चित्तसंततिः सान्वया निरन्वया वेति वक्तव्यम्। आद्ये सिद्धसाधनं, तथाभूत एव चित्तसंताने मोचोपपत्तेः। बद्धो हि मुच्यते नाबद्धः। द्वितीयो ऽनुपपन्नः, निरन्वये हि संताने ऽन्यो बध्यते ऽन्यश्च मुच्यते। तथा च
10 बद्धस्य मुक्त्यर्थं प्रवृत्तिर्न स्यात्, कृतनाशादयश्च दोषाः पृष्ठिलग्ना एव धावन्ति। तथा यदुक्तं "कायक्लेश" इत्यादि, तदप्यसत्यं, हिंसाविरतिरूपव्रतोपबृंहकस्य कायक्लेशस्य कर्मत्वे ऽपि तपस्त्वाविरोधात्। व्रताविरोधी हि कायक्लेशः कर्मनिर्जराहेतुत्वात्तपो ऽभिधीयते। न चैवं नारकादिकायक्लेशस्य तपस्त्व-
15 प्रसङ्गः, तस्य हिंसाद्यावेशप्रधानतया तपस्त्वविरोधात्। अतः कथं प्रेचावतां तेन समानता साधुकायक्लेशस्यापादयितुं शक्या। यदपि शक्तिसंकरपचे स्वल्पेनेत्यादि प्रोक्तं, तद्युक्तमेव, विचित्रफलदानसमर्थानां कर्मणां शक्तिसंकरे सति चीणमोहाद्यसमये ऽयोगिचरमसमये चाशेषतः स्वल्पेनैव शुक्लध्यानेन तपसा
20 प्रचयाभ्युपगमात्, जीवन्मुक्तेः परममुक्तेश्चान्यथानुपपत्तेः। स तु तच्छक्तिसंकरो बहुतरकायक्लेशसाध्य इति युक्तस्तदर्थो ऽनेकोपवासादिकायक्लेशाद्यनुष्ठानप्रयासः, तमन्तरेण तत्संकरानुपपत्तेः।

ततः कथंचिदनवच्छिन्नो ज्ञानसंतानो ऽनेकविधतपोनुष्ठाना-
न्मुच्यते । तस्य चानन्तचतुष्टयलाभस्वरूपो मोक्ष इति प्रति-
पत्तव्यम् ॥

अथात्र दिगम्बराः स्वयुक्तीः स्फोरयन्ति । ननु भवतु
यथोक्तलक्षणो मोक्षः ; परं स पुरुषस्यैव घटते न लङ्गनायाः । 5
तथाहि । न स्त्रियो मोक्षभाजनं भवन्ति, पुरुषेभ्यो हीनत्वात्,
नपुंसकवत् ॥ अत्रोच्यते । स्त्रीणां पुरुषेभ्यो हीनत्वं किं चारि-
त्राद्यभावेन १ विशिष्टसामर्थ्यासत्त्वेन २ पुरुषानभिवन्द्यत्वेन ३
स्मारणाद्यकर्तृत्वेन ४ अमहर्द्धिकत्वेन ५ मायादिप्रकर्षवत्त्वेन ६
वा । तत्र न तावदाद्यः पक्षः क्षोदक्षमः, यतः किं चारित्रा- 10
भावः सचेलत्वेन १ मन्दसत्त्वतया २ वा । तत्र यद्याद्यपक्षः,
तदा चेलस्यापि चारित्राभावहेतुत्वं किं परिभोगमात्रेण १
परिग्रहरूपतया २ वा । यदि परिभोगमात्रेण, तदा परि-
भोगो ऽपि किं वस्त्रपरित्यागासमर्थत्वेन १ संयमोपकारित्वेन २
वा । तत्र न तावदाद्यः, यतः प्राणेभ्यो ऽपि नापरं प्रियं, 15
प्राणानप्येताः परित्यजन्त्यो दृश्यन्ते । वस्त्रस्य का कथा । अथ
संयमोपकारित्वेन, तर्हि किं पुरुषाणामपि संयमोपकारितया
वस्त्रपरिभोगः । अथाबला एता बलादपि पुरुषैरुपभुज्यन्त इति
तद्विना तासां संयमबाधासंभवो न पुनर्नराणामिति न तेषां
तदुपभोग इति चेत्, तर्हि न वस्त्राच्चारित्राभावः, तदुप- 20
कारित्वात्तस्य, आहारादिवत् । नापि परिग्रहरूपतया, यतो
ऽस्य तद्रूपता किं मूर्छाहेतुत्वेन १ धारणमात्रेण वा २ अथवा

स्पर्शमात्रेण ३ जीवसंसक्तिहेतुत्वेन वा ४ । तत्र यद्याद्यः, तर्हि शरीरमपि मूर्छाया हेतुर्न वा । न तावदहेतुः, तस्यान्तरंगत्वेन दुर्लभतरतया विशेषतस्तद्धेतुत्वात् । अथ मूर्छाया हेतुरिति पक्षः, तर्हि वस्त्रवत्तस्यापि किं दुस्त्यजत्वेन १ मुक्त्यङ्ग-
5 तया वा २ । न प्रथमत एव परिहारः । यदि दुस्त्यजत्वेनेति पक्षः, तदा तदपि किं सर्वपुरुषाणां १ केषांचिद्वा २ । न तावत्सर्वेषां; दृश्यन्ते हि बहवो वह्निप्रवेशादिभिः शरीरमपि त्यजन्तः । अथ केषांचित्, तदा वस्त्रमपि केषांचिद्दुस्त्यजमिति न परिहार्यं शरीरवत् । अथ मुक्त्यङ्गत्वेनेति पक्षः,
10 तर्हि वस्त्रस्यापि तथाविधशक्तिविकलानां स्वाध्यायाद्युपष्टम्भकत्वेन शरीरवन्मुक्त्यङ्गत्वात्किमिति परिहारः । अथ धारणमात्रेण; एवं सति शीतकाले प्रतिमापन्नं साधुं दृष्ट्वा केनाप्यविपश्चिता निशातमद्य शीतमिति विभाव्य धर्मार्थिना साधुशिरसि वस्त्रे प्रक्षिप्ते सपरिग्रहता स्यात् । अथ यदि स्पर्शमात्रेण, तदा
15 भूम्यादिना निरन्तरं स्पर्शसद्भावात्सपरिग्रहत्वेन तीर्थंकरादीनामपि न मोक्षः स्यादिति लाभमिच्छतो भवतो मूलक्षतिः संजाता । अथ जीवसंसक्तिहेतुत्वेन, तर्हि शरीरस्यापि जीवसंसक्तिहेतुत्वात्परिग्रहहेतुत्वमस्तु, कृमिगण्डूकाद्युत्पादस्य तत्र प्रतिप्राणिप्रतीतत्वात् । अथास्ति, परं यतना तत्र विधीयते, तेनाप्यदोष इति चेत्, तर्हि वस्त्रे ऽप्ययं न्यायः किं काके-
20 र्भक्षितः, वस्त्रस्यापि यतनयैव शावनक्षालनादिकरणेन जीवसंसक्तिनिवारणात् । तन्न वस्त्रसद्भावेन पारिग्रहसंभवः । शापि

मन्दसत्त्वतया, यतः सत्त्वमिह व्रततपोधारणविषयमेषितव्यम्। तच्च तासामत्यं सुदुर्धरग्रीष्मवतीषु संभवति। अतो न चारित्रासंभवेन तासां हीनत्वम्। ननु भवत्वविशिष्टं चारित्रं स्त्रीणां, परं परमप्रकर्षप्राप्तं यथाख्याताभिधं तासां न स्यादिति पुरुषेभ्यो हीनत्वमिति चेत्, तर्हि चारित्रपरमप्रकर्षाभावो ऽपि 5 तासां किं कारणाभावेन १ विरोधसंभवेन वा। न तावदाद्यः पक्षः, अविशिष्टचारित्राभ्यासस्यैव तन्निबन्धनत्वात्, तस्य च स्त्रीष्वनन्तरमेव समर्थितत्वात्। नापि द्वितीयः, यथाख्यातचारित्रस्यार्वाग्दृशामत्यन्तपरोक्षतया केनचिद्विरोधानिर्णयादिति चारित्राभावेन न स्त्रीणां हीनत्वम् ॥ १ ॥ नापि विशिष्टसाम- 10 र्थ्यासत्त्वेन, यत इदमपि किं सप्तमनरकपृथ्वीगमनायोग्यत्वेन १ वादादिलब्धिरहितत्वेन २ अल्पश्रुतत्वेन वा ३। न तावदाद्यः पक्षः, यतस्तदभावः किं यत्रैव जन्मनि तासां मुक्तिगामित्वं तत्रैवोच्यते सामान्येन वा। यद्याद्यपक्षः, तर्हि पुरुषाणामपि यत्र जन्मनि मुक्तिगामित्वं तत्र सप्तमपृथ्वीगमनयोग्यत्वं, तत- 15 स्तेषामपि मुक्त्यभावः स्यात्। अथ द्वितीयः, तदायमाशयो भवतः; यथा सर्वोत्कृष्टपदप्राप्तिः सर्वोत्कृष्टेनाध्यवसायेन प्राप्यते। सर्वोत्कृष्टे च द्वे एव पदे सर्वदुःखस्थानं सप्तमी नरकपृथ्वी सर्वसुखस्थानं मोक्षश्च। ततो यथा स्त्रीणां सप्तमपृथ्वीगमनमागमे निषिद्धं तद्गमनयोग्यतथाविधसर्वोत्कृष्टमनोवीर्याभावात्, एवं 20 मोक्षो ऽपि तथाविधशुभमनोवीर्याभावान्न स्त्रीणां भविष्यति। प्रयोगश्चात्र। नास्ति स्त्रीषु मुक्तिकारणं, शुभमनोवीर्यपरम-

प्रकर्षात्, सप्तमपृथ्वीगमनकारणाशुभमनोवीर्यपरमप्रकर्षवत् । तदेतदयुक्तं, व्याप्तेरभावात् । न हि बहिर्व्याप्तिमात्रेण हेतुर्गमकः स्यात्, किं त्वन्तर्व्याप्त्या, अन्यथा तत्पुत्त्रत्वादेरपि गमकत्वप्रसङ्गः । अन्तर्व्याप्तिश्च प्रतिबन्धबलेनैव सिध्यति, न चात्र प्रति-
5 बन्धो विद्यते । ततः संदिग्धविपक्षव्यावृत्तिकमिदं साधनं चरमशरीरिभिर्निश्चितव्यभिचारं च । तेषां हि सप्तमपृथ्वीगमनहेतुमनोवीर्यप्रकर्षाभावे ऽपि मुक्तिहेतुमनोवीर्यप्रकर्षसद्भावात् । तथा मत्स्यैरपि व्यभिचारः । तेषां हि सप्तमपृथ्वीगमनहेतुमनोवीर्यप्रकर्षसद्भावे ऽपि न मुक्तिगमनहेतुशुभमनोवीर्यप्रकर्षसद्भाव
10 इति । तथा न हि येषामधोगमनशक्तिः स्तोका तेषामूर्ध्वगतावपि शक्तिः स्तोकैव, भुजपरिसर्पादिभिर्व्यभिचारात् । तथाहि । भुजपरिसर्पा अधो द्वितीयामेव पृथ्वीं गच्छन्ति, न ततो ऽधः, पक्षिणस्तृतीयां यावत्, चतुर्थीं चतुष्पदाः, पञ्चमीमुरगाः । अथ च सर्वे ऽप्यूर्ध्वमुत्कर्षतः सहस्रारं यावद्गच्छन्ति, अतो न सप्तमपृथ्वी-
15 गमनायोग्यत्वेन विशिष्टसामर्थ्यासत्त्वम् ॥ नापि वादादिलब्धिरहितत्वेन, मूककेवलिभिर्व्यभिचारात् । तथाल्पश्रुतत्वेनेति पक्षस्त्वनुद्घोष्य एव, माषतुषाद्यनुमितविशिष्टसामर्थ्यैर्माषतुषादिभिरनैकान्तिकत्वात् । तन्न विशिष्टसामर्थ्यासत्त्वं स्त्रीणां घटते ॥२॥ नापि पुरुषानभिवन्द्यत्वेन स्त्रीणां हीनत्वं, यतस्तदपि किं
20 सामान्येन १ गुणाधिकपुरुषापेक्षया २ वा । आद्यो ऽसिद्धः, तीर्थंकरजनन्यादयो हि शक्रैरपि पूज्यन्ते किमङ्ग शेषपुरुषैः । द्वितीयश्चेत्, तदा गणधरा अपि तीर्थंकरैर्नाभिवन्द्यन्त इति

तेषामपि हीनत्वान्मोक्षो न स्यात्। तथा चतुर्वर्णस्य सङ्घस्य तीर्थंकरैर्वन्द्यत्वात्तदन्तर्गतत्वेन संयतीनामपि तीर्थंकरवन्द्यत्वाभ्युपगमात्कथं स्त्रीणां हीनत्वम्॥ ३॥ अथ स्मारणाद्यकर्तृत्वेनेति पक्षः, तदाचार्याणामेव मुक्तिः स्यान्न शिष्याणां, तेषां स्मारणाद्यकर्तृत्वात्॥४॥ अथामहर्द्धिकत्वेनेति पक्षः। सो ऽपि न दक्षः, यतो दरिद्राणामपि केषांचिन्मुक्तिः श्रूयते केषांचिन्महर्द्धिकाणामपि चक्रवर्त्यादीनां तदभावः॥ ५॥ अथ मायादिप्रकर्षवत्त्वेनेति। तदपि न युक्तं, नारददृढप्रहारिभिर्व्यभिचारात्। तन्न हीनत्वं कथमपि स्त्रीणां जाघटीतीति हीनत्वादित्यसिद्धो हेतुः॥६॥ ततस्त्वविभागेन न पुरुषाणामपि निर्वाणं प्रतिपत्तव्यम्। प्रयोगश्चात्र। अस्ति स्त्रीणां मुक्तिः, अविकलकारणवत्त्वात्, पुंवत्। तत्कारणानि सम्यग्दर्शनादीनि स्त्रीषु संपूर्णान्युपलभ्यन्ते। ततो भवत्येव स्त्रीणां मोक्ष इति स्थितं मोक्षतत्त्वम्॥ एतेन

ज्ञानिनो धर्मतीर्थस्य कर्तारः परमं पदम्।
गत्वा गच्छन्ति भूयो ऽपि भवं तीर्थनिकारतः॥ इति

परपरिकल्पितं पराकृतम्॥

**एतानि नव तत्त्वानि यः श्रद्धत्ते स्थिराशयः।**
**सम्यक्त्वज्ञानयोगेन तस्य चारित्रयोग्यता॥ ५३॥**

एतान्यनन्तरोदितानि नवसंख्यानि तत्त्वानि यः स्थिराशयो न पुनः शङ्कादिना चलचित्तः श्रद्धानस्य ज्ञानपूर्वकत्वाज्जानीते श्रद्धत्ते च। अवैपरीत्येन मनुते। एतावता ज्ञानश्रद्धाने

मिथ्यारूपेवेति सूचितम्। यथोक्तं श्रीगन्धहस्तिना महातर्के "द्वादशाङ्गमपि श्रुतं विदर्शनस्य मिथ्या" इति। तस्य श्रद्धानस्य सम्यक्त्वज्ञानयोगेन सम्यग्दर्शनज्ञानसद्भावेन चारित्रस्य सर्वसावद्यव्यापारनिवृत्तिरूपस्य देशसर्वभेदस्य योग्यता भवति।
5 अत्र ज्ञानात्सम्यक्त्वस्य प्राधान्येन पूज्यत्वात्प्राग्निपातः। अनेन सम्यक्त्वज्ञानसद्भाव एव चारित्रं भवति नान्यथेत्यावेदितं द्रष्टव्यम्॥

**तथाभव्यत्वपाकेन यस्यैतत्त्रितयं भवेत्।**
**सम्यग्ज्ञानक्रियायोगाज्जायते मोक्षभाजनम्॥ ५४॥**

जीवा द्वेधा, भव्याभव्यभेदात्। अभव्यानां सम्यक्त्वाद्यभावः,
10 भव्यानामपि भव्यत्वपाकमन्तरेण तदभाव एव, तथाभव्यत्वपाके तु तत्सद्भावः। ततोऽयमर्थः। भविष्यति विवक्षितपर्यायेणेति भव्यः। तद्भावो भव्यत्वं नाम सिद्धिगमनयोग्यत्वं, जीवानामनादिपारिणामिको भावः। एवं सामान्यतो भव्यत्वमभिधायाथ तदेव प्रतिविशिष्टमभिधातुमाह। तथा तेनानियत-
15 प्रकारेण भव्यत्वं तथाभव्यत्वम्। अयं भावः। भव्यत्वमेव स्वस्वकालक्षेत्रगुर्वादिद्रव्यलक्षणसमग्रीभेदेन नानाजीवेषु भिद्यमानं सत्तथाभव्यत्वमुच्यते। अन्यथा तु सर्वैः प्रकारैरेकाकारायां योग्यतायां सर्वेषां भव्यजीवानां युगपदेव धर्मप्राप्त्यादि भवेत्। तथाभव्यत्वस्य यः पाकः फलदानाभिमुख्यं, तेन तथा-
20 भव्यत्वपाकेन। यस्य कस्यापि सागरोपमकोटाकोट्यभ्यन्तरानीत-सर्वकर्मस्थितिकस्य भव्यस्य। एतत्त्रितयं ज्ञानदर्शनचारित्रत्रयं

भवेत्। यस्तदोर्नित्याभिसंबन्धात्, स भव्यः। सम्यक्समीचीने ये ज्ञानक्रिये ज्ञानचारित्रे, तयोर्योगात्संयोगान्मोक्षस्य वियोगस्यानन्तज्ञानदर्शनसम्यक्त्वसुखवीर्यपञ्चकात्मकस्य भाजनं स्थानं जायते। एतेन केवलाभ्यां ज्ञानक्रियाभ्यां न मोक्षः किं तूभाभ्यां संयुक्ताभ्यां ताभ्यामिति ज्ञापितं भवति। अत्र ज्ञानग्रहणेन 5 सदा सहचरत्वेन दर्शनमपि ग्राह्यम्। यदुवाच वाचकमुख्यः "सम्यग्ज्ञानदर्शनचारित्राणि मोक्षमार्गः" इति ॥

प्रत्यक्षादिप्रमाणविशेषलक्षणमत्र ग्रन्थकारः स्वयमेव वक्ष्यति। तच्च विशेषलक्षणं सामान्यलक्षणाविनाभावि सामान्यलक्षणं च विशेषलक्षणाविनाभावि, सामान्यविशेषलक्षणयोरन्योन्यापरि- 10 हारेण स्थितत्वात्। तेन प्रमाणलक्षणस्यादौ प्रमाणसामान्यलक्षणं सर्वत्र वक्तव्यम्। अतो ऽत्रापि स प्रथमं तदभिधीयते। स्वपरव्यवसायि ज्ञानं प्रमाणमिति प्रकर्षेण संशयाद्यभावस्वभावेन मीयते परिच्छिद्यते वस्तु येन तत्प्रमाणम्। स्वमात्मा ज्ञानस्य स्वरूपं परः स्वस्मादन्यो ऽर्थ इति यावत् तौ विशेषेण 15 यथावस्थितस्वरूपेणावस्यति निश्चिनोतीत्येवंशीलं यत्तत्स्वपरव्यवसायि ज्ञायते। प्राधान्येन विशेषो गृह्यते ऽनेनेति ज्ञानम्। अत्र ज्ञानमिति विशेषणमज्ञानरूपस्य व्यवहारमार्गानवतारिणः सम्मात्रगोचरस्य स्वसमयप्रसिद्धस्य दर्शनस्य सन्निकर्षादेश्चाचेतनस्य नैयायिकादिकल्पितस्य प्रामाण्यपराकरणार्थं 20 ज्ञानस्यापि च प्रत्यक्षरूपस्य शाक्यैर्निर्विकल्पतया प्रामाण्येन कल्पितस्य संशयविपर्ययानध्यवसायानां च प्रमाणत्वव्यवच्छेदार्थं

व्यवसायीति। पारमार्थिकपदार्थसार्थापलापिज्ञानाद्वैतादिवा-
दिमतमपाकर्तुं परेति। नित्यपरोक्षबुद्धिवादिनां मीमांसका-
नामेकात्मसमवायिज्ञानान्तरप्रत्यक्षज्ञानवादिनां वैशेषिकयौगा-
नामचेतनज्ञानवादिनां कापिलानां च कदाग्रहनिग्रहाय स्वेति।
5 समग्रं तु लक्षणवाक्यं परपरिकल्पितस्यार्थोपलब्धिहेत्वादेः
प्रमाणलक्षणत्वप्रतिक्षेपार्थम्। अत्र च स्वस्य ग्रहणयोग्यः परो
ऽर्थः स्वपर इत्यस्यापि समासस्याश्रयणाद्व्यवहारिजनापेक्षया
यस्य यथा यत्र ज्ञानस्याविसंवादः, तस्य तथा तत्र प्रामाण्य-
मित्यभिहितं भवति। तेन संशयादेरपि धर्मिमात्रापेक्षया
10 न प्रामाण्यव्याहतिः॥

अथ विशेषलक्षणाभिधित्सया प्रथमं तावत्प्रमाणस्य संख्यां
विषयं चाह।

**प्रत्यक्षं च परोक्षं च द्वे प्रमाणे तथा मते।**
**अनन्तधर्मकं वस्तु प्रमाणविषयस्त्विह॥ ५५॥**

15 अक्षमिन्द्रियं प्रति गतमिन्द्रियाधीनतया यदुत्पद्यते,
तत्प्रत्यक्षमिति तत्पुरुषः। इदं व्युत्पत्तिनिमित्तमेव।
प्रवृत्तिनिमित्तं तु स्पष्टत्वम्। तेनानिन्द्रियादिप्रत्यक्षशब्दवाच्यं
सिद्धम्। अक्षो जीवो वाच व्याख्येयः, जीवमाश्रित्यैवेन्द्रिय-
निरपेक्षमनिन्द्रियादिप्रत्यक्षस्योत्पत्तेः। तत्र तत्पुरुषाश्रयणात्प्र-
20 त्यक्षो बोधः। प्रत्यक्षा बुद्धिरित्यादौ स्त्रीपुंसभावो ऽपि सिद्धः,
अक्षाणां परमव्यापारनिरपेक्षं मनोव्यापारेणासाक्षादर्थपरि-

ज्येदकम्। परोक्षमिति परशब्दसमानार्थेन परस्-शब्देन सिद्धम्। चशब्दौ द्वयोरपि तुल्यकक्षतां लक्षयतः। तेनानुमानादेः परोक्षस्य प्रत्यक्षपूर्वकत्वेन प्रवृत्तेर्यत्कैश्चित्प्रत्यक्षं ज्येष्ठमभीष्टमेतच्च श्रेष्ठमिति सूचितम्। द्वयोरपि प्रामाण्यं, प्रतिविशेषाभावात्। "पश्य मृगो धावति"इत्यादौ प्रत्यक्षस्यापि 5 परोक्षपूर्वकस्य प्रवृत्तेः परोक्षस्य ज्येष्ठताप्रसङ्गात्। प्रत्यक्षपूर्वकमेव च परोक्षमुपजायत इति नायं सर्वत्रैकान्तः, अन्यथानुपपन्नतावधारितोच्छ्वासनिःश्वासादिजीवलिङ्गसद्भावासद्भावाभ्यां जीवसाक्षात्कारिप्रत्यक्षक्षणेऽपि जीवन्मृतप्रतीतिदर्शनात्, अन्यथा लोकव्यवहाराभावप्रसङ्गात्। तथाशब्दः प्रागुक्तनवतत्त्वाद्यपेक्षया 10 समुच्चये, वाक्यस्य सावधारणत्वात्। द्वे एव प्रत्यक्षपरोक्षप्रमाणे मते संमते। यदपि परैरुक्तं प्रमाणसंख्यान्तरं प्रत्यज्ञायि, तत्रापि यत्पर्यालोच्यमानमुपमानार्थापत्त्यादिवत्प्रमाणतामात्मसाक्षात्करोति, तदनयोरेव प्रत्यक्षपरोक्षयोरन्तर्भावनीयम्। यत्पुनर्विचार्यमाणं मीमांसकपरिकल्पिताभाव- 15 वत्प्रामाण्यमेव नास्कन्दति, न तेन बहिर्भूतेनान्तर्भूतेन वा प्रयोजनम्। अवस्तुत्वादित्यपकर्णनीयम्। तथाहि। प्रत्यक्षानुमानागमोपमानार्थापत्त्यभावसंभवैतिह्यप्रातिभयुक्त्यनुपलब्ध्यादीनि प्रमाणानि यानि परे प्रोचुः, तत्रानुमानागमौ परोक्षप्रकारावेव विज्ञातव्यौ। उपमानं तु नैयायिकमते। कश्चित्प्रेष्यः प्रभुणा 20 प्रेषयांचक्रे "गवयमानय" इति। स गवयशब्दवाच्यमर्थमजानानः कंचन वनेचरं पुरुषमप्राक्षीत् "कीदृग्गवयः" इति। स प्राह

"यादृग्गौस्तादृग्गवयः" इति। ततस्तस्य पुरुषस्याप्तातिदेश-वाक्यार्थस्मरणसहकारि गोसदृशगवयपिण्डज्ञानं "अयं स गवय-शब्दवाच्यो ऽर्थः" इति प्रतिपत्तिं फलरूपामुत्पादयत्प्रमाण-मिति। मीमांसकमते तु येन प्रतिपत्त्रा गौरुपलब्धो न गवयो
5 न चातिदेशवाक्यं "गौरिव गवयः" इति श्रुतं, तस्य विकटा-टवीं पर्यटतो गवयदर्शने प्रथमे समुत्पन्ने सति यत्परोक्षे गवि सादृश्यज्ञानमुन्मज्जति "अनेन सदृशः स गौः" इति "तस्य गोरनेन सादृश्यं" इति वा, तदुपमानम्। तस्माद्यत्स्मर्यते तत्स्यात्सादृश्येन विशेषितं प्रमेयमुपमानस्य सादृश्यं वा तदन्वित-
10 मिति वचनादिति। एतच्च परोक्षभेदे प्रत्यभिज्ञायामन्त-र्भाव्यम्। अर्थापत्तिरपि

प्रमाणषट्कविज्ञातो यत्रार्थो ऽनन्यथा भवन्।
अदृष्टं कल्पयेदन्यं सार्थापत्तिरुदाहृता॥

इत्येवं लक्षणानुमानान्तर्गतैव, अर्थापत्त्युत्थापकस्यार्थस्यान्यथा-
15 नुपपत्तिनिश्चयेनैवादृष्टार्थपरिकल्पनात्, अन्यथानुपपत्तिनिश्चय-स्यानुमानत्वात्। अभावाख्यं तु प्रमाणं प्रमाणपञ्चकाभावः १ तदन्यज्ञानं २ आत्मा वा ज्ञानविनिर्मुक्तः ३ इति त्रिधाभि-धीयते। तत्राद्यपक्षस्यासंभव एव प्रसज्य वृत्त्या प्रमाणपञ्च-काभावस्य तुच्छत्वेनावस्तुत्वात्, अभावज्ञानजनकत्वायोगात्।
20 द्वितीयपक्षे तु पर्युदासवृत्त्या यत्तदन्यज्ज्ञानं तत्प्रत्यक्षमेव, प्रत्यक्षेणैव घटादिविविक्तस्य भूतलादेर्ग्रहणात्। क्वचित्तु तद्घटं भूतलमिति प्रत्यभिज्ञानेन; यो ऽग्निमान्न भवति नासौ

धूमवानिति तर्केण, नात्र धूमो नाग्नेरित्यनुमानेन, गृहे गर्गो नास्तीत्यागमेन वाभावप्रतीतेः क्काभावः प्रमाणं प्रवर्तताम्। तृतीयपक्षस्य पुनरसंभव एव। आत्मनो ज्ञानाभावे कथं वस्त्व-भाववेदकत्वं, वेदनस्य ज्ञानधर्मत्वात्, अभाववेदकत्वे वा ज्ञान-विनिर्मुक्तत्वस्याभावात्। तस्माभावः प्रमाणान्तरम्। संभवोऽपि 5 समुदायेन समुदायिनोऽवगम इत्येवंलक्षणः संभवति खार्यां द्रोण इत्यादिको नानुमानात्पृथक्। तथाहि। खारी द्रोण-वती, खारीत्वात्पूर्वोपलब्धखारीवत्। ऐतिह्यं त्वनिर्दिष्टप्रवक्तृकं प्रवादपारंपर्यम्। एवमूचुर्वृद्धा यथा "इह वटे यक्षः प्रति-वसति" इति। तदप्रमाणं, अनिर्दिष्टवक्तृकत्वेन सांशयिकत्वात्। 10 आप्तप्रवक्तृकत्वनिश्चये त्वागम इति। यदपि प्रतिभमक्ष-लिङ्गशब्दव्यापारानपेक्षमकस्मादेव "अद्य मे महीपतिप्रसादो भविता" इत्याकारं स्पष्टतया वेदनमुदयते, तदप्यनिन्द्रियनि-बन्धनतया मानसमिति-प्रत्यक्षकुक्षिनिक्षिप्तमेव। यत्पुनः प्रिया-प्रियप्राप्तिप्रभृतिफलेन सार्धं गृहीतान्यथानुपपत्तिकात्मनः प्रसा- 15 दोद्वेगादेर्लिङ्गादुदेति, तत्पिपीलिकापटलोत्सर्पणोत्थज्ञानवद-स्पष्टमनुमानमेव। एवं युक्त्यनुपलब्धोराद्दिशब्दादिविशिष्टोप-लब्धिजनकस्य बोधाबोधरूपविशेषत्यागेन सामान्यतो लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधं स्मृतमित्युक्तस्य प्रमाणस्यान्येषां च केषांचित्प्रमाणान्तरत्वेन परपरिकल्पितानां यथालक्षणं 20 प्रत्यक्षपरोक्षयोरन्तर्भावो निराकरणं च विधेयम्। तदेवं न प्रत्यक्षपरोक्षलक्षणद्वैविध्यातिक्रमं शक्तोऽपि कर्तुं क्षमः॥

अथ तयोर्लक्षणाद्यभिधीयते । स्वपरव्यवसायि ज्ञानं स्पष्टं प्रत्यक्षम् । तद्द्विप्रकारं, सांव्यवहारिकं पारमार्थिकं च । तत्र सांव्यवहारिकं बाह्येन्द्रियादिसामग्रीसापेक्षत्वादपारमार्थिकमस्मदादिप्रत्यक्षम् । पारमार्थिकं त्वात्मसंनिधिमात्रापेक्षमवध्यादिप्रत्यक्षम् । सांव्यवहारिकं द्वेधा, चक्षुरादीन्द्रियनिमित्तं मनोनिमित्तं च । तद्द्विविधमपि चतुर्धा, अवग्रहेहावायधारणाभेदात् । तत्र विषयविषयिसन्निपातानन्तरसमुद्भूतसत्तामात्रगोचरदर्शनाज्जातमाद्यमवान्तरसामान्याकारविशिष्टवस्तुग्रहणमवग्रहः । अस्यार्थः । विषयो द्रव्यपर्यायात्मको ऽर्थो, विषयी चक्षुरादिः, तयोः समीचीनो भ्रान्त्याद्यजनकत्वेनानुकूलो निपातो योग्यदेशाद्यवस्थानं, तस्मादनन्तरं समुद्भूतमुत्पन्नं यत्सत्तामात्रगोचरं दर्शनं निराकारो बोधस्तस्माज्जातमाद्यं सत्तासामान्याद्यवान्तरैर्मनुष्यत्वादिभिर्विशेषैर्विशिष्टस्य वस्तुनो यद्ग्रहणं ज्ञानं तदवग्रहः । पुनरवगृहीतविषयसंशयानन्तरं तद्विशेषाकाङ्क्षणमीहा । तदनन्तरं तदीहितविशेषनिर्णयोऽवायः । स एव दृढतमावस्थापन्नो धारणा । अत्र च पूर्वस्य प्रमाणतोत्तरस्य च फलतेत्येकस्यापि मतिज्ञानस्य चातुर्विध्यं कथंचित् प्रमाणफलभेदश्चोपपन्नः । तथा यद्यपि क्रमभाविनामवग्रहादीनां हेतुफलतया व्यवस्थितानां पर्यायार्थाद्भेदः, तथाप्येकजीवतादात्म्येन द्रव्यार्थादेशादमीषामैक्यं कथंचिदविरुद्धं, अन्यथा हेतुफलभावाभावप्रसक्तिर्भवेदिति प्रत्येयम् । धारणास्वरूपा च मतिरविसंवादस्मृतिफलस्य हेतुत्वात्प्रमाणं, स्मृतिरपि

तथाभूतप्रत्ययवमर्शस्वभावसंज्ञाफलजनकत्वात्। संज्ञापि तथा-
भूततर्कस्वभावचिन्ता, फलजनकत्वात्। चिन्ताप्यनुमानलक्षणा,
अभिनिबोधफलजनकत्वात्। सोऽपि हानादिबुद्धिजनकत्वात्।
तदुक्तम्। मतिः स्मृतिः संज्ञा चिन्ताभिनिबोध इत्यनर्थान्तरम्।
अनर्थान्तरमिति कथंचिदेकविषयं प्राक्शब्दयोजनान्मतिज्ञान- 5
मेतत्। शेषमनेकप्रभेदं शब्दयोजनादुपजायमानमविशदं ज्ञानं
श्रुतमिति केचित्। सैद्धान्तिकास्त्ववग्रहेहावायधारणाप्रभेद-
रूपाया मतेर्वाचकाः पर्यायशब्दा मतिः स्मृतिः संज्ञा चिन्ता-
भिनिबोध इत्येते शब्दा इति प्रतिपन्नाः। स्मृतिसंज्ञाचिन्ता-
दीनां च कथंचिद्गृहीतग्राहित्वेऽप्यविसंवादकत्वादनुमानवत्प्रमाण-
ताभ्युपेया, अन्यथा व्याप्तिग्राहकप्रमाणेन गृहीतविषयत्वेनानु- 10
मानस्याप्रमाणताप्रसक्तेः। अत्र च यच्छब्दसंयोजनात्प्राक् स्मृत्या-
दिकमविसंवादि व्यवहारनिर्वर्तनक्षमं वर्तते तन्मतिः, शब्द-
संयोजनात्प्रादुर्भूतं तु सर्वं श्रुतमिति विभागः। स्मृतिसंज्ञादीनां
च स्मरणतर्कानुमानरूपाणां परोक्षभेदानामपि यदिह प्रत्यक्षा-
धिकारे भणनं तन्मतिश्रुतविभागज्ञापनाय प्रसङ्गेनेति विज्ञेयम्॥ 15

अथ परोक्षम्। अविशदमविसंवादि ज्ञानं परोक्षम्।
स्मरणप्रत्यभिज्ञानतर्कानुमानागमभेदतस्तत्पञ्चधा। संस्कार-
प्रबोधसंभूतमनुभूतार्थविषयं तदित्याकारं वेदनं स्मरणं, यथा
तत्तीर्थंकरबिम्बमिति॥ १॥ अनुभवस्मरणकारणकं संकलनं
प्रत्यभिज्ञानं, तदेवेदं तत्सदृशं तद्विलक्षणं तत्प्रतियोगीत्यादि, 20
यथा स एवायं देवदत्तः, गोसदृशो गवयः, गोविलक्षणो

न्वितः,, इदमस्माद्दीर्घं ह्रस्वमणीयो महीयो दवीयो वा दूरादयं तीव्रो वह्निः सुरभीदं चन्दनमित्यादि । अत्रादि-शब्दात्स एव वह्निरनुमीयते स एवानेनार्थः कथ्यत इत्यादि स्मरणप्रत्यभिज्ञानुमानागमादिजन्यं च संकलनमुदाहार्यम् ॥ २ ॥
5 उपलम्भानुपलम्भसंभवं त्रिकालकलितसाध्यसाधनसंबन्धाद्या-लम्बनमिदमस्मिन् सत्येव भवतीत्याद्याकारं संवेदनं तर्कः, यथाग्नौ सत्येव धूमो भवति तदभावे न भवत्येवेति ॥ ३ ॥
अनुमानं द्विधा, स्वार्थं परार्थं च । हेतुग्रहणसम्बन्धस्मरणहेतुकं साध्यविज्ञानं स्वार्थम् । निश्चितान्यथानुपपत्त्येकलक्षणो हेतुः ।
10 इष्टमबाधितमसिद्धं साध्यं ; साध्यविशिष्टः प्रसिद्धो धर्मी पक्षः । पक्षहेतुवचनात्मकं परार्थमनुमानमुपचारात् । मन्दमतींस्तु व्युत्पादयितुं दृष्टान्तोपनयनिगमनान्यपि प्रयोज्यानि । दृष्टान्तो द्वेधा, अन्वयव्यतिरेकभेदात् । साधनसत्तायां यत्रावश्यं साध्य-सत्ता प्रदर्श्यते, सोऽन्वयदृष्टान्तः । साध्याभावेन साधनाभावो
15 यत्र कथ्यते, स व्यतिरेकदृष्टान्तः । हेतोरुपसंहार उपनयः । प्रतिज्ञायास्तूपसंहारो निगमनम् । एते पक्षादयः पञ्चावयवाः कीर्त्यन्त इत्यादि । अत्रोदाहरणम् । परिणामी शब्दः, कृतकत्वात् । यः कृतकः स परिणामी दृष्टः, यथा घटः । कृतकश्चायम् । तस्मात्परिणामी यस्तु न कृतको दृष्टः । यस्तु
20 न परिणामी स न कृतको दृष्टः, यथा वन्ध्यास्तनन्धयः । कृतकश्चायम् । तस्मात्परिणामी शब्द इत्यादि । नन्वत्र निश्चितान्यथानुपपत्तिरेवैकं हेतोर्लक्षणमभ्यधायि किं न

पक्षधर्मत्वादित्रैरूप्यमिति चेत्। उच्यते। पक्षधर्मत्वादौ त्रैरूप्ये सत्यपि तत्पुत्रत्वादेर्हेतोर्गमकत्वादर्शनात्, असत्यपि च त्रैरूप्ये हेतोर्गमकत्वदर्शनात्। तथाहि। जलचन्द्रान्नभश्चन्द्रः, कृत्तिकोदयाच्छकटोदयः, पुष्पितैकचूततः पुष्पिताः शेषचूताः, शशाङ्कोदयात्समुद्रवृद्धिः, सूर्योदयात्पद्माकरबोधः, वृक्षाच्छाया चैते पक्षधर्मताविरहेऽपि सर्वजनैरनुमीयन्ते। कालादिकस्तत्र धर्मी समस्त्येवेति चेत्। न, अतिप्रसङ्गात्। एवं हि शब्दस्यानित्यत्वे साध्ये काककार्ष्ण्यादेरपि गमकत्वप्रसक्तेः, लोकादेर्धर्मिणस्तत्र कल्पयितुं शक्यत्वात्, अनित्यः शब्दः श्रावणत्वात् सह्यातायमेवंविधस्वरान्यथानुपपत्तेः, सर्वं नित्यमनित्यं वा सत्त्वादित्यादिषु सपक्षे सत्त्वस्याभावेऽपि गमकत्वदर्शनाच्चेति॥४॥ आप्तवचनाज्जातमर्थज्ञानमागमः। उपचारादाप्तवचनं च, यथास्यत्र निधिः, सन्ति मेर्वादयः। अभिधेयं वस्तु यथावस्थितं यो जानीते यथाज्ञानं चाभिधत्ते, स आप्तो जनकतीर्थकरादिः॥५॥ इत्युक्तं परोक्षम्।

> तेन मुख्यसंव्यवहारेण संवादिविशदमतम्।
> ज्ञानमध्यक्षमन्यद्धि परोक्षमिति संग्रह इति॥१॥
> यद्यथैवाविसंवादि प्रमाणं तत्तथा मतम्।
> विसंवाद्यप्रमाणं च तदध्यक्षपरोक्षयोः॥२॥

तत एकस्यैव ज्ञानस्य यत्राविसंवादः, तत्र प्रमाणता, इतरत्र च तदाभासता, यथा तिमिराद्युपप्लुतं ज्ञानं चन्द्रादावविसंवादकत्वात्प्रमाणं, तत्संख्यादौ च तदेव विसंवादकत्वादप्रमाणम्।

प्रमाणेतरव्यवस्थायाः संवादाविसंवादलक्षणत्वादिति स्थितमेतत् "प्रत्यक्षं परोक्षं च द्वे एव प्रमाणे"। अत्र च मतिश्रुतावधिमनःपर्यायज्ञानानां मध्ये मतिश्रुते परमार्थतः परोक्षं प्रमाणं, अवधिमनःपर्यायकेवलानि तु प्रत्यक्षं प्रमाणमिति ॥

5 अथोत्तरार्धं व्याख्यायते। "अनन्तधर्मकं वस्तु" इत्यादि। इह प्रमाणाधिकारे प्रमाणस्य प्रत्यक्षस्य परोक्षस्य च विषयस्तु ग्राह्यं पुनरनन्तधर्मकं वस्तु। अनन्तास्त्रिकालविषयत्वादपरिमिता धर्माः स्वभावाः सहभाविनः क्रमभाविनश्च स्वपर्याया यस्मिंस्तदनन्तधर्मकमेव। स्वार्थे कप्रत्यये ऽनन्तधर्मकमनेकान्ता-

10 त्मकमित्यर्थः। अनेके ऽन्ता अंशा धर्मा वात्मा स्वरूपं यस्य, तदनेकान्तात्मकमिति व्युत्पत्तेः। वस्तु सचेतनाचेतनं सर्वं द्रव्यम्। अत्रानन्तधर्मकं वस्त्विति पक्षः। प्रमाणविषय इत्यनेन प्रमेयत्वादिति केवलव्यतिरेकी हेतुः सूचितः, अन्यथानुपपत्त्येकलक्षणत्वाद्धेतोरन्तर्व्याप्त्यैव साध्यस्य सिद्धत्वात् दृष्टान्तादिभिर्न

15 प्रयोजनम्। यदनन्तधर्मात्मकं न भवति तत्प्रमेयमपि न भवति, यथा व्योमकुसुममिति केवलो व्यतिरेकः, साधर्म्यदृष्टान्तानां पक्षकुक्षिनिक्षिप्तत्वेनान्वयायोगादिति। अस्य च हेतोरसिद्धविरुद्धानैकान्तिकादिदोषाणां सर्वथानवकाश एव, प्रत्यक्षादिना प्रमाणेनानन्तधर्मात्मकस्यैव सकलस्य प्रतीतेः। ननु

20 कथमेकस्मिन् वस्तुन्यनन्ता धर्माः प्रतीयन्त इति चेत्। उच्यते। प्रमाणप्रमेयरूपस्य सकलस्य क्रमाक्रमभाव्यनन्तधर्मात्मकस्यैकरूपस्य वस्तुनो यथैव स्वपरद्रव्याद्यपेक्षया सर्वत्र सर्वप्रमातॄणां

प्रतीतिर्जायमानास्ति, तथैव वयमेते सौवर्णघटदृष्टान्तेन सवि-
स्तरं दर्शयामः। विवक्षितो हि घटः स्वद्रव्यक्षेत्रकालभावैर्वि-
द्यते, परद्रव्यक्षेत्रकालभावैस्तु न विद्यते। तथाहि। घटो यदा
सत्त्वज्ञेयत्वप्रमेयत्वादिधर्मैश्चिन्त्यते, तदा तस्य सत्त्वादयः स्वपर्याया
एव सन्ति, न तु केचन परपर्यायाः। सर्वस्य वस्तुनः सत्त्वादी- 5
न्धर्माननधिकृत्य सजातीयत्वाद्विजातीयस्यैवाभावान्न कुतो ऽपि
व्यावृत्तिः। द्रव्यतस्तु यदा पौद्गलिको घटो विवक्ष्यते, तदा स
पौद्गलिकद्रव्यत्वेनास्ति, धर्माकाशादिद्रव्यत्वैस्तु नास्ति। अत्र
पौद्गलिकत्वं स्वपर्यायः। धर्मादिभ्यो ऽनन्तेभ्यो व्यावृत्तत्वेन
परपर्याया अनन्ताः, जीवद्रव्याणामनन्तत्वात्। पौद्गलिको 10
ऽपि स घटः पार्थिवत्वेनास्ति न पुनराप्यादित्वैः। अत्र पार्थि-
वत्वं स्वपर्यायः, आप्यादिद्रव्येभ्यस्तु बहुभ्यो व्यावृत्तिः, ततः
परपर्याया अनन्ताः। एवमग्रे ऽपि स्वपरपर्यायव्यक्तिर्वेदितव्या।
पार्थिवो ऽपि स धातुरूपतयास्ति न पुनर्मृत्त्वादिभिः। धातु-
रूपो ऽपि स सौवर्णत्वेनास्ति न पुना राजतत्वादिभिः। सौवर्णो 15
ऽपि स घटितसुवर्णात्मकत्वेनास्ति न त्वघटितसुवर्णात्मकत्वादिना।
घटितसुवर्णात्मापि देवदत्तघटितत्वेनास्ति न तु यज्ञदत्तादि-
घटितत्वादिना। घटितो ऽपि पृथुबुध्नाद्याकारेणास्ति न
पुनर्मुकुटादित्वेन। पृथुबुध्नोदराद्याकारेनास्ति नावृत्ताकारेन।
वृत्ताकारेणास्ति न पुनरन्यघटाद्याकारेण। स्वाकारो ऽपि 20
स्वदलिकैरस्ति न तु परदलिकैः। एवमनया दिशा परेणापि
स येन येन पर्यायेण विवक्ष्यते स तस्य स्वपर्यायः, तदन्ये तु

परपर्यायाः । तदेवं द्रव्यतः स्तोकाः स्वपर्यायाः, परपर्यायास्तु व्यावृत्तिरूपा अनन्ता, अनन्तेभ्यो द्रव्येभ्यो व्यावृत्तित्वात् ॥ क्षेत्रतस्तु स त्रिलोकीवर्तित्वेन विवक्षितो न कुतो ऽपि व्यावर्तते । ततः स्वपर्यायो ऽस्ति न परपर्यायः । त्रिलोकीवर्त्यपि स तिर्यग्-
5 लोकवर्तत्वेनास्ति न पुनरूर्ध्वाधोलोकवर्तित्वेन । तिर्यग्लोकवर्त्यपि स जम्बूद्वीपवर्तित्वेनास्ति न पुनरपरद्वीपादिवर्तितया । सो ऽपि भरतवर्तित्वेनास्ति न पुनर्विदेहवर्तित्वादिना । भरते ऽपि स पाटलिपुत्रवर्तित्वेनास्ति न पुनरन्यस्थानीयत्वेन । पाटलिपुत्रे ऽपि देवदत्तगृहवर्तित्वेनास्ति न पुनरपरथा । गृहे ऽपि
10 गृहैकदेशस्थतयास्ति न पुनरन्यदेशादितया । गृहैकदेशे ऽपि यथेष्वाकाशप्रदेशेष्वस्ति तत्स्थिततयास्ति न पुनरन्यप्रदेशस्थतया । एवं यथासंभवमपरप्रकारेणापि वाच्यम् । तदेवं क्षेत्रतः स्वपर्यायाः स्तोकाः परपर्यायास्त्वसंख्येयाः, लोकस्यासंख्येयप्रदेशत्वेन । अथवा मनुष्यलोकस्थितस्य घटस्य तदपरस्थानस्थितद्रव्येभ्यो ऽनन्तेभ्यो
15 व्यावृत्तत्वेनानन्ताः परपर्यायाः । एवं देवदत्तगृहादिवर्तिनो ऽपि । ततः परपर्याया अनन्ताः ॥ कालतस्तु नित्यतया स द्रव्येणावर्तत वर्तते वर्तिष्यते ततो न कुतोऽपि व्यावर्तते । स चैदंयुगीनत्वेन विवक्ष्यमाणस्तद्रूपत्वेनास्ति न त्वतीतानागतादियुगवर्तित्वेन । अस्मिन् युगे ऽपि स ऐषमस्त्यवर्षतयास्ति न पुनरतीतादिवर्षत्वादिना । ऐषमस्त्यो ऽपि स वासन्तिकतयास्ति न पुनरन्यर्तुनिष्पन्न-
20 तया । तत्रापि नवत्वेन विद्यते न पुनः पुराणत्वेन । तत्राप्यद्यतनत्वेनास्ति न पुनरनद्यतनत्वेन । तत्रापि वर्तमानक्षणतयास्ति न

पुनरन्यत्रपतया। एवं कालतोऽसंख्येयाः स्वपर्याया एकस्य द्रव्यस्य, असंख्यकालस्थितिकत्वात्। अनन्तकालवर्तित्वविवक्षायां तु तेऽनन्ता अपि वाच्याः। परपर्यायास्तु विवक्षितकालादन्यकालवर्तिद्रव्येभ्यो अनन्तेभ्यो व्यावृत्तत्वेनानन्ता एव॥ भावतः पुनः। स पीतवर्णोऽस्ति न पुनर्नीलादिवर्णैः। पीतोऽपि सोऽपरपीतद्रव्यापेक्षयैकगुणपीतः। स एव च तदपरापेक्षया द्विगुणपीतः। स एव च तदन्यापेक्षया त्रिगुणपीतः। एवं तावदक्रव्यं यावत्कस्यापि पीतद्रव्यस्यापेक्षयानन्तगुणपीतः। तथा स एवापरापेक्षयैकगुणहीनः, तदन्यापेक्षया द्विगुणहीन इत्यादि तावदक्रव्यं यावत्कस्याप्यपेक्षयानन्तगुणहीनपीतत्वोऽपि स भवति। तदेवं पीतत्वेनानन्ताः स्वपर्याया लब्धाः। पीतवर्णवत्तरतमयोगेनानन्तभेदेभ्यो नीलादिवर्णेभ्यो व्यावृत्तिरूपाः परपर्याया अप्यनन्ताः। एवं रसतोऽपि स्वमधुरादिरसापेक्षया पीतत्ववत्स्वपर्याया अनन्ता ज्ञातव्याः, नीलादित्ववत् क्षारादिपररसापेक्षया परपर्याया अप्यनन्ता अवसेतव्याः। एवं सुरभिगन्धेनापि स्वपरपर्याया अनन्ता अवसातव्याः। एवं गुरुलघुमृदुखरशीतोष्णस्निग्धरूक्षस्पर्शग्राह्यकापेक्षयापि तरतमयोगेन प्रत्येकमनन्ताः स्वपरपर्याया अवगन्तव्याः, यत एकस्मिन्नप्यनन्तप्रदेशके स्कन्धेऽष्टावपि स्पर्शाः प्राप्यन्त इति सिद्धान्ते प्रोक्तानम्। तेनात्रापि कलशेऽष्टानामभिधानम्। अथवा सुवर्णद्रव्येऽप्यनन्तकालेन पञ्चापि वर्णा द्वावपि गन्धौ षडपि रसा अष्टावपि स्पर्शाश्च सर्वेऽपि तरतमयोगेनानन्तशो भवन्ति। तस्मादपरापरवर्णादिभ्यो

व्यावृत्तिश्च भवति । तदपेक्षयापि स्वपरधर्मा अनन्ता अव-
बोधव्याः । शब्दतश्च घटस्य नानादेशापेक्षया घटाद्यनेकशब्द-
वाच्यत्वेनानेके स्वधर्मा घटादितत्तच्छब्दानभिधेयेभ्यो ऽपर-
द्रव्येभ्यो व्यावृत्तत्वेनानन्ताः परधर्माः । अथवा तस्य घटस्य ये
5 ये स्वपरधर्मा उक्ता वक्ष्यन्ते च तेषां सर्वेषां वाचका यावन्तो
ध्वनयस्तावन्तः । संख्यातश्च घटस्य तत्तदपरापरद्रव्यापेक्षया
प्रथमत्वं द्वितीयत्वं तृतीयत्वं यावदनन्ततमत्वं स्यादित्यनन्ताः
स्वधर्माः, तत्संख्यानभिधेयेभ्यो व्यावृत्तत्वेनानन्ताः परधर्माः ।
अथवा परमाणुसंख्या पक्षादिसंख्या वा यावती तत्र घटे वर्तते,
10 सा स्वधर्मः, तत्संख्यारहितेभ्यो व्यावृतत्त्वेनानन्ताः परपर्यायाः ।
अनन्तकालेन तस्य घटस्य सर्वद्रव्यैः समं संयोगविभागभावेना-
नन्ताः स्वधर्माः, संयोगवियोगाविषयीकृतेभ्यो व्यावृत्तत्वानन्ताः
परधर्माश्च । परिमाणतश्च तत्तद्द्रव्यापेक्षया तस्याणुत्वं महत्त्वं
ह्रस्वत्वं दीर्घत्वं चानन्तभेदं स्यादित्यनन्ताः स्वधर्माः । ये सर्व-
15 द्रव्येभ्यो व्यावृत्त्या तस्य परपर्यायाः संभवन्ति ते सर्वे पृथक्त्वतो
ज्ञातव्याः । दिग्देशतः परत्वापरत्वाभ्यां तस्य घटस्यान्यान्यान-
न्तद्रव्यापेक्षयासन्नतासन्नतरतासन्नतमतादूरतादूरतरतादूरतमता
एकद्व्यसंख्यपर्यन्तयोजनैरासन्नता दूरता च भवतीति स्वपर्याया
अनन्ताः । अथवापरवस्त्वपेक्षया स पूर्वस्यां तदन्यापेक्षया
20 पश्चिमायां स इत्येवं दिशो विदिशश्चाश्रित्य दूरासन्नादितया-
संख्याः स्वपर्यायाः । कालतश्च परत्वापरत्वाभ्यां सर्वद्रव्येभ्यः
क्षणलवघटीदिनमासवर्षयुगादिभिर्घटस्य पूर्वत्वेन परत्वेन चान-

न्तभेदेनानन्ताः स्वधर्माः। आगमतो ऽपि घटस्य ग्राहकैः सर्व-
जीवानामनन्तैर्मत्यादिज्ञानैर्विभङ्गाद्यज्ञानैश्च स्पष्टास्पष्टस्वभाव-
भेदेन ग्रहणाद्ग्राह्यस्याप्यवश्यं स्वभावभेदः संभवी, अन्यथा
तद्ग्राहकाणामपि स्वभावभेदो न स्यात्तथा च तेषामैक्यं
भवेत्। ग्राह्यस्य स्वभावभेदे च ये स्वभावाः, ते स्वधर्माः। 5
सर्वजीवानामपेक्षयाल्पबहुबहुतराद्यनन्तभेदभिन्नसुखदुःखज्ञानो-
पादानोपेक्षागोचरेच्छापुण्यापुण्यकर्मबन्धचित्तादिसंस्कारक्रोधा-
भिमानमायालोभरागद्वेषमोहाद्युपाधिद्रव्यलुठनपतनादिवेगा-
दीनां कारणत्वेन सुखादीनामकारणत्वेन वा घटस्यानन्तधर्म-
त्वम्। स्नेहगुरुत्वे तु पुरापि स्पर्शभेदत्वेन प्रोक्ताने। कर्मतश्चोत्क्षे- 10
पणावक्षेपणाकुञ्चनप्रसारणभ्रमणस्यन्दनरेचनपूरणचलनकम्पनान्य-
स्थानप्रापणजलाहरणजलादिधारणादिक्रियाणां तत्तत्कालभेदेन
तरतमयोगेन वानन्तानां हेतुत्वेन घटस्यानन्ताः क्रियारूपाः
स्वधर्माः, तासां क्रियाणामहेतुभ्यो ऽन्येभ्यो व्यावृत्तत्वेनानन्ताः
परधर्माश्च। सामान्यतः पुनः प्रागुक्तनीत्यातीतादिकालेषु ये ये 15
विश्ववस्तूनामनन्ताः स्वपरपर्याया भवन्ति तेष्वेकद्विव्याद्य-
नन्तपर्यन्तधर्मैः सदृशस्य घटस्यानन्तभेदसादृश्यभावेनानन्ताः
स्वधर्माः। विशेषतश्च घटो ऽनन्तद्रव्येष्वपरापरापेक्षयैकेन द्वाभ्यां
त्रिभिर्वा यावदनन्तैर्वा धर्मैर्विलक्षण इत्यनन्तप्रकारवैलक्षण्यहेतुका
अनन्ताः स्वधर्माः, अनन्तद्रव्यापेक्षया च घटस्य स्थूलताल्पता- 20
समताविषमतासूक्ष्मताबादरतातीव्रताचाकचिक्यतासौम्यतापृथुता-
संकीर्णताक्षीणतोच्चताविशालमुखतादयः प्रत्येकमनन्तविधाः स्युः।

ततः सूक्ष्मतादिभेदैरप्यनन्ता धर्माः। संबन्धतश्चानन्तकालेष्वनन्तैः परैर्वस्तुभिः समं प्रस्तुतघटस्याधाराधेयभावो ऽनन्तविधो भवति। ततस्तदपेक्षयाप्यनन्ताः स्वधर्माः। एवं स्वस्वामित्वजन्यजनकत्वनिमित्तनैमित्तिकत्वषोढाकारकत्वप्रकाश्यप्रकाशकत्वभोज्यभोजकत्ववाह्यवाहकत्वाश्रयाश्रयिभाववध्यवधकत्वविरोध्यविरोधकत्वज्ञेयज्ञापकत्वादिसंख्यातीतसंबन्धैरपि प्रत्येकमनन्ता धर्मा ज्ञातव्याः। तथा ये ऽत्र घटस्य स्वपरपर्याया अनन्ता ऊचिरे, तेषामुत्पादा विनाशाः स्थितयश्च पुनःपुनर्भवनेनानन्तकालेष्वनन्ता अभूवन् भवन्ति भविष्यन्ति च। तदपेक्षयाप्यनन्ता धर्माः। एवं पीतवर्णादारभ्य भावतो ऽनन्ता धर्माः। तथा द्रव्यक्षेत्रादिप्रकारैर्ये स्वधर्माः परधर्माश्चाचचक्षिरे, तैरुभयैरपि युगपदादिष्टो घटो ऽवक्तव्यः स्यात्। यतः को ऽपि स शब्दो न विद्यते येन घटस्य स्वधर्माः परधर्माश्चोच्यमाना द्वये ऽपि युगपदुक्ता भवन्ति। शब्देनाभिधीयमानानां क्रमेणैव प्रतीतेः संकेतितो ऽपि शब्दः क्रमेणैव स्वपरधर्मान् प्रत्याययति। न तु युगपच्छतृशानचौ सदिति शतृशानचोः संकेतितसच्छब्दवत्। ततः प्रतिद्रव्यक्षेत्रादिप्रकारं घटस्यावक्तव्यतापि स्वधर्मः स्यात्तस्य चानन्तेभ्यो वक्तव्येभ्यो धर्मेभ्यो ऽन्यद्रव्येभ्यश्च व्यावृत्तत्वेनानन्ता अवक्तव्याः परधर्मा अपि भवन्ति। तदेवमनन्तधर्मात्मकत्वं यथा घटे दर्शितं, तथा सर्वस्मिन्नप्यात्मादिके वस्तुनि भावनीयम्। तथाप्यात्मनि तावच्चैतन्यं कर्तृत्वं भोक्तृत्वं प्रमातृत्वं प्रमेयत्वममूर्तत्वमसंख्यातप्रदेशत्वं निश्चिताष्टप्रदेशता लोकप्रमाणप्रदेशत्वं जीवत्वमभव्यत्वं भव्यत्वं

परिणामित्वं स्वशरीरव्यापित्वमित्यादयः सहभाविनो धर्माः
हर्षविषादौ सुखदुःखे मत्यादिज्ञानचक्षुर्दर्शनादिदर्शनोपयोगौ
देवनारकतिर्यङ्नरत्वानि शरीरादितया परिणमितसर्वपुद्गलत्व-
मनाद्यनन्तत्वं सर्वजीवैः सह सर्वसंबन्धवत्त्वं संसारित्वं क्रोधाद्य-
संख्याध्यवसायवत्त्वं हास्यादिषट्कं स्त्रीपुंनपुंसकत्वमूर्खत्वान्धत्वादी- 5
नीत्यादयः क्रमभाविनो धर्माः, मुक्तात्मनि तु सिद्धत्वं साद्य-
नन्तत्वं ज्ञानदर्शनसम्यक्त्वसुखवीर्याण्यनन्तद्रव्यक्षेत्रकालसर्वपर्याय-
ज्ञातृत्वदर्शित्वान्यशरीरत्वमजरामरत्वमरूपरसगन्धस्पर्शशब्दत्वानि
निष्कलत्वं नीरुक्त्वमक्षयत्वमव्याबाधत्वं प्राक्संसारावस्थानुभूत-
स्वस्वजीवधर्मास्त्वित्यादयः, धर्माधर्माकाशकालेष्वसंख्यानन्तप्रदेशत्वं 10
सर्वजीवपुद्गलानां गतिस्थित्यवगाहवर्तनोपग्राहकत्वं तत्तदवच्छे-
दकावच्छेद्यत्वमवस्थितत्वमनाद्यनन्तत्वमरूपित्वमगुरुलघुत्वैकस्कन्धत्वं
मत्यादिज्ञानविषयत्वं सत्त्वं द्रव्यत्वमित्यादयः, पौद्गलिकद्रव्येषु
घटदृष्टान्तोक्तरीत्या स्वपरपर्यायाः शब्देषु चोदात्तानुदात्त-
स्वरितविवृतसंवृतघोषवदघोषताल्पप्राणमहाप्राणताभिलाप्यान- 15
भिलाप्यार्थवाचकावाचकताक्षेत्रकालादिभेदहेतुकतत्तदनन्तार्थ-
प्रत्यायनशक्त्यादयः, आत्मादिषु च सर्वेषु नित्यानित्यसामान्य-
विशेषसदसदभिलाप्यानभिलाप्यत्वात्मकता परेभ्यश्च वस्तुभ्यो
व्यावृत्तिधर्मास्त्ववसेयाः। आह। ये स्वपर्यायास्ते तस्य संब-
न्धिनो भवन्तु, ये तु परपर्यायास्ते विभिन्नवस्त्वाश्रयत्वात्कथं 20
तस्य संबन्धिनो व्यपदिश्यन्ते। उच्यते। इह द्विधा संबन्धो
ऽस्तित्वेन नास्तित्वेन च। तत्र स्वपर्यायैरस्तित्वेन संबन्धः, यथा

घटस्य रूपादिभिः; परपर्यायैस्तु नास्तित्वेन संबन्धस्तेषां तथा-
संभवात्, यथा घटावस्थायां मृद्रूपतापर्यायेण। यत एव च ते
तस्य न सन्तीति नास्तित्वसंबन्धेन संबद्धाः, अत एव च ते पर-
पर्याया इति व्यपदिश्यन्ते। ननु ये यत्र न विद्यन्ते ते कथं
5 तस्येति व्यपदिश्यन्ते। न खलु। धनं दरिद्रस्य न विद्यत इति
तत्तस्य संबन्धि व्यपदेष्टुं न शक्यम्। मा प्रापल्लोकव्यवहारातिक्रमः।
तदेतन्महामोहमूढमनस्कतासूचकं, यतो यदि नास्तित्वसंबन्ध-
मधिकृत्य तस्येति न व्यपदिश्यन्ते, तर्हि सामान्यतस्ते परवस्तु-
ष्वपि न सन्तीति प्राप्तम्। तथा च ते स्वरूपेणापि न भवेयुर्न
10 चैतद्दृष्टमिष्टं वा। तस्मादवश्यं तेनास्तित्वसंबन्धमधिकृत्य तस्येति
व्यपदेश्याः। धनमपि च नास्तित्वसंबन्धमधिकृत्य दरिद्रस्येति
व्यपदिश्यत एव। तथा च लोके वक्तारो भवन्ति "धनमस्य
दरिद्रस्य न विद्यते" इति। यदपि चोक्तं "तत्तस्येति व्यवदेष्टुं
न शक्यं" इति, तत्रापि तदस्तित्वेन तस्येति व्यपदेष्टुं न शक्यं,
15 न पुनर्नास्तित्वेनापि। ततो न कश्चिल्लोकव्यवहारातिक्रमः।
ननु नास्तित्वमभावो ऽभावश्च तुच्छरूपस्तुच्छेन च सह कथं
संबन्धः, तुच्छस्य सकलशक्तिविकलतया संबन्धशक्तेरप्यभावात्।
अन्यच्च। यदि परपर्यायाणां तत्र नास्तित्वं, तर्हि नास्तित्वेन
सह संबन्धो भवतु, परपर्यायैस्तु सह कथं संबन्धः। न खलु
20 घटः पटाभावेन संबद्धः पटेनापि सह संबन्धो भवितुमर्हति,
तथाप्रतीतेरभावात्। तदेतदसमीचीनं, सम्यग्वस्तुतत्त्वापरिज्ञानात्।
तथाहि। नास्तित्वं नाम तेन तेन रूपेणाभवनमिष्यते तेन तेन

रूपेणाभवनं च वस्तुनो धर्मः। ततो नैकान्तेन तुच्छरूपमिति न तेन सह संबन्धाभावः। तेन तेन रूपेणाभवनं च तं तं पर्यायमपेक्ष्यैव भवति नान्यथा। तथाहि। यो यः पटादिगतः पर्यायः, तेन तेन रूपेण मया न भवितव्यमिति सामर्थ्याद्घटस्तं तं पर्यायमपेक्षत इति सुप्रतीतमेतत्। ततस्तेन तेन 5 पर्यायेणाभवनस्य तं तं पर्यायमपेक्ष्य संभवात्ते ऽपि परपर्यायास्तस्योपयोगिन इति तस्येति व्यपदिश्यन्ते। एवंरूपायां च विवक्षायां पटो ऽपि घटस्य संबन्धी भवत्येव, पटमपेक्ष्य घटे पटरूपेणाभवनस्य भावात्। तथा च लौकिका अपि घटपटादीन् परस्परमितरेतराभावमधिकृत्य संबद्धान्व्यवहरन्तीत्यविगीत- 10 तमेतत्। इतश्च ते पर्यायास्तस्येति व्यपदिश्यन्ते, स्वपर्यायविशेषणत्वेन तेषामुपयोगात्। इह ये यस्य स्वपर्यायविशेषकत्वेनोपयुज्यन्ते, ते तस्य पर्यायाः, यथा घटस्य रूपादयः पर्यायाः परस्परविशेषकाः। उपयुज्यन्ते च घटस्य पर्यायाणां विशेषकतया पटादिपर्यायाः, तानन्तरेण तेषां स्वपर्यायव्यपदेशाभा- 15 वात्। तथाहि। यदि ते परपर्याया न भवेयुः, तर्हि घटस्य स्वपर्यायाः स्वपर्याया इत्येवं न व्यपदिश्येरन्, परापेक्षया स्वव्यपदेशस्य सद्भावात्। ततः स्वपर्यायव्यपदेशकारणतया ते ऽपि परपर्यायास्तस्योपयोगिन इति तस्येति व्यपदिश्यन्ते। अपि च। सर्वं वस्तु प्रतिनियतस्वभावं, सा च प्रतिनियतस्वभावता प्रति- 20 योग्यभावात्मकतोपनिबन्धना। ततो यावन्न प्रतियोगिविज्ञानं भवति, तावन्नाधिकृतं वस्तु तदभावात्मकं तत्त्वतो ज्ञातुं शक्यते।

तथा च सति पटादिपर्यायाणामपि घटप्रतियोगित्वात्तदपरिज्ञाने घटो न याथात्म्येनावगन्तुं शक्यत इति पटादिपर्याया अपि घटस्य पर्यायाः। तथा चात्र प्रयोगः। यदनुपलब्धौ यस्यानुपलब्धिः स तस्य संबन्धी, यथा घटस्य रूपादयः। पटादिपर्यायानुपलब्धौ च घटस्य न याथात्म्येनोपलब्धिरिति ते तस्य संबन्धिनः। न चायमसिद्धो हेतुः, पटादिपर्यायरूपप्रतियोग्यपरिज्ञाने तदभावात्मकस्य घटस्य तत्त्वतो ज्ञातत्वायोगादिति। आह च भाष्यकृत्।

जेसु अनाएसु तओ न नज्जए नज्जए य नाएसु।
किह तस्स ते न धम्मा घडस्स रूवाइधम्म व्व॥

तस्मात्पटादिपर्याया अपि घटस्य संबन्धिन इति। परपर्यायाश्च स्वपर्यायेभ्यो ऽनन्तगुणाः। उभये तु स्वपरपर्यायाः सर्वद्रव्यपर्यायपरिमाणाः। न चैतदनार्षं यत उक्तमाचाराङ्गे। जे एगं जाणइ, से सव्वं जाणइ; जे सव्वं जाणइ, से एगं जाणइ। अस्यायमर्थः। य एकं वस्तूपलभते सर्वपर्यायैः, स नियमात्सर्वमुपलभते, सर्वोपलब्धिमन्तरेण विवक्षितस्यैकस्य स्वपरपर्यायभेदभिन्नतया सर्वात्मनावगन्तुमशक्यत्वात्। यश्च सर्वं सर्वात्मना साक्षादुपलभते स एकं स्वपरपर्यायभेदभिन्नं जानाति। अन्यत्राप्युक्तम्।

एको भावः सर्वथा येन दृष्टः
सर्वे भावाः सर्वथा तेन दृष्टाः।
सर्वे भावाः सर्वथा येन दृष्टाः

एको भावः सर्वथा तेन दृष्टः ॥ १ ॥

ततः सिद्धं प्रमेयमाद्‌नन्तधर्मात्मकत्वं सकलस्य वस्तुन इति ॥

अथ सूत्रकार एव प्रत्यक्षपरोक्षयोर्लक्षणं लक्षयति।

**अपरोक्षतयार्थस्य ग्राहकं ज्ञानमीदृशम्।**
**प्रत्यक्षमितरज्ज्ञेयं परोक्षं ग्रहणेक्षया ॥ ५६ ॥**  5

तत्र प्रत्यक्षमिति लक्ष्यनिर्देशः। अपरोक्षतयार्थस्य ग्राहकं ज्ञानमिति लक्षणनिर्देशः। परोक्षो ऽक्षगोचरातीतः, ततो ऽन्यो ऽपरोक्षस्तद्भावस्तत्ता तयापरोक्षतया साक्षात्कारितया, न पुनरस्पष्टसंदिग्धादितया, अर्थस्य आन्तरस्यात्मस्वरूपस्य बाह्यस्य च घटकटपटशकटलकुटादेर्वस्तुनो ग्राहकं व्यवसायात्मकतया साक्षा- 10 त्परिच्छेदकं ज्ञानम्। ईदृशं विशेषणस्य व्यवच्छेदकत्वादीदृशमेव प्रत्यक्षं न त्वन्यादृशम्। अपरोक्षतयेत्यनेन परोक्षलक्षणसंकीर्णतामध्यक्षस्य परिहरति। एतेन परिकल्पितानां कल्पनापोढत्वादीनां प्रत्यक्षलक्षणानां निरासः कृतो द्रष्टव्यः। ज्ञानवादिनो ऽवादिषुः। अहो आन्तरार्थस्यात्मस्वरूपस्य यद्ग्राहकं तत्प्रत्यक्ष- 15 मित्येव। अत्र व्याख्यायताम्। अर्थशब्देन बाह्यो ऽप्यर्थः कुतो व्याख्यातो बाह्यार्थस्यैवासत्त्वादित्याशङ्कायां "अर्थस्य ग्राहकं" इत्यत्रापि "ग्रहणेक्षया" इति वक्ष्यमाणं पदं संबन्धनीयं, बहिरर्थनिराकरणपरान् योगाचारादीनधिकृत्यैव "ग्रहणेक्षया" इति वक्ष्यमाणपदस्य योजनात्। ततो ऽयमर्थः। ग्रहणं ज्ञानात्पृथग् 20 बाह्यार्थस्य यत्संवेदनं तस्येक्षयापेक्षयार्थस्य यद्ग्राहकं तत्प्रत्यक्षम्। न चार्थस्य ग्राहकमित्येतावतैव बाह्यार्थापेक्षया यद्ग्राहकं तत्प-

त्यक्षमित्येतत्सिद्धमिति वाच्यं, यत आत्मस्वरूपस्यार्थस्य ग्राहक-
मित्येतावताप्यर्थस्य ग्राहकं भवत्येव। ततो ग्रहणेक्षयेत्यनेन ये
यौगाचारादयो बहिरर्थकलाकलनविकलं सकलमपि ज्ञानं
प्रलपन्ति तांन्निरस्यति। स्वांशग्रहणे ह्यन्तःसंवेदनं यथा व्याप्रि-
5 यते तथा बहिरर्थग्रहणे ऽपि, इतरथा बहिरर्थग्रहणाभावे सर्व-
प्रमातृणामेकसदृशो नीलादिप्रतिभासो नियतदेशतया न
स्यात्। अस्ति च स सर्वेषां नियतदेशतया। ततो ऽर्थो ऽस्तो-
त्यवसीयते। अथ चिद्रूपस्यैव तथा तथा प्रतिभासनान्न बहि-
रर्थग्रहणमिति चेत्, तर्हि बहिरर्थवत् स्वज्ञानसंतानादन्यानि
10 संतानान्तराण्यपि विशीर्येरन्। अथ संतानान्तरसाधकमनुमान-
मस्ति। तथाहि। विवक्षितदेवदत्तादेरन्यत्र यज्ञदत्तादौ
व्यापारव्याहारौ बुद्धिपूर्वकौ व्यापारव्याहारत्वात्, संप्रतिपन्न-
व्यापारव्याहारवदिति। संतानान्तरसाधकमनुमानं स्वस्मिन्
व्यापारव्याहारयोर्ज्ञानकार्यत्वेन प्रतिबन्धनिश्चयादिति चेत्। न,
15 एतस्यानुमानस्यार्थस्यैव स्वप्नदृष्टान्तेन भ्रान्ततापत्तेः। तथाहि।
सर्वे प्रत्यया निरालम्बनाः, प्रत्ययत्वात्, स्वप्नप्रत्ययवदिति।
तदभिप्रायेण यथा बहिरर्थग्रहणस्य निरालम्बनतया बाह्यार्था-
भावस्तथा संतानान्तरसाधनस्यापि निरालम्बनतया संतानान्तरा-
भावः स्यादिति। इतरच्चेयं परोक्षं प्रागुक्तात्प्रत्यक्षादितरदस्पष्ट-
20 तयार्थस्य स्वपरग्राहकं निर्णायकं परोक्षं ज्ञेयमवगन्तव्यम्।
परोक्षमप्येतत्स्वसंवेदनापेक्षया प्रत्यक्षमेव बहिरर्थापेक्षया तु
परोक्षव्यपदेशमश्नुत इति दर्शयन्नाह "ग्रहणेक्षया" इति।

इह ग्रहणं प्रस्तावादपरोक्षे बाह्यार्थे ज्ञानस्य प्रवर्तनमुच्यते न तु स्वस्य ग्रहणं, स्वग्रहणापेक्षया हि स्पष्टत्वेन सर्वेषामेव ज्ञानानां प्रत्यक्षतया व्यवच्छेद्याभावाद्विशेषणवैयर्थ्यं स्यात्। ततो ग्रहणस्य बहिःप्रवर्तनस्य या ईक्षापेक्षा, तया; बहिःप्रवृत्ति-पर्यालोचनयेति यावत्। तदयमत्रार्थः। परोक्षं यद्यपि स्व-संवेदनापेक्षया प्रत्यक्षं, तथापि लिङ्गशब्दादिद्वारेण बहिर्विष-यग्रहणे ऽसाक्षात्कारितया व्याप्रियत इति परोक्षमित्युच्यते॥

अथ प्रागुक्तामेव वस्तुनो ऽनन्तधर्मात्मकतां द्रढयन्नाह।

**येनोत्पादव्ययध्रौव्ययुक्तं यत्तत्सदिष्यते।**
**अनन्तधर्मकं वस्तु तेनोक्तं मानगोचरः॥ ५७॥**

येनेति शब्दो ऽग्रे व्याख्यास्यते, वाक्यस्य सावधारणत्वात्। यदेव वस्तूत्पादव्ययध्रौव्यैः समुदितैर्युक्तं, तदेव सदिष्यमानमि-ष्यते। उत्पत्तिविनाशस्थितियोग एव सतो वस्तुनो लक्षण-मित्यर्थः। ननु पूर्वमसतो भावस्योत्पादव्ययध्रौव्ययोगाद्यदि पश्चात्सत्त्वं, तर्हि शशशृङ्गादेरपि तद्योगात्सत्त्वं स्यात्। पूर्वं सतश्चेत्, तदा स्वरूपसत्त्वमायातं किमुत्पादादिभिः कल्पितैः। तथोत्पादव्ययध्रौव्याणामपि यद्यन्योत्पादादित्रययोगात्सत्त्वं, तदा-नवस्थाप्रसक्तिः। स्वतश्चेत्सत्त्वं, तदा भावस्यापि स्वत एव तद्भविष्यतीति व्यर्थमुत्पादादिकल्पनमिति चेत्। उच्यते। न हि भिन्नोत्पादव्ययध्रौव्ययोगाद्भावस्य सत्त्वमभ्युपगम्यते, किं तूत्पादव्ययध्रौव्ययोगात्मकमेव सदिति स्वीक्रियते। तथाहि।

उर्वीपर्वततर्वादिकं सर्वं वस्तु द्रव्यात्मना नोत्पद्यते विपद्यते वा, परिस्फुटान्वयदर्शनात् । लूनपुनर्जातनखादिष्वन्वयदर्शनेन व्यभिचार इति न वाच्यं, प्रमाणेन बाध्यमानस्यान्वयस्यापरिस्फुटत्वात् । न च प्रस्तुतो ऽन्वयः प्रमाणविरुद्धः, सत्यप्रत्यभि-
5 ज्ञानत्वात् सर्वव्यक्तिषु नियतं क्षणे क्षणे ऽन्यत्वमथ च न विशेषः, सत्योश्चित्यपचित्योराकृतिजातिव्यवस्थानादिति वचनात् । ततो द्रव्यात्मना सर्वस्य वस्तुनः स्थितिरेव, पर्यायात्मना तु सर्वं वस्तूत्पद्यते विपद्यते वा, अस्खलितपर्यायानुभवसद्भावात् । न चैवं शुक्ले शङ्खे पीतादिपर्यायानुभवेन व्यभिचारः,
10 तस्य स्खलद्रूपत्वात् । न खलु सो ऽस्खलद्रूपो येन पूर्वाकारविनाशे ऽजहद्वृत्तोत्तराकारोपादानाविनाभावी भवेत् । न च जीवादौ वस्तुनि हर्षामर्षौदासीन्यादिपर्यायानुभवः स्खलद्रूपः, कस्यचिद्बाधकस्याभावात् । ननूत्पादादयः परस्परं भिद्यन्ते न वा । यदि भिद्यन्ते कथमेकं त्र्यात्मकं, न भिद्यन्ते चेत् तथापि
15 कथमेकं त्र्यात्मकमिति चेत् । तदयुक्तं, कथंचिद्भिन्नलक्षणत्वेन तेषां कथंचिद्भेदाभ्युपगमात् । तथाहि । उत्पादविनाशध्रौव्याणि स्याद्भिन्नानि, भिन्नलक्षणत्वात्, रूपादिवत् । न च भिन्नलक्षणत्वमसिद्धं, असत आत्मलाभ उत्पादः, सतः सत्तावियोगो विनाशः, द्रव्यरूपतयानुवर्तनं ध्रौव्यमित्येवमसंकीर्णलक्षणानां
20 तेषां सर्वैः प्रतीतेः । न चामी परस्परानपेक्षत्वेन भिन्ना एव, परस्परानपेक्षाणां खपुष्पवदसत्त्वापत्तेः । तथाहि । उत्पादः केवलो नास्ति, स्थितिविगमरहितत्वात्, कूर्मरोमवत्; तथा

विनाशः केवलो नास्ति, स्थित्युत्पत्तिरहितत्वात्, तद्वत्; एवं स्थितिरपि केवला नास्ति, विनाशोत्पादशून्यत्वात्, तद्वदेवेत्य-न्योन्यापेक्षाणामुत्पादादीनां वस्तुनि सत्त्वं प्रतिपत्तव्यम्। तथा च कथं नैकं त्र्यात्मकम्। तथा चोक्तम्।

प्रध्वस्ते कलशे शुशोच तनया मौलौ समुत्पादिते 5
पुत्रः प्रीतिमुवाह कामपि नृपः शिश्राय मध्यस्थताम्।
पूर्वाकारपरिक्षयस्तदपराकारोदयस्तद्द्वया
धारश्चैक इति स्थितं त्रयमयं तत्त्वं तथाप्रत्ययात् ॥ १ ॥
घटमौलिसुवर्णार्थी नाशोत्पादस्थितिष्वलम्।
शोकप्रमोदमाध्यस्थ्यं जनो याति सहेतुकम् ॥ २ ॥ 10
पयोव्रतो न दध्यत्ति न पयोऽत्ति दधिव्रतः।
अगोरसव्रतो नोभे तस्माद्वस्तु त्रयात्मकम् ॥ ३ ॥

परो हि वादीदं प्रष्टव्यः। यदा घटो विनश्यति तदा किं देशेन विनश्यति आहोस्वित्सामस्त्येनेति। यदि देशेनेति पक्षः, तदा घटस्यैकदेश एव विनश्येत् न तु सर्वः, सर्वस्य च 15 विनष्टस्तदा प्रतीयते न पुनर्घटस्यैकदेशो भग्न इति प्रतीतिः कस्यापि स्यात्। अतो न देशेनेति पक्षः कक्षीकारार्हः। सामस्त्येन विनश्यतीति पक्षो ऽपि न। यदि हि सामस्त्येन घटो विनश्येत्, तदा घटे विनष्टे कपालानां मृद्रूपस्य च प्रतीतिर्न स्यात्, घटस्य सर्वात्मना विनष्टत्वात्। न च तदा 20 कपालानि मृद्रूपं च न प्रतीयन्ते, मार्दान्येतानि कपालानि न पुनः सौवर्णानीति प्रतीतेः। अतः सामस्त्येनेत्यपि पक्षो

न युक्तः। ततो बलादिदं प्रतिपत्तव्यं, घटो घटात्मना विनश्यति कपालात्मनोत्पद्यते मृद्द्रव्यात्मना तु ध्रुव इति। तथा घटो यदोत्पद्यते तदा किं देशेनोत्पद्यते सामस्त्येन वेत्यपि परः प्रष्टव्यो ऽस्ति। यदि देशेनेति वक्ष्यति, तदा 5 घटो देशेनैवोत्पन्नः प्रतीयेत न पुनः पूर्ण इति। प्रतीयते च घटः पूर्ण उत्पन्न इति। ततो देशेनेति पक्षो न क्षोदक्षमः। नापि सामस्त्येनेति पक्षः। यदि सामस्त्येनोत्पन्नः स्यात्, ततो मृदः प्रतीतिस्तदानीं न स्यात्; न च सा नास्ति, मार्दो ऽयं न पुनः सौवर्ण इत्येवमपि प्रतीतेः। ततो घटो यदोत्पद्यते 10 तदा स घटात्मनोत्पद्यते मृत्पिण्डात्मना विनश्यति मृदात्मना च ध्रुव इति बलादभ्युपगन्तव्यं स्यात्। यथा हि वस्तु सर्वैः प्रतीयते तथा चेन्नाभ्युपगम्यते, तदा सर्ववस्तुव्यवस्था कदापि न भवेत्। अतो यथा प्रतीत्यैव वस्तुस्थितिः। अत एव यद्वस्तु नष्टं तदेव नश्यति नंक्ष्यति च कथंचित्, यदुत्पन्नं तदे- 15 वोत्पद्यत उत्पत्स्यते च कथंचित्, यदेव स्थितं तदेव तिष्ठति स्थास्यति च कथंचित्। तथा यदेव केनचिद्रूपेण नष्टं तदेव केनचिद्रूपेणोत्पन्नं केनचिद्रूपेण स्थितं च, एवं यदेव नश्यति तदेवोत्पद्यते तिष्ठति च, यदेव नंक्ष्यति तदेवोत्पत्स्यते स्थास्यति चेत्यादि सर्वमुपपन्नं, अन्तर्बहिश्च सर्वस्य वस्तुनः सर्वदोत्पादा- 20 दित्रयात्मकस्यैवाबाधिताध्यक्षेणानुभूयमानत्वात्, अनुभूयमाने च वस्तुनः स्वरूपे विरोधासिद्धेः, अन्यथा वस्तुनो रूपरसादि- ष्वपि विरोधप्रसक्तेः। प्रयोगो ऽत्रायम्। सर्वं वस्तूत्पादव्यय-

ध्रौव्यात्मकं, सत्त्वात्। यदुत्पादव्ययध्रौव्यात्मकं न भवति
तत्सदपि न भवति, यथा खरविषाणम्। तथा चेदम्।
तस्मात्तथेति केवलव्यतिरेकानुमानम्। अनेन च सल्लक्षणेन
नैयायिकादिपरिकल्पितः सत्तायोगः सत्त्वं बौद्धाभिमतं चार्थ-
क्रियालक्षणं सत्त्वं द्वे अपि प्रतिक्षिप्ते द्रष्टव्ये। तन्निरासप्रकारस्तु 5
ग्रन्थान्तरादवसातव्यः॥

अथ येनेति शब्दो योज्यते। येन कारणेनोत्पादव्ययध्रौ-
व्ययुक्तं सदिष्यते, तेन कारणेन मानयोः प्रत्यक्षपरोक्षप्रमाण-
योर्गोचरो विषयः। अनन्तधर्माः स्वभावाः सत्त्वज्ञेयत्वप्रमेयत्व-
वस्तुत्वादयो यस्मिन्, तदनन्तधर्मकमनन्तपर्यायात्मकमनेका- 10
न्तात्मकमिति यावत्। वस्तु जीवाजीवाद्युक्तमभ्यधायि। अयं
भावः। यत एवोत्पादादित्रयात्मकं परमार्थसत्, तत एवान-
न्तधर्मात्मकं सर्वं वस्तु प्रमाणविषयः, अनन्तधर्मात्मकतायामे-
वोत्पादव्ययध्रौव्यात्मकताया उपपत्तेः, अन्यथा तदनुपपत्तेरिति।
अत्रानन्तधर्मात्मकत्वेवोत्पादव्ययध्रौव्यात्मकत्वं युक्तियुक्ततामनु- 15
भवतीति ज्ञापनार्थैव भूयोऽनन्तधर्मकपदप्रयोगो न पुनः
पाश्चात्त्यपद्योक्तेनानन्तधर्मकपदेनात्र पौनरुक्त्यमाशङ्कनीयमिति।
तथा च प्रयोगः। अनन्तधर्मात्मकं वस्तु, उत्पादव्ययध्रौ-
व्यात्मकत्वात्। यदनन्तधर्मात्मकं न भवति तदुत्पादव्यय-
ध्रौव्यात्मकमपि न भवति, यथा वियदिन्दीवरमिति व्यति- 20
रेक्यनुमानम्। अनन्तास्तु धर्मा यथैकस्मिन् वस्तुनि भवन्ति,
तथा प्रागेव दर्शितम्। धर्माश्चोत्पद्यन्ते व्ययन्ते च, धर्मी च

द्रव्यरूपतया सदा नित्यमवतिष्ठते । धर्माणां धर्मिणश्च कथं-
चिदनन्यत्वेन धर्मिणः सदासत्त्वे कालत्रयवर्तिधर्माणामपि
कथंचिच्छक्तिरूपतया सदासत्त्वं, अन्यथा धर्माणामसत्त्वे कथं-
चित्तदभिन्नस्य धर्मिणो ऽप्यसत्त्वप्रसङ्गात् । न च धर्मिणः
5 सकाशादेकान्तेन भिन्ना एवाभिन्ना वा धर्माः, तथानुपलब्धेः
कथंचित्तदभिन्नानामेव तेषां प्रतीतेश्च । न चोत्पद्यमानविप-
द्यमानतत्तद्धर्मसद्भावव्यतिरेकेणापरस्य धर्मिणो ऽसत्त्वमेवेति
वक्तव्यं, धर्माधारविरहितानां केवलधर्माणामनुपलब्धेः, एक-
धर्माधाराणामेव च तेषां प्रतीतेः, उत्पद्यमानविपद्यमानधर्मा-
10 णामनेकत्वे ऽप्येकस्य तत्तदनेकधर्मात्मकस्य द्रव्यरूपतया ध्रुवस्य
धर्मिणो ऽबाधिताध्यक्षगोचरस्यापह्नोतुमशक्यत्वात्, अबाधि-
ताध्यक्षगोचरस्यापि धर्मिणो ऽपह्नवे सकलधर्माणामपह्नव-
प्रसङ्गात् । तथा च सर्वव्यवहारोच्छेदप्रसक्तिरिति सिद्धमनन्त-
धर्मात्मकं वस्तु । प्रयोगश्चात्र । विवादास्पदं वस्त्वेकानेकनित्या-
15 नित्यसदसत्सामान्यविशेषाभिलाप्यानाभिलाप्यादिधर्मात्मकं,
तथैवास्खलत्प्रत्ययेन प्रतीयमानत्वात् । यद्यथैवास्खलत्प्रत्ययेन
प्रतीयमानं तत्तथैव प्रमाणगोचरतयाभ्युपगन्तव्यं, यथा घटो
घटरूपतया प्रतीयमानो घटतयैव प्रमाणगोचरो ऽभ्युपगम्यते न
तु पटतया । तथैवास्खलत्प्रत्ययेन प्रतीयमानं वस्तु । तस्मादेकाने-
20 काद्यात्मकं प्रमाणगोचरतयाभ्युपगन्तव्यम् । न चात्र स्वरूपा-
सिद्धो हेतुः, तथैवास्खलत्प्रत्ययेन प्रतीयमानत्वस्य सर्वत्र वस्तुनि
विद्यमानत्वात् । न हि द्रव्यपर्यायात्माभ्यामेकानेकात्मकस्य १

नित्यानित्यात्मकस्य च २ स्वरूपपररूपाभ्यां सदसदात्मकस्य ३ सजातीयेभ्यो विजातीयेभ्यश्चानुवृत्तव्यावृत्तरूपाभ्यां सामान्यविशेषात्मकस्य ४ स्वपरपर्यायाणां क्रमेणाभिलाप्यत्वेन युगपत्तेषामनभिलाप्यत्वेन चाभिलाप्यानभिलाप्यात्मकस्य ५ सर्वस्य पदार्थस्यास्खलत्प्रत्ययेन प्रतीयमानत्वं कस्यचिदसिद्धम्। तत एव न संदिग्धासिद्धो ऽपि, न खलु बाधकतया प्रतीयमानस्य वस्तुनः संदिग्धत्वं नाम। नापि विरुद्धः, विरुद्धार्थसंसाधकत्वाभावात्। न हि सांख्यसौगताभिमतद्रव्यैकान्तपर्यायैकान्तयोः काणादयौगाभ्युपगतपरस्परविविक्तद्रव्यपर्यायैकान्ते च तथैवास्खलत्प्रत्ययेन प्रतीयमानत्वमास्ते, येन विरुद्धः स्यात्। नापि पक्षस्य प्रत्यक्षादिबाधा, येन हेतोरकिंचित्करत्वं स्यात्। नापि दृष्टान्तस्य साध्यविकलता वा, न खलु घटस्यैकानेकादिधर्मात्मकत्वम्। तथैवास्खलत्प्रत्ययप्रतीयमानत्वं चासिद्धः, प्रागेव दर्शितत्वात्। तस्मादनवद्यं प्रयोगमुपश्रुत्य किमित्यनेकान्तो नानुमन्यते। ननु सत्त्वासत्त्वनित्यानित्याद्यनेकान्तो दुर्धरविरोधादिदोषविषमविषधरदष्टत्वेन कथं स्वप्राणान्धारयितुं धीरतां दधाति। तथाहि। यदेव वस्तु सत् तदेव कथमसत्, असच्चेत्, सत्कथमिति विरोधः सत्त्वासत्त्वयोः, परस्परपरिहारेण स्थितत्वात्, शीतोष्णस्पर्शवत्। यदि पुनः सत्त्वमसत्त्वात्मना असत्त्वं च सत्त्वात्मना व्यवस्थितं स्यात्, तदा सत्त्वासत्त्वयोरविशेषात्प्रतिनियतव्यवहारोच्छेदः स्यात्। एवं नित्यानित्यादिष्वपि वाच्यम् १। तथा सत्त्वासत्त्वात्मकत्वे वस्तुनो ऽभ्युपगम्यमाने यदिदं वस्तुसदित्यवधारणद्वारेण

निर्णीतेरभावात्संशयः २। तथा येनांशेन सत्त्वं तेन किं सत्त्वमेवाहोस्वित्तेनापि सत्त्वासत्त्वम्। यद्याद्यः पक्षः, तदा स्याद्वादहानिः। द्वितीये पुनः, येनांशेन सत्त्वं तेन किं सत्त्वमेवाहोस्वित्तेनापि सत्त्वासत्त्वमित्यनवस्था। तथा येनांशेन भेदः,
5 तेन किं भेद एवाथ तेनापि भेदाभेदः। आद्ये मतक्षितिः। द्वितीये पुनरनवस्था। एवं नित्यानित्यसामान्यविशेषादिष्वपि वाच्यम् ३। तथा सत्त्वस्यान्यदधिकरणमसत्त्वस्य चान्यदिति वैयधिकरण्यम् ४। तथा येन रूपेण सत्त्वं तेन सत्त्वमसत्त्वं च स्यादिति संकरः, युगपदुभयप्राप्तिः संकर इति वचनात् ५।
10 तथा येन रूपेण सत्त्वं तेनासत्त्वमपि स्यात् येन चासत्त्वं तेन सत्त्वमपि स्यादिति व्यतिकरः, परस्परविषयगमनं व्यतिकर इति वचनात् ६। तथा सर्वस्यानेकान्तात्मकत्वे ऽङ्गीक्रियमाणे जलादेरप्यनलादिरूपता, अनलादेरपि जलरूपता। ततश्च जलार्थ्यनलादावपि प्रवर्तेत, अनलार्थी च जलादावपीति; ततश्च
15 प्रतिनियतव्यवहारलोपः ७। तथा च प्रत्यक्षादिप्रमाणबाधः ८। ततश्च तादृशो वस्तुनो ऽसंभव एव ९। अत्रोच्यते। यदेव सत्तदेव सत्; तदेव कथमसदित्यादि यद्वादि वादिवृन्दवृन्दारकेण तदसमञ्जसमाभासमेव, विरोधस्य प्रतीयमानयोः सत्त्वासत्त्वयोरसंभवात्, तस्यानुपलम्भलक्षणत्वात्, वन्ध्यागर्भे स्तनंधयवत्।
20 न च स्वरूपादिना वस्तुनः सत्त्वे तदैव पररूपादिभिरसत्त्वस्यानुपलम्भो ऽस्ति येन सहानवस्थानलक्षणो विरोधः स्यात्, शीतोष्णवत्। परस्परपरिहारस्थितिलक्षणस्तु विरोध एकत्रा-

सफलादौ रूपरसयोरिव संभवतोरेव सदसत्त्वयोः स्यान्न पुनरसंभवतोः संभवदसंभवतोर्वा। एतेन वध्यघातकभावविरोधो ऽपि फणिनकुलयोर्बलवदबलवतोः प्रतीतः सत्त्वासत्त्वयोरशङ्कनीय एव, तयोः समानबलत्वात्, मयूराण्डरसे नानावर्णवत्। किं च। अयं विरोधः किं स्वरूपमात्रसद्भावकृतः १ उतैककाल संभवेन २ आहोस्विदेकद्रव्यायोगेन ३ किमेककालिकद्रव्याभावतः ४ उतैककालैकद्रव्यैकप्रदेशासंभवात् ५। तत्राद्यो न युक्तः, यतो न हि शीतस्पर्शो ऽनपेक्षितान्यनिमित्तः स्वात्मसद्भाव एवोष्णस्पर्शेन सह विरुध्यत उष्णस्पर्शो वेतरेण, अन्यथा त्रैलोक्ये ऽप्यभावः स्यादनयोरिति। नापि द्वितीयः, एकस्मिन्नपि काले पृथक् पृथग्द्वयोरप्युपलम्भात्। नापि तृतीयः, एकस्मिन्नपि लोहभाजने रात्रौ शीतस्पर्शो दिवा चोष्णस्पर्शः समुपलभ्यते। न च तत्र विरोधः। नापि तुरीयः, धूपकटच्छुकादौ द्वयोरप्युपलम्भात्। पञ्चमो ऽपि न घटते, यत एकस्मिन्नेव तप्तलोहभाजने स्पर्शापेक्षया यत्रैवोष्णत्वं तत्रैव प्रदेशे रूपापेक्षया शीतत्वम्। यदि हि रूपापेक्षयाप्युष्णत्वं स्यात्, तर्हि जननयनदहनप्रसङ्गः। नन्वेकस्य युगपदुभयरूपता कथं घटत इति चेत्। न, यतो यथैकस्यैव पुरुषस्यापेक्षावशाल्लघुत्वगुरुत्वबालत्ववृद्धत्वयुवत्वपुत्रत्वपितृत्वगुरुत्वशिष्यत्वादीनि परस्परविरुद्धान्यपि युगपदविरुद्धानि, तथा सत्त्वासत्त्वादीन्यपि। तस्मान्न सर्वथा भावानां विरोधो घटते कथंचिद्विरोधस्तु सर्वभावेषु तुल्यो न बाधकः १। तथा संशयो ऽपि न युक्तः,

सत्त्वासत्त्वयोः स्फुटरूपेणैव प्रतीयमानत्वात् । अदृढप्रतीतौ हि संशयः, यथा क्वचित्प्रदेशे स्थाणुपुरुषयोः । तथा यदुक्तं "अनवस्था" इति, तदप्यनुपासितगुरोर्वचः, यतः सत्त्वासत्त्वादयो वस्तुन एव धर्माः, न तु धर्माणां धर्माः, धर्माणां धर्मा न 5 भवन्तीति वचनात् । न चैवमेकान्ताभ्युपगमादनेकान्तहानिः, अनेकान्तस्य सम्यगेकान्ताविनाभावित्वात्, अन्यथानेकान्तस्यैवाघटनात्, नयार्पणादेकान्तस्य प्रमाणादनेकान्तस्यैवोपदेशात्, तथैव दृष्टेष्टाभ्यामविरुद्धस्य तस्य व्यवस्थितेः । किं च । प्रमाणार्पणया सत्त्वे ऽपि सत्त्वासत्त्वकल्पनापि भवतु । न च तत्र 10 कल्पनापि दोषः । ननूक्तमनवस्थेति चेत् । न, यतः साप्यनेकान्तस्य भूषणं न दूषणं, अमूलक्षतिकारित्वेन प्रत्युतानेकान्तस्योद्दीपकत्वात्, मूलक्षतिकारी ह्यनवस्था दूषणम् । यदुक्तम् ।

मूलक्षतिकरीमाहुरनवस्थां हि दूषणम् ।
15 वस्त्वानन्त्ये ऽप्यशक्तौ च नानवस्थापि वार्यते ॥ १ ॥

ततो यथा यथा सत्त्वे ऽपि सत्त्वासत्त्वकल्पना विधीयते, तथा तथानेकान्तस्यैवोद्दीपनं न मूलवस्तुक्षितिः । तथाहि । इह सर्वपदार्थानां स्वरूपेण सत्त्वं पररूपेण चासत्त्वम् । तत्र जीवस्य तावत्सामान्योपयोगः स्वरूपं, तस्य तल्लक्षणत्वात् । ततो ऽन्यो 20 ऽनुपयोगः पररूपम् । ताभ्यां सदसत्त्वे प्रतीयेते । तदुपयोगस्यापि विशेषतो ज्ञानस्य स्वार्थाकारव्यवसायः स्वरूपं दर्शनस्याकारग्रहणं स्वरूपं तद्विपरीतं तु पररूपम् । ततस्ताभ्यां

तत्रापि सत्त्वासत्त्वम्। तथा पुनर्ज्ञानस्यापि परोक्षस्यावैशद्यं प्रत्यक्षस्य वैशद्यं स्वरूपं, दर्शनस्यापि चक्षुरचक्षुर्निमित्तं चक्षुराद्यालोचनं स्वरूपं, अवधिदर्शनस्याप्यवध्यालोचनं स्वरूपं, अन्यच्च पररूपम्। ततस्ताभ्यां तत्रापि सत्त्वासत्त्वे परोक्षस्यापि मतिज्ञानस्येन्द्रियानिन्द्रियनिमित्तं स्वार्थाकारग्रहणं स्वरूपं, 5
अतीन्द्रियमात्रनिमित्तं श्रुतस्य स्वरूपं प्रत्यक्षस्यापि विकलस्यावधिमनःपर्यायरूपस्य मनो ऽक्षानपेक्षं स्पष्टार्थग्रहणं स्वरूपं सकलप्रत्यक्षस्य सर्वद्रव्यपर्यायसाक्षात्करणं स्वरूपं, ततो ऽन्यत्पररूपम्। ताभ्यां पुनरपि तत्रापि सदसत्त्वे प्रतिपत्तव्ये। एवमुत्तरोत्तरविशेषाणामपि स्वपररूपे तद्वेदिभिरभ्यूह्ये, 10
तद्विशेषप्रतिविशेषाणामनन्तत्वात्। एवं घटपटादिपदार्थानामपि स्वपररूपप्ररूपणा कार्या, तदपेक्षया च सत्त्वासत्त्वे प्रतिपाद्ये। एवं च वस्तुनः सत्त्वे ऽपि सत्त्वासत्त्वकल्पनायामनेकान्तोद्दीपनमेव, न पुनः क्वापि क्षितिरिति। ननु सत्त्वे ऽपि सत्त्वान्तरकल्पने "धर्माणां धर्मा न भवन्ति" इति वचो 15
विरुध्यते। मैवं वोचः। अद्याप्यनभिज्ञो भवान् स्याद्वादामृतरहस्यानां, यतः स्वधर्म्यपेक्षया यो धर्मः सत्त्वादिः स एव स्वधर्मान्तरापेक्षया धर्मी, एवमेवानेकान्तात्मकव्यवस्थोपपत्तेः। ततः सत्त्वे ऽपि सत्त्वान्तरकल्पनायां सत्त्वस्य धर्मित्वं सत्त्वान्तरस्य च धर्मत्वमिति धर्मिण एव धर्मत्वमिति धर्मिण 20
एव धर्माभ्युपगमाच्च पूर्वोक्तदोषावकाशः। न चैवं धर्मस्यापि धर्मान्तरापेक्षया धर्मित्वप्राप्त्यानवस्था, अनाद्यनन्तत्वा-

द्रुमधर्मिव्यवहारस्य, दिवसरात्रिप्रवाहवत्, बीजाङ्कुरपौर्वा-
पर्यवत्, अभव्यसंसारवद्वा । एवं नित्यानित्यभेदाभेदादिष्वपि
वाच्यम् ३ । तथा वैयधिकरण्यमप्यसत्, निर्बाधकाध्यक्षबुद्धौ
सत्त्वासत्त्वयोरेकाधिकरणत्वेन प्रतिभासनात् । न खलु तथा-
5 प्रतिभासमानयोर्वैयधिकरण्यं, एकत्र फले रूपरसयोरपि
तत्प्रसङ्गात् ४ । संकरव्यतिकरावपि मेचकज्ञानदृष्टान्तेन
निरसनीयौ । यथा मेचकज्ञानमेकमप्यनेकस्वभावं, न च तत्र
संकरव्यतिकरौ, एवमत्रापि । किं च । यथानामिकाया
युगपन्मध्यमाकनिष्ठिकासंयोगे ह्रस्वदीर्घत्वे न च तत्र
संकरादिदोषः, एवमत्रापि ६ । तथा यदप्यवादि "जला-
10 देरप्यनलादिरूपता" इत्यादि, तदपि महामोहप्रमादि-
प्रलपितप्रायं, यतो जलादेः स्वरूपापेक्षया जलादिरूपता
न पररूपापेक्षया । न ततो जलार्थिनामनलादौ प्रवृत्तिप्र-
सङ्गः, स्वपरपर्यायात्मकत्वेन सर्वस्य सर्वात्मकत्वाभ्युपगमात्,
अन्यथा वस्तुस्वरूपस्यैवाघटमानत्वात् । किं च । भूतभविष्यद्वृत्या
15 जलपरमाणूनामपि भूतभाविवह्निपरिमाणापेक्षया वह्निरूप-
ताप्यस्त्येव । तथा तप्तोदके कथंचिद्वह्निरूपतापि जलस्याङ्गी-
क्रियत एव ७ । प्रत्यक्षादिबुद्धौ प्रतिभासमानयोः सत्त्वा-
सत्त्वयोः का नाम प्रमाणबाधा । न हि दृष्टे ऽनुपपन्नं नाम,
20 अन्यथा सर्वत्रापि तत्प्रसङ्गः ८ । प्रमाणप्रसिद्धस्य च नाभावः
कल्पयितुं शक्यः, अतिप्रसङ्गात्, प्रमाणादिव्यवहारविलोपश्च
स्यादिति ९ । एतेन यदप्युच्यते "अनेकान्ते प्रमाणमप्यप्रमाणं

सर्वज्ञो ऽप्यसर्वज्ञः सिद्धो ऽप्यसिद्धः" इत्यादि, तदप्यवरगुण-
निकामात्रमेव, यतः प्रमाणमपि स्वविषये प्रमाणं परविषये
चाप्रमाणमिति स्याद्वादिभिर्मन्यत एव। सर्वज्ञो ऽपि स्वकेव-
लज्ञानापेक्षया सर्वज्ञः सांसारिकजीवज्ञानापेक्षया त्वसर्वज्ञः।
यदि तदपेक्षयापि सर्वज्ञः स्यात्, तदा सर्वजीवानां सर्वज्ञत्व- 5
प्रसङ्गः सर्वज्ञत्वस्यापि च्छाद्मस्थिकज्ञानित्वप्रसङ्गो वा। सिद्धो
ऽपि स्वकर्मपरमाणुसंयोगक्षयापेक्षया सिद्धः परजीवकर्मसंयो-
गापेक्षया त्वसिद्धः। यदि तदपेक्षयापि सिद्धः स्यात्, तदा
सर्वजीवानां सिद्धत्वप्रसक्तिः स्यात्। एवं "कृतमपि न कृतं,
उक्तमप्यनुक्तं, भुक्तमप्यभुक्तं" इत्यादि सर्वं यदुच्यते परैः, 10
तदपि निरस्तमवसेयम्। ननु सिद्धानां कर्मक्षयः किमेका-
न्तेन कथंचिद्वा। आद्ये ऽनेकान्तहानिः। द्वितीये सिद्धा-
नामपि सर्वथा कर्मक्षयाभावादसिद्धत्वप्रसङ्गः, संसारिजीवव-
दिति। अत्रोच्यते। सिद्धैरपि स्वकर्मणां क्षयः स्थित्यनुभा-
गप्रकृतिरूपापेक्षया चक्रे न परमाण्वपेक्षया। न ह्यणूनां क्षयः 15
केनापि कर्तुं पार्यते, अन्यथा मुद्गरादिभिर्घटादीनां पर-
माणुविनाशे कियता कालेन सर्ववस्त्वभावप्रसङ्गः स्यात्।
ततस्तत्राप्यनेकान्त एवेति सिद्धं दृष्टेष्टाविरुद्धमनेकान्त-
शासनम्॥

एते हि बौद्धादयः स्वयं स्याद्वादवादं युक्त्याभ्युपगच्छन्तो 20
ऽपि तं वचनैरेव निराकुर्वन्तो नूनं कुलीनताभिमानिनो
मानवस्य स्वजननीमाजन्मतो ऽप्यसतीमाचक्षाणस्य तूष्णमनुकु-

र्वन्ति । तथाहि । प्रथमतः सौगताभ्युपगतो ऽनेकान्तः प्रका-
श्यते । दर्शनेन क्षणिकाक्षणिकत्वसाधारणस्यार्थस्य विषयीकर-
णात्कुतश्चिद्भ्रमनिमित्तादक्षणिकत्वारोपे ऽपि न दर्शनमक्षणि-
कत्वे प्रमाणं, किं तु प्रत्युताप्रमाणं, विपरीताध्यवसायाक्रान्त-
5 त्वात् । क्षणिकत्वे ऽपि न तत्प्रमाणं, अनुरूपाध्यवसायाजन-
नात्, नीलरूपे तु तथाविधनिश्चयकरणात्प्रमाणमित्येवंवादिनां
बौद्धानामेकस्यैव दर्शनस्य क्षणिकत्वाक्षणिकत्वयोरप्रामाण्यं,
नीलादौ तु प्रामाण्यं प्रसक्तमित्यनेकान्तवादाभ्युपगमो बला-
दापतति । १ । तथा दर्शनोत्तरकालभाविनः स्वाकाराध्यवसा-
10 यिन एकस्यैव विकल्पस्य बाह्ये ऽर्थे सविकल्पकत्वमात्मस्वरूपे तु
सर्वचित्तचैत्तानामात्मसंवेदनं प्रत्यक्षमिति वचनान्निर्विकल्पकत्वं
च रूपद्वयमभ्युपगतवतां तेषां कथं नानेकान्तवादापत्तिः २ ।
तथाहिंसाविरतिदानादिचित्तं यदेव स्वसंवेदनगतेषु सत्त्वबो-
धरूपत्वसुखादिषु प्रमाणं, तदेव क्षणक्षयित्वस्वर्गप्रापणशक्तियु-
15 क्तत्वादिष्वप्रमाणमित्यनेकान्त एव ३ । तथा यद्वस्तु नीलचतु-
रस्रोर्ध्वतादिरूपतया प्रमेयं, तदेव मध्यभागक्षणविवर्तादिनाप्र-
मेयमिति कथं नानेकान्तः ४ । तथा सविकल्पकं स्वप्नादिद-
र्शनं वा यद्बहिरर्थापेक्षया भ्रान्तं ज्ञानं, तदेव स्वस्वरूपापेक्षया-
भ्रान्तमिति बौद्धाः प्रतिपन्नाः ५ । तथा यन्निर्गोथिनीनाथ-
20 द्वयादिकं द्वित्वे ऽलीकं, तदपि धवलताभियतदेशचारितादौ
ते ऽनलीकं प्रतिपद्यन्ते ६ । कथं च भ्रान्तज्ञानं भ्रान्तिरूपत-
यात्मानमसंविदत् ज्ञानरूपतया चावगच्छत् स्वात्मनि भावद्वयं

विरुद्धं न साधयेत् ७। तथा पूर्वोत्तरक्षणापेक्षयैकस्यैव क्षणस्य जन्यत्वं जनकत्वं चाभ्युपागमन् ८। तथार्थाकारमेव ज्ञानमर्थस्य ग्राहकं नान्यथेति मन्यमानाश्चित्रपटग्राहकं ज्ञानमेकमप्यनेकाकारं संप्रतिपन्नाः ९। तथा सुगतज्ञानं सर्वार्थविषयं सर्वार्थाकारं चित्रं कथं न भवेत् १०। तथैकस्यैव हेतोः पक्षधर्मसपक्षसत्त्वाभ्यामन्वयं विपक्षे ऽविद्यमानत्वाद्व्यतिरेकं चान्वयविरुद्धं ते तात्त्विकमूरीचक्रिरे ११। एवं वैभाषिकादिसौगताः स्वयं स्याद्वादं स्वीकृत्यापि तत्र विरोधमुद्भावयन्तः स्वग्रासनानुरागान्धकारसंभारविलुप्तविवेकदृशो त्रिवेकिनामपकर्णनीया एव भवन्ति। किं च। सौत्रान्तिकमत एकमेव कारणमपरापरसामग्र्यन्तःपातितयानेककार्याकार्थी विद्यते, यथा रूपरसगन्धादिसामग्रीगतं रूपमुपादानभावेन स्वोत्तरं रूपक्षणं जनयति रसादिक्षणांश्च सहकारितया, तदेव च रूपं रूपालोकमनस्कारचक्षुरादिसामग्र्यन्तरगतं सत्पुरुषस्य ज्ञानं सहकारितया जनयति। आलोकाद्युत्तरक्षणांश्च तदेवमेकं कारणमनेकानि कार्याणि युगपत्कुर्वाणं किमेकेन स्वभावेन कुर्यात्, नानास्वभावैर्वा। यद्येकेन स्वभावेन, तर्ह्येकस्वभावेन कृतकत्वात्कार्याणां भेदो न स्यात्। अथवा नित्यो ऽपि पदार्थ एकेन स्वभावेन नानाकार्याणि कुर्वाणः कस्मान्निषिध्यते। अथ नित्यस्यैकस्वभावत्वेन नानाकार्यकरणं न घटते, तर्ह्यनित्यस्यापि तेषां करणं कथमस्तु, निरंशैकस्वभावत्वात्। सहकारिभेदाच्चेत्कुरुते, तर्हि नित्यस्यापि सहकारिभेदात्तदस्तु। अथ नानास्वभावैर-

नित्यः कुर्यादिति चेत्, नित्यस्यापि तथा तत्करणमस्तु । अथ नित्यस्य नानास्वभावा न संभवन्ति, कूटस्थनित्यस्यैकस्वभावात्, तर्ह्यनित्यस्यापि नानास्वभावा न सन्ति, निरंशैकस्वभावत्वात् । तदेवं नित्यस्यानित्यस्य च समानदोषत्वान्नित्यानित्योभयात्म-
5 कमेव वस्तु मानितं वरम् । तथा चैकान्तनित्यानित्यपक्षसंभवं दोषजालं सर्वं परिहृतं भवतीति १२ ॥ ज्ञानवादिनो ऽपि ताथागताः स्वार्थाकारयोरभिन्नमेकं संवेदनं संवेदनाच्च भिन्नौ ग्राह्यग्राहकाकारौ स्वयमनुभवन्तः कथं स्याद्वादं निरस्येयुः १ । तथा संवेदनस्य ग्राह्यग्राहकाकारविकलता स्वप्ने ऽपि भवद्भि-
10 र्नानुभूयते, तस्या अनुभवे वा सकलासुमतामधुनैव मुक्तता-पत्तेः, तत्त्वज्ञानोत्पत्तिर्मुक्तिरिति वचनात् । अनुभूयते च संवेदनं संवेदनरूपतया कथंचित् । तत एकस्यापि संवेदनस्या-नुभूतानुभूततयानेकान्तप्रतिभासो दुःशको ऽपह्नोतुमिति २ । तथा सर्वस्य ज्ञानं स्वसंवेदनेन ग्राह्यग्राहकाकारशून्यतयात्मान-
15 मसंविदत्, संविद्रूपतां चानुभवद्विकल्पेतरात्मकं सदेकान्तवा-दस्य प्रतिक्षेपकमेव भवेत् ३ । तथा ग्राह्याकारस्यापि युगपदने-कार्थावभासिनश्चित्रैकरूपता प्रतिक्षिपत्येवैकान्तवादमिति ४ ॥

नैयायिकवैशेषिकैश्च यथा स्याद्वादो ऽभ्युपजग्मे तथा प्रदर्श्यते । इन्द्रियसंनिकर्षादेर्धूमज्ञानं जायते । तस्माच्चाग्नि-
20 ज्ञानम् । अत्रेन्द्रियसंनिकर्षादिः । प्रत्यक्षं प्रमाणं, तत्फलं धूमज्ञानं, धूमज्ञानं चाग्निज्ञानापेक्षयानुमानं प्रमाणम् । अग्नि-ज्ञानं तदनुमानफलम् । तदेवं धूमज्ञानस्य प्रत्यक्षफलतामनुमान-

प्रमाणतां चोभयरूपतामभ्युपगच्छन्ति । एवमन्यत्रापि ज्ञाने फलता प्रमाणता च पूर्वोत्तरापेक्षया यथार्हमवगन्तव्या १ । एकमेव चित्रपटादेरवयविनो रूपं विचित्राकारमभ्युपयन्ति । न च विरोधमाचक्षते । तदुक्तं कन्दल्याम् । विरोधादेकमनेकस्वभावमयुक्तमिति चेन्न । तथा च प्रावादुकप्रवादः । 5

एकं चेत्तत्कथं चित्रं चित्रं चेदेकता कुतः ।
एकं चैव तु चित्रं चेत्येतच्चित्रतरं मतम् ॥ १ ॥

इति को विरोध इत्यादि । चित्रात्मनो रूपस्य नायुक्तता, विचित्रकारणसामर्थ्यभाविनस्तस्य सर्वलोकप्रसिद्धेन प्रत्यक्षेणैवोपपादितत्वादित्यादि २ । एकस्यैव धूपकटच्छुकस्यैकस्मिन् भागे शीतस्पर्शः 10 परस्मिंश्च भाग उष्णस्पर्शः । अवयवानां भिन्नत्वे ऽप्यवयविन एकत्वादेकस्यैव द्वौ विरुद्धौ तौ स्पर्शौ, यतस्तेषामेवं सिद्धान्तः "एकस्यैव पटादेश्चलाचलरक्तारक्तावृतानावृताद्यनेकविरुद्धधर्मोपलम्भे ऽपि दुर्लभो विरोधगन्धः" इति ३ । नित्यस्येश्वरस्य सिसृक्षा संजिहीर्षा च रजस्तमोगुणात्मकौ स्वभावौ चितिज- 15 त्वाद्यष्टमूर्तिता च सात्त्विकस्वभावाः परस्परं विरुद्धाः ४ । एकस्यामलकस्य कुवलबिल्वाद्यपेक्षया महत्त्वमणुत्वं च विरुद्धे ५ । एवमिषोः समिदंशापेक्षया ह्रस्वत्वदीर्घत्वे अपि ६ । देवदत्तादेः स्वपितृसुतापेक्षया परत्वापरत्वे अपि ७ । अपरं सामान्यं नाम्ना सामान्यविशेष इत्युच्यते । सामान्यविशेषश्च द्रव्यत्वगुणत्वकर्मत्व- 20 लक्षणः । द्रव्यत्वं हि नवसु द्रव्येषु वर्तमानत्वात्सामान्यं, गुणकर्मभ्यो व्यावृत्तत्वाद्विशेषः । एवं गुणत्वकर्मत्वयोरपि सामान्यवि-

शेषता विभाव्या। ततश्च सामान्यं च तद्विशेषश्चेति सामान्यविशेषः। तस्यैकस्य सामान्यता विशेषता च विरुद्धे ८। एकस्यैव हेतोः पञ्च रूपाणि संप्रतिपद्यन्ते ९। एकस्यैव पृथिवीपरमाणोः सत्तायोगात्सत्त्वं, द्रव्यत्वयोगाद्द्रव्यत्वं, पृथिवीत्वयोगा-
5 त्पृथिवीत्वं परमाणुत्वयोगात्परमाणुत्वं, अन्त्यादिशेषात्परमाणुभ्यो भिन्नत्वं चेच्छतां परमाणोस्तस्य सामान्यविशेषात्मकता बलादापतति, सत्त्वादीनां परमाणुतो भिन्नतायां तस्यासत्त्वाद्द्रव्यत्वापृथिवीत्वाद्यापत्तेः १०। एवं देवदत्तात्मनः सत्त्वं द्रव्यत्वमात्मत्वयोगादात्मत्वमन्त्यादिशेषाद्यज्ञदत्ताद्यात्मभ्यो भिन्नतां चेच्छतां
10 तस्यात्मनः सामान्यविशेषरूपतावश्यं स्यात्। एवमाकाशादिष्वपि सा भाव्या ११। योगिनां नित्येषु तुल्याकृतिगुणक्रियेषु परमाणुषु मुक्तात्मनःसु च प्रत्याधारं विलक्षणो ऽयमिति प्रत्ययो येभ्यो भवति ते ऽन्त्या विशेषा इत्यत्र तुल्याकृतिगुणक्रियात्वं विलक्षणत्वं चोभयं प्रत्याधारमुच्यमानं स्याद्वादमेव साधयेत्
15 १२। एवं नैयायिकवैशेषिका आत्मनानेकान्तमुररीकृत्यापि तत्प्रतिक्षेपायोद्यच्छन्तः सतां कथं नोपहास्यतां यान्ति। किंच। अनेकान्ताभ्युपगमे सत्येव गुणः परस्परविभक्तेष्ववयवावयव्यादिषु मिथोवर्तनचिन्तायां यद्दूषणजालमुपनिपतति तदपि परिहृतं भवति। तथाहि। अवयवानामवयविनश्च मिथो
20 ऽत्यन्तं भेदो ऽभ्युपगम्यते नैयायिकादिभिर्न पुनः कथंचित्। ततः पर्यनुयोगमर्हन्ति। अवयवेष्ववयवी वर्तमानः किमेकदेशेन वर्तते किं वा सामस्त्येन। यद्येकदेशेन, तदयुक्तं, अवय

विनो निरवयवत्वाभ्युपगमात् । सावयवत्वे ऽपि तेभ्यो ऽवयवी
यद्यभिन्नः, ततो ऽनेकान्तापत्तिः, एकस्य निरंशस्यानेकावयव-
त्वप्राप्तेः । अथ तेभ्यो भिन्नो ऽवयवी, तर्हि तेषु स कथं वर्तत
इति वाच्यम् । एकदेशेन सामस्त्येन वा । एकदेशपक्षे पुनस्त-
देवावर्तत इत्यनवस्था । अथ सामस्त्येन तेषु स वर्तते; तदप्य- 5
साधीयः प्रत्यवयवमवयविनः परिसमाप्ततयावयविबहुत्वप्रसङ्गात्।
ततश्च तेभ्यो भिन्नो ऽवयवी न विकल्पभाग्भवति। नन्वभेदपक्षे
ऽप्यवयविमात्रमवयवमात्रं वा स्यादिति चेत् । न, अभेदस्याप्ये-
कान्तेनानभ्युपगमात् । किं तर्ह्यन्योन्याविश्लिष्टस्वरूपो विवक्षया
संदर्शनीयभेदो ऽवयवेष्ववयव्यभ्युपगम्यते, अबाधितप्रतिभासेषु 10
सर्वत्रावयवावयविनां मिथो भिन्ना भिन्नतया प्रतिभासनात्,
अन्यथा प्रतिभाससमानानामन्यथापरिकल्पने ब्रह्माद्वैतशून्यतावा-
दादेरपि कल्पनाप्रसङ्गात् । एवं संयोगिषु संयोगः समवायिषु
समवायो गुणिषु गुणो व्यक्तिषु सामान्यं चात्यन्तं भिन्नान्य-
भ्युपगम्यमानानि तेषु वर्तनचिन्तायां सामस्त्यैकदेशविकल्पाभ्यां 15
दूषणीयानि । तदेवमेकान्तभेदे ऽनेकदूषणोपनिपातादनेकान्ते
च दूषणानुत्थानादनेकान्ताभ्युपगमाच्च मोक्ष इति। अतो वर-
मादावेव मत्सरितां विहायानेकान्तो ऽभ्युपगतः किं भेदैकान्त-
कल्पनया अस्थान एवात्मना परिक्लेशितेनेति ॥

सांख्यः सत्त्वरजस्तमोभिरन्योन्यं विरुद्धैर्गुणैर्घटितं प्रधानम- 20
भिदधान एकस्याः प्रकृतेः संसारावस्थामोक्षसमययोः प्रवर्तन-
निवर्तनधर्मौ विरुद्धौ स्वीकुर्वाणश्च कथं स्वस्यानेकान्तमतवैमु-
ख्यमाख्यातुमीशः स्यात् ॥

मीमांसकास्तु स्वयमेव प्रकारान्तरेणैकानेकाद्यनेकान्तं प्रतिपद्यमानास्तत्प्रतिपत्तये सर्वथा पर्यनुयोगं नार्हन्ति। अथवा शब्दस्य तत्संबन्धस्य च नित्यत्वैकान्तं प्रति ते ऽप्येवं पर्यनुयोज्याः। त्रिकालशून्यकार्यरूपार्थविषयविज्ञानोत्पादिका चोद-
5 नेति मीमांसकाभ्युपगमः। अत्र कार्यतायास्त्रिकालशून्यत्वे ऽभावप्रमाणस्य विषयता स्यात्, अर्थत्वे तु प्रत्यक्षादिविषयता भवेत्, उभयरूपतायां पुनर्नोदनाया विषयतेति॥

अथ बौद्धादिसर्वदर्शनाभीष्टा दृष्टान्तायुक्तयस्त्वनेकान्तसिद्धये समाख्यायन्ते। बौद्धादिसर्वदर्शनानि संशयज्ञानमेकमुल्ले-
10 खद्वयात्मकं प्रतिजानानि नानेकान्तं प्रतिक्षिपन्ति १। तथा स्वपक्षसाधकं परपक्षोच्छेदकं च विरुद्धधर्माध्यस्तमनुमानं मन्यमानाः परे ऽनेकान्तं कथं पराकुर्युः २। मयूराण्डरसे नीलादयः सर्वे ऽपि वर्णा नैकरूपा नाप्यनेकरूपाः, किं त्वेकानेकरूपा यथावस्थिताः, तथैकानेकाद्यनेकान्तो ऽपि। तदुक्तं
15 नामस्थापनाद्यनेकान्तमाश्रित्य।

मयूराण्डरसे यद्वद्वर्णा नीलादयः स्थिताः। अ।
सर्वे ऽप्यन्योन्यसंमिश्रास्तद्वन्नामादयो घटे॥१॥
नान्वयः स हि भेदित्वान्न भेदो ऽन्वयवृत्तितः।
मृद्भेदद्वयसंसर्गवृत्ति जात्यन्तरं घटः॥२॥
20 अथ हिशब्दो हेतौ यस्मादर्थे; स घटः।
भागे सिंहो नरो भागे योऽर्थो भागद्वयात्मकः।
तमभागं विभागेन नरसिंहं प्रचक्षते॥३॥

न नरः सिंहरूपत्वान्न सिंहो नररूपतः।
शब्दविज्ञानकार्याणां भेदाज्जात्यन्तरं हि सः ॥ ४ ॥
त्रैरूप्यं पाञ्चरूप्यं वा ब्रुवाणा हेतुलक्षणम्।
सदसत्त्वादि सर्वे ऽपि कुतः परे न मन्वते ॥ ५ ॥

यथैकस्यैव नरस्य पितृत्वपुत्रत्वाद्यनेकसंबन्धा भिन्ननिमित्ता 5
न विरुध्यन्ते। तद्यथा। स नरः स्वपित्रपेक्षया पुत्रः स्वसुतापेक्षया तु पितेत्यादि। अभिन्ननिमित्तास्तु संबन्धा विरुध्यन्ते। तद्यथा। स्वपित्रपेक्षयैव स पिता पुत्रश्चेत्यादि। एवमनेकान्तेऽपि द्रव्यात्मनैकं पर्यायात्मना त्वनेकमित्यादि भिन्ननिमित्ततया न विरुध्यते। द्रव्यात्मनैवैकमनेकं चेत्यादि त्वभिन्न- 10
निमित्तया विरुध्यते। अभिन्ननिमित्तत्वं हि विरोधस्य मूलं न पुनर्भिन्ननिमित्तत्वमिति सुखदुःखनरदेवादिपर्याया अप्यात्मनो नित्यानित्यत्वाद्यनेकान्तमन्तरेण नोपपद्यन्ते यथा सर्पस्य द्रव्यस्य स्थिरस्योत्फणविफणावस्थे मिथो विरुद्धे अपि द्रव्यापेक्षया
न विरुद्धे यथैकस्या अङ्गुल्याः सरलताविनाशो वक्रतोत्पत्तिश्च 15
यथा वा गोरसे स्थायिनि दुग्धपर्यायविनाशोत्तरदधिपर्यायोत्पादौ संबभन्तौ प्रत्यक्षादिप्रमाणेनोपलब्धौ, एवं सर्वस्य वस्तुनो द्रव्यपर्यायात्मकतापि। किं च। सर्वेष्वपि दर्शनेषु स्वाभिमतसाध्यसाधनायाभिधीयमाना हेतवो ऽप्यनेकान्ताभ्युपगममन्तरेण
समीचीनतामश्नुवन्ति। तथाहि। अत्र स्वोपज्ञमेवं परहेतुत- 20
मोभास्करनामकं वादस्थलं लिख्यते। यथा। इह हि सकलतार्किकचक्रचूडामणितयात्मानं मन्यमानाः सर्वदापि प्रसभं पोषि-

तत्त्वाभिमाना गुणवत्सु विद्वत्सु मत्सरं विदधाना मुग्धजनस-
माजे ऽत्यूर्जितस्फूर्जितमभिदधानाः स्पष्टोद्भवेन स्वानुभवेन
समस्तवस्तुस्तोमगतमध्यात्ममनेकान्तमनुभवन्तो ऽपि स्वयं च
युक्त्यानेकान्तमेव वदन्तो ऽपि प्रकटं वचनमात्रेणैवानेकान्तमनि-
5 च्छन्तो यथावस्थितं वस्तुस्वरूपमपश्यन्तो निजमतानुरागमेव
पुष्णन्तो विद्वत्समीपे च कदापि सम्यग्घेतुस्वरूपमपृच्छन्तो
निजबुद्ध्या च तदनवगच्छन्तो भवन्तो यत्साध्यसाधनाय साधन-
मधुनाभ्यधुः, तत्रापि साध्यसिद्धिनिबन्धनं हेतुः । अतो ऽनेका-
न्तव्यवस्थापनार्थं यथावस्थितं वस्तुस्वरूपं दर्शयद्भिः सद्भिरस्माभिः
10 प्रथमतो हेतोरेव स्वरूपं सम्यगनेकान्तरूपं प्रकाश्यते । ताव-
दवधाना निरस्तस्वपक्षाभिमानाः क्षणं माध्यस्थ्यं भजन्तः
शृण्वन्तु भवन्तः । तथाहि । युष्मदुपन्यस्तेन हेतुना किमन्वयिना
स्वसाध्यं साध्येत व्यतिरेकिणा वान्वयव्यतिरेकिणा वा । यदि
तावदन्वयिना, तदा तत्पुत्रत्वादेरपि गमकत्वं स्यात्, अन्वय-
15 मात्रस्य तत्रापि भावात् । नापि व्यतिरेकिणा, तत्पुत्रत्वादेरेव
गमकत्वप्रसङ्गात् । श्यामत्वाभावे ऽन्यत्र गौरपक्षे विपक्षे तत्पुत्र-
त्वादेरभावात् । अन्वयव्यतिरेकिणा चेत्, तदापि तत्पुत्रत्वा-
दित एव साध्यसिद्धिप्रसक्तिः । न चास्य त्रैरूप्यलक्षणयोगिनो
हेत्वाभासताशङ्कनीया, अनित्यत्वसाधने कृतकत्वादेरपि
20 तत्प्रसङ्गात् । अस्ति च भवदभिप्रायेण त्रैरूप्यं तत्पुत्रादाविति ।
अथ भवत्वयं दोषो येषां पक्षधर्मत्वसपक्षसत्त्वविपक्षासत्त्वरूपे
त्रैरूप्ये ऽविनाभावपरिसमाप्तिः, नास्माकं पञ्चलक्षणहेतुवादिनां,

अस्माभिरसत्प्रतिपक्षत्वप्रत्यक्षागमाबाधितविषयत्वयोरपि लक्षण-
योरभ्युपगमादिति चेत्, तर्हि केवलान्वयिकेवलव्यतिरेका-
नुमानयोः पक्षलक्षणत्वासंभवेनागमकत्वप्रसङ्गः। न च तयोरग-
मकत्वं यौगैरिष्टं, तस्मात्प्रतिबन्धनिश्चायकप्रमाणासंभवेन, अन्य-
थानुपपत्तेः। अनिश्चय एव तत्पुत्रत्वादेरगमकतानिबन्धनमस्तु। 5
ननु त्रैलक्षण्याद्यभावः। यथात्र विपक्षे ऽसत्त्वं निश्चितं नास्ति,
तर्हि श्यामत्वाभावे तत्पुत्रत्वेनावश्यं निवर्तनीयमित्यत्र प्रमाण-
मस्तीति सौगतः। यौगस्तु गर्जति। शाकाद्याहारपरिणामः
श्यामत्वेन समव्याप्तिको न तु तत्पुत्रत्वेनेत्युपाधिसद्भावान्न तत्पु-
त्रत्वे विपक्षासत्त्वसंभव इति। तौ ह्येवं निश्चितान्यथानुपपत्तिमेव 10
शब्दान्तरेण शरणीकुरुत इति सैव हेतोर्लक्षणमस्तु। अपि च।
अस्ति नभसि चन्द्रो जलचन्द्रात्, उदेष्यति श्वः सविता, अद्यतना-
दित्योदयादित्यादिषु पक्षधर्मत्वाभावे ऽपि सम्प्रातेयमेवंविध-
स्यान्यथानुपपत्तेः। सर्वं क्षणिकमक्षणिकं वा सत्त्वादित्यादिषु
च सपक्षस्याभावे ऽपि हेतूनां गमकत्वदर्शनात्किं त्रैरूप्यादिना। 15
निश्चितान्यथानुपपत्तिरेवैकं लिङ्गलक्षणमचूणं तत्त्वमेतदेव
प्रपञ्चः पुनरयमिति चेत्, तर्हि सौगतेनाबाधितविषयत्वमस-
त्प्रतिपक्षं ज्ञातत्वं च यौगेन च ज्ञातत्वं लक्षणमाख्यानीयम्।
अथ विपक्षान्निश्चितव्यावृत्तिमात्रेणाबाधितविषयत्वमसत्प्रतिपक्षत्वं
च ज्ञापकहेत्वधिकाराज्ज्ञातत्वं च लब्धमेवेति चेत्, तर्हि गमक- 20
हेत्वधिकाराद्शेषमपि लब्धमेवेति किं शेषेणापि प्रपञ्चेनेति।
अत एव नान्वयमात्राद्धेतुर्गमको ऽपि त्वाक्षिप्तव्यतिरेकादन्वय-

विशेषाच्च । नापि व्यतिरेकमात्रात्किं तर्ह्यङ्गीकृतान्वयाद्व्यतिरेक-
विशेषात् । न चापि परस्परानुविद्धतदुभयमात्रात्, अपि
तु परस्परपाजहद्वृत्तान्वयव्यतिरेकत्वात्, निश्चितान्यथानुपप-
त्त्येकलक्षणस्य हि हेतोर्यथाप्रदर्शितान्वयव्यतिरेकरूपत्वात् । न
5 च जैनानां हेतोरेकलक्षणताभिधानमनेकान्तस्य विघातकमिति
वक्तव्यं, प्रयोगनियम एवैकलक्षणो हेतुरित्यभिधानात् । न तु
स्वभावनियमे नियतैकस्वभावस्य शशशृङ्गादेरिव निःस्वभावत्वा-
दिति कथं न हेतोरनेकान्तात्मकता । तथा ननु भोः सकर्णाः
प्रतिप्राणिप्रसिद्धप्रमाणप्रतिष्ठितानेकान्तविरुद्धबुद्धिभिर्भवद्भिर -
10 न्यैश्च कणभक्षाक्षपादबुद्धादिशिष्यकैरुपन्यस्यमानाः सर्वे एव
हेतवो विवक्षयासिद्धविरुद्धानैकान्तिकतां स्वीकुर्वन्तीत्यवगन्त-
व्यम् । तथाहि । पूर्वं तावत्तेषां विरुद्धताभिधीयते । यदि
ह्येकस्यैव हेतोस्त्रीणि पञ्च वा रूपाणि वास्तवान्यभ्युपगम्यन्ते,
तदा सो ऽनेकधर्मात्मकमेव वस्तु साधयतीति कथं न विपर्य-
15 यसिद्धिः, एकस्य हेतोरनेकधर्मात्मकस्याभ्युपगमात् । न च
यदेव पक्षधर्मस्य सपक्ष एव सत्त्वं तदेव विपक्षात्सर्वतो व्यावृत्त-
त्वमिति वाच्यं, अन्वयव्यतिरेकयोर्भावाभावरूपयोः सर्वथा
तादात्म्यायोगात्, तत्त्वे वा केवलान्वयी केवलव्यतिरेकी वा
सर्वो हेतुः स्यान्न तु त्रिरूपः पञ्चरूपो वा । तथा च साधना-
20 भावो ऽपि गमकः स्यात् । अथ विपक्षासत्त्वं नाभ्युपेयते किं
तु साध्यसद्भावे ऽस्तित्वमेव साध्याभावेनास्तित्वमभिधीयते न तु
ततस्तद्भिन्नमिति चेत्, तदसत् । एवं हि विपक्षासत्त्वस्याभावा-

द्धेतोस्तैरूप्यादि न स्यात्। अथ ततस्तदन्यद्धर्मान्तरं; तर्ह्येकरूपस्यानेकात्मकस्य हेतोस्तथाभूतसाध्याविनाभूतत्वेन निश्चितस्यानेकान्तवस्तुप्रसाधनात्कथं न परोपन्यस्तहेतूनां सर्वेषां विरुद्धता, एकान्तविरुद्धेनानेकान्तेन व्याप्तत्वात्। तथासिद्धतापि सर्वसाधनधर्माणामुन्नेया, यतो हेतुः सामान्यं वा 5 भवेद्विशेषो वा तदुभयं वानुभयं वा। न तावत्सामान्यं हेतुः। तद्धि सकलव्यापि सकलस्वाश्रयव्यापि वा हेतुत्वेनोपादीयमानं प्रत्यक्षसिद्धं वा स्यात्तदनुमानसिद्धं वा स्यात्। न तावत्प्रत्यक्षसिद्धं, प्रत्यक्षं ह्यक्षानुसारितया प्रवर्तते। अक्षं च नियतदेशादिनैव निबध्यते। अतो ऽक्षानुसारि ज्ञानं नियतदे- 10 शादावेव प्रवर्तितुमुत्सहते, न सकलकालदेशव्यापिनि। अथ नियतदेशस्वरूपाव्यतिरेकात्तन्निश्चये तस्यापि निश्चय इति चेत्। न, नियतदेशस्वरूपाव्यतिरेके नियतदेशतेव स्यान्न व्यापिता। तन्न व्यापिसामान्यरूपो हेतुः प्रत्यक्षसिद्धः। अनुमानसिद्धतायामनवस्थाराक्षसी दुर्निवारा। अनुमानेन हि 15 लिङ्गग्रहणपूर्वकमेव प्रवर्तमानेन सामान्यं साध्यते लिङ्गं च न विशेषरूपमिष्यते, अननुगमात्। सामान्यरूपं तु लिङ्गमवगतं वानवगतं वा भवेत्। न तावदनवगतं, अनिष्टत्वादतिप्रसङ्गाच्च। अवगतं चेत्, तदा तस्यावगमः प्रत्यक्षेणानुमानेन वा। न प्रत्यक्षेण, संनिकृष्टग्राहित्वात्तस्य। नाप्यनुमानेन। तस्याप्यनु- 20 मानमन्तरेण लिङ्गग्रहणे पुनस्तदेवावर्तते। तथा चानुमानानामानन्त्यायुगसहस्रैरप्येकलिङ्गिग्रहणं न भवेत्। अपि च।

32

अशेषव्यक्त्याधेयस्वरूपं सामान्यं प्रत्यक्षानुमानाभ्यां निश्चीयमानं स्वाधारनिश्चयमुत्पादयेत्। स्वाधारनिश्चयो ऽपि निजाधारनिश्चयमिति सकलो जनः सर्वज्ञः प्रसज्यते। किं च। स्वाश्रयेन्द्रियसंयोगात्प्राक् स्वज्ञानमजनयत्सामान्यं पश्चादपि न तज्जन-
5 येत्, अविचलितरूपत्वात्। परैरनाधेयातिशयत्वाच्च विचलितत्व आधेयातिशयत्वे च चणिकतापत्तिः। अन्यच्च। तत्सामान्यं व्यक्तिभ्यो भिन्नमभिन्नं भिन्नाभिन्नं वा हेतुर्भवेत्। न तावद्भिन्नं व्यक्तिभ्यः पृथगनुपलम्भात्, समवाये न व्यक्तिभिः सह सामान्यस्य संबन्धितत्वात्। पृथगनुपलम्भ इति चेत्। न। समवा-
10 यस्येह बुद्धिहेतुत्वं गीयते, इहेदमिति बुद्धिश्च भेदग्रहणमन्तरेण न भवेत्। किं च। अतो ऽश्वत्वादिसामान्यं स्वाश्रयसर्वगतं वा सर्वसर्वगतं वेष्यते। यदि स्वाश्रयसर्वगतं, तदा कर्कादिव्यक्तिशून्ये देशे प्रथमतरमुपजायमानाया व्यक्तेरश्वत्वादिसामान्येन योगो न भवति, व्यक्तिशून्ये देशे सामान्यस्यानवस्था-
15 नाद्व्यक्त्यन्तरादनागमनाच्च। अथ सर्वसर्वगतं तत्स्वीक्रियते, तदा कर्कादिभिरिव शाबलेयादिभिरपि तदभिव्यज्येत। न च "कर्काद्यानामेव तदभिव्यक्तौ सामर्थ्यं न शाबलेयादीनां" इति वाच्यं, यतः किंरूपं तत्कर्काद्यानां सामर्थ्यम्। साधरणरूपत्वमिति चेत्न। स्वतस्तेत्साधारणरूपा व्यक्तयः, तदा स्वत एव
20 ता अश्वो ऽश्व इत्यनुवृत्तं प्रत्ययं जनयिष्यन्तीति किं तद्भिन्नसामान्यपरिकल्पनया। यदि च स्वतो ऽसाधारणरूपा व्यक्तयः, तदापरसामान्ययोगादपि न साधारणा भवेयुः, स्वतो ऽसा-

धारणरूपत्वादिति व्यक्तिभिन्नस्य सामान्यस्याभावादसिद्धु-
स्तल्लक्षणो हेतुः। कथं ततः साध्यसिद्धिर्भवेत्। अथ व्यक्त्य-
भिन्नं सामान्यं हेतुः। तदप्ययुक्तं, व्यक्त्यभिन्नस्य व्यक्तिस्वरूपव-
द्व्यक्त्यन्तराननुगमात्सामान्यरूपतानुपपत्तेर्व्यक्त्यभिन्नत्वस्य सामान्य-
रूपतायाश्च मिथोविरोधात्। अथ भिन्नाभिन्नमिति चेत्, न, 5
विरोधात्। अथ केनाप्यंशेन भिन्नं केनाप्यभिन्नमिति। तदपि
न युक्तं, सामान्यस्य निरंशत्वात्। तन्नैकान्तसामान्यरूपो हेतुः
साकल्येन सिद्धो नापि विशेषरूपः, तस्यासाधारणत्वेन गमक-
त्वायोगात्, साधारणत्व एवान्वयोपपत्तेः। नापि सामान्यविशे-
षोभयं परस्परानानुविद्धं हेतुः, उभयदोषप्रसङ्गात्। नाप्यनुभयं, 10
अन्योन्यव्यवच्छेदरूपाणामेकाभावे द्वितीयविधानादनुभयस्यास-
त्त्वेन हेतुत्वायोगात्। बुद्धिप्रकल्पितं च सामान्यमवस्तुरूपत्वा-
त्साध्येनाप्रतिबद्धत्वादसिद्धत्वाच्च न हेतुः। तदेवं सामान्यादी-
नामसिद्धत्वे तल्लक्षणाः सर्वे ऽपि हेतवो ऽसिद्धा एव २। तथा
प्रतिबन्धविकलाः समस्ता अपि परोपन्यस्ता हेतवो ऽनैकान्तिका 15
अवगन्तव्याः। न चैकान्तसामान्ययोर्विशेषयोर्वा साध्यसाधनयोः
प्रतिबन्ध उपपद्यते। तथाहि। सामान्ययोरेकान्तेन नित्ययोः
परस्परमनुपकार्योपकारकभूतयोः कः प्रतिबन्धः, मिथः कार्य-
कारणादिभावेनोपकार्योपकारत्वे त्वनित्यत्वापत्तेः। विशेषयोस्तु
नियतदेशकालयोः प्रतिबन्धग्रहे ऽपि तत्रैव तयोर्ध्वंसात्साध्यध- 20
र्मिण्यगृहीतप्रतिबन्ध एवान्यो विशेषो हेतुत्वेनोपदीयमानः
कथं नानैकान्तिकः। किं च। प्रतिबन्धपक्षधर्मत्वादिकं लिङ्ग-

लक्षणे सति संभवी न च साध्यसाधनयोः परस्परतो धर्मिण-
श्चैकान्तेन भेदे ऽभेदे वा पक्षधर्मत्वादिधर्मयोगो लिङ्गस्योपप-
त्तिमान्, संबन्धासिद्धेः। संबन्धो हि साध्यसाधनयोर्धर्मिणश्च
किं समवायः संयोगो विरोधो विशेषणविशेष्यभावस्तादात्म्यं
5 तदुत्पत्तिर्वा भवेत्। न तावत्समवायः, तस्य धर्मधर्मिद्वयाति-
रिक्तस्य प्रमाणेनाप्रतीयमानत्वात्, इह तन्तुषु पट इत्यादेस्त-
त्साधकस्य प्रत्ययस्यालौकिकत्वात्, पांसुलपादानामपीह पटे
तन्तव इत्येवंप्रतीतिदर्शनात्, इह भूतले घटाभाव इत्यत्रापि
समवायप्रसङ्गात्। सत्त्वे वा समवायस्य स्वत एव धर्मधर्म्यादिषु
10 वृत्त्यभ्युपगमे, तद्वत्साध्यादिधर्माणामपि स्वत एव धर्मिणि
वृत्तिरस्तु किं व्यर्थया समवायकल्पनया। समवायस्य समवा-
यान्तरेण वृत्त्यभ्युपगमे तु, तत्राप्यपरसमवायकल्पने ऽनवस्था-
नदी दुस्तरा। अस्तु समवायस्य स्वतः परतो वा वृत्तिः,
तथापि तस्य प्रतिनियतानामेव संबन्धिनां संबन्धकत्वं न
15 स्यादपि त्वन्येषामपि व्यापकत्वेन, तस्य सर्वत्र तुल्यत्वादेकस्व-
भावत्वाच्च। नापि संयोगः। स हि साध्यसाधनादीनां भवेत्।
किं ततो भिन्नो वा स्यादभिन्नो वा। प्राचि पक्षे कथं विव-
क्षितानामेवैष किं नान्येषामपि, भेदाविशेषात्। न च सम-
वायो ऽत्र नियामकः, तस्य सर्वत्र सदृशत्वात्। द्वितीये तु
20 साध्यादीन्येव स्युः, न कश्चित्संयोगो नाम कथंचित्। अभिन्नसं-
योगाङ्गीकारे तु परवादाश्रयणं भवेत्। नापि विरोधो
ऽभिधातव्यः, तस्याप्येकान्तमते ऽसंभवात्। स हि सहानवस्थानं

परस्परपरिहारो वा भवेत्। तत्राद्ये किं कदाचिदप्येकत्रान-वस्थानमुत कियत्कालं स्थित्वा पश्चादनवस्थानम्। आद्ये पक्षे ऽहिनकुलादीनां न विरोधः स्यात्, अन्यथा त्रैलोक्ये ऽप्युरगादीनामभावः। द्वितीये तु नरवनितादेरपि विरोधः स्यात्, तयोरपि किंचित्कालमेकत्र स्थित्वापगमात्। किं च। वडवानलजलधिजलयोर्विद्युदम्भोदाम्भसोश्च चिरतरमेकत्रावस्थानतः कथमयं विरोधः। परस्परपरिहारस्तु सर्वभावानामविशिष्टः कथमसौ प्रतिनियतानामेव भवेत्। नापि विशेषणविशेष्यभावो घटामियर्ति, तस्य संयोगाद्यसंभवे ऽभावात्, तस्य तु प्रागेव निरासात्। नापि साध्यसाधनयोस्तादात्म्यं घटते, साध्यसाधनयोरसिद्धसिद्धयोर्भेदाभ्युपगमेन तादात्म्यायोगात्, तादात्म्ये च साध्यं साधनं चैकतरमेव भवेन्न द्वयं कथंचित्। तादात्म्ये तु जैनमतानुप्रवेशः स्यात्। तदुत्पत्तिस्तु कार्यकारणभावे संभविनी कार्यकारणभावस्त्वर्थक्रियासिद्धौ सिध्येत्। अर्थक्रिया च नित्यस्य क्रमाक्रमाभ्यां सहकारिषु सत्स्वसत्सु च जनकाजनकस्वभावद्वयानभ्युपगमेन नोपपद्यते। अनित्यस्य तु सतो ऽसतो वा सा न घटते, सतः समवायवर्तिनि व्यापारायोगात्, व्यापारे वा स्वस्वकारणकाल एव जातानामुत्तरोत्तरसर्वक्षणानामेकक्षणवर्तित्वप्रसङ्गात्, सकलभावानां मिथःकार्यकारणभावप्रसक्तेश्च, असतश्च सकलशक्तिविकलत्वेन कार्यकारणासंभवात्, अन्यथा शशविषाणादेरपि तत्प्रसङ्गात्। तदित्थं साध्यादीनां संबन्धानुपपत्तेरेकान्तमते पक्षधर्मत्वादि हेतुलक्ष-

णमसंगतमेव स्यात् । तथा च प्रतिबन्धो दुरुपपाद एव ।
तथैकान्तवादिनां प्रतिबन्धग्रहणमपि न आघटीति, अविच-
लितस्वरूप आत्मनि ज्ञानपौर्वापर्याभावात्, प्रतिक्षणध्वंसिन्यपि
कार्यकारणाद्युभयग्रहणानुवृत्त्यैकचैतन्याभावात् । न च कार्या-
5 द्यनुभवानन्तरभाविना स्मरणेन कार्यकारणभावादिः प्रतिबन्धो
ऽनुसंधीयत इति वक्तव्यं, अनुभूत एव स्मरणप्रादुर्भावात् । न
च प्रतिबन्धः केनचिदनुभूतः, तस्योभयनिष्ठत्वात् । उभयस्य
पूर्वापरकालभाविन एकेनाग्रहणादिति न प्रतिबन्धनिश्चयो
ऽपि । तदेवमेकान्तपक्षे परैरुच्चार्यमाणः सर्वो ऽपि हेतुः
10 प्रतिबन्धस्याभावादनिश्चयाच्चानैकान्तिक एव भवेत् ॥ । एवं च
केवलस्य सामान्यस्य विशेषस्य च द्वयोर्वा परस्परविविक्तयो-
स्तयोर्हेतुत्वाघटनादनुवृत्तव्यावृत्तप्रत्ययनिबन्धनपरस्परसंवलित-
सामान्यविशेषात्मनो हेतोरनेकान्तात्मनि साध्ये गमकत्व-
मभ्युपगन्तव्यम् । न च "यदेव रूपं रूपान्तराद्व्यावर्तते, तदेव
15 कथमनुवृत्तिमासादयति, यच्चानुवर्तते तत्कथं व्यावृत्तिमाश्र-
यति" इति वक्तव्यं, अनुवृत्तव्यावृत्तरूपतयाध्यक्षतः प्रतीयमाने
वस्तुरूपे विरोधासिद्धेः, सामान्यविशेषवच्चित्रज्ञानवच्चित्रपट-
स्यैकचित्ररूपवद्वा । किं च । एकान्तवाद्युपन्यस्तहेतोः साध्यं किं
सामान्यमाहोस्विद्विशेष उतोभयं परस्परविविक्तमुतस्विदनुभय-
20 मिति विकल्पाः । न तावत्सामान्यं केवलस्य, तस्यासंभवादर्थ-
क्रियाकारित्ववैकल्याच्च । नापि विशेषः, तस्याननुयायित्वेन
साधयितुमशक्यत्वात् । नाप्युभयं, उभयदोषानतिवृत्तेः । नाप्य-

ऽनुभयं, तस्यासतो हेतुत्वव्यापकत्वेन साध्यत्वायोगात्। तस्माद्विवादास्पदीभूतसामान्यविशेषोभयात्मकसाध्यधर्मस्य साध्यधर्मिणि साधनाद्यान्योन्यानुविद्धान्वयव्यतिरेकस्वभावद्वयात्मकैकहेतोः प्रदर्शने लेशतोऽपि नैकान्तपक्षोक्तदोषावकाशः संभवी। अतो नैकान्तात्मकं हेतुस्वरूपं चावश्यमङ्गीकर्तव्यं, अन्यथा सकलानुमानेषु साध्यसाधनानामुक्तन्यायत उच्छेद एव भवेत्। तस्माद्भो एकान्तवादिनो निजपक्षाभिमानत्यागेनाविषादिनोऽक्षिणी निमील्य बुद्धिदृशमुन्मील्य मध्यस्थवृत्त्या युक्त्यनुसारैकप्रवृत्त्या तत्तत्त्वं जिज्ञासन्तो भवन्तोऽनेकान्तं विचारयन्तु, प्रमाणैकमूलसकलयुक्तियुक्तं प्रागुक्तनिखिलदोषविप्रमुक्तं तत्तत्त्वं चाधिगच्छन्तु। इति परहेतुतमोभास्करनामकं वादस्थलं श्रीगुणरत्नसूरिपादैः कृतम्। ततः सिद्धं सर्वदर्शनसंमतमनेकान्तमतम्॥

अथ जैनमतं संक्षेपयन्नाह

**जैनदर्शनसंक्षेप इत्येष गदितोऽनघः।**
**पूर्वापरपराघातो यत्र क्वापि न विद्यते॥ ५८॥**

जैनदर्शनस्य संक्षेपो विस्तरस्यागाधत्वेन वक्तुमशक्यत्वादुपयोगसारः समास इत्यमुनोक्तप्रकारेणैव प्रत्यक्षो गदितोऽभिहितोऽनघो निर्दूषणः सर्ववक्तव्यस्य सर्वज्ञमूलत्वे दोषकालुष्यानवकाशात्। यत्र जैनदर्शने क्वापि क्वचिदपि जीवाजीवादिरूपविचारणाविषयसूक्ष्ममतिचर्चायामपि पूर्वापरयोः पूर्वपश्चादभिहितयोः पराघातः परस्परव्याहतत्वं न विद्यते। अयं भावः।

यथापरदर्शनसंबन्धिषु मूलशास्त्रेष्वपि किं पुनः पाश्चात्य-विप्रलम्भकग्रथितग्रन्थकथासु प्रथमपश्चादभिहितयोर्मिथोविरोधो ऽस्ति, तथा जैनदर्शने क्वापि केवलिप्रणीतद्वादशाङ्गेषु पारंपर्यग्रन्थेषु च सुसंबद्धार्थत्वात्सूक्ष्मेक्षिकया निरीक्षितो ऽपि
5 स नास्ति । यत्तु परदर्शनेष्वपि क्वचन सद्वद्यद्वदंयंगमानि वचनानि कानिचिदाकर्णयामः, तान्यपि जिनोक्तसूक्तसुधा-सिन्धुसमुद्धृतान्येव संग्रह्य मुधा स्वात्मानं बहु मन्वते । यदूचुः श्री-सिद्धसेनपादाः ।

> सुनिश्चितं नः परतन्त्रं युक्तिषु
> 10 स्फुरन्ति याः काश्चन सूक्तिसंपदः ।
> तवैव ताः पूर्वमहार्णवोत्थिता
> जगत्प्रमाणं जिनवाक्यविप्रुषः ॥ इति ॥

अत्र परे प्राहुः । अहो आर्हतार्हदभिहिततत्त्वानुरागिभिर्युष्माभिरिदमसंबद्धमेवाविर्भावयांबभूवे यदुतास्मद्दर्शनेष्वपि
15 पूर्वापरयोर्विरोधो ऽस्तीति । न ह्यस्मन्मते सूक्ष्मेक्षणैरीक्षमाणो ऽपि विरोधलेशो ऽपि क्वचन निरीक्ष्यते, अमृतकरनिकरेष्विव कालिमेति चेत् । उच्यते । भोः स्वमतपक्षपातं परिहृत्य माध्यस्थ्यमवलम्बमानैर्निरभिमानैर्धीप्रधानैः प्रतिभाद्यवधानं विदधानैर्निशम्यते, तदा वयं भवतां सर्वं दर्शयामः । तथाहि ।
20 प्रथमं तावत्ताथागतसंमते मते पूर्वापरविरोध उद्भाव्यते । पूर्वं सर्वं क्षणभङ्गुरमभिधाय पश्चादेवमभिदधे नाननुकृतान्वयव्यतिरेकं कारणं नाकारणं विषय इति । अस्यायमर्थः ।

ज्ञानमर्थं सत्येवोत्पद्यते न पुनरसतीत्यनुकृतान्वयव्यतिरेको ऽर्थो ज्ञानस्य कारणम् । यतश्चार्थाज्ज्ञानमुत्पद्यते तमेव तद्विषयीकरोतीति । एवं चाभिदधानेनार्थस्य क्षणद्वयं स्थितिरभिहिता । तद्यथा । अर्थात्कारणाज्ज्ञानं कार्यं जायमानं द्वितीये क्षणे जायते न तु समसमये, कारणकार्ययोः समसमयत्वायोगात् । तच्च ज्ञानं स्वजनकमेवार्थं गृह्णाति नापरं, नाकारणं विषय इति वचनात् । तथा चार्थस्य क्षणद्वयं स्थितिर्बलादायाता सा च क्षणक्षयेण विरुद्धेति पूर्वापरविरोधः १ । तथा नाकारणं विषय इत्युक्त्वा योगिप्रत्यक्षस्यातीतानागतादिरप्यर्थो विषयोऽभ्यधायि । अतीतानागतस्य विनष्टानुत्पन्नत्वेन तस्य कारणं न भवेत् । अकारणमपि च तं विषयतयाभिदधानस्य पूर्वापरविरोधः स्यात् २ । एवं साध्यसाधनयोर्व्याप्तिग्राहकस्य ज्ञानस्य कारणत्वाभावेऽपि त्रिकालगतमर्थं विषयं व्याहरमाणस्य कथं न पूर्वापरव्याघातः, अकारणस्य प्रमाणविषयत्वानभ्युपगमात् ३ । तथा क्षणक्षयाभ्युपगमे ऽन्वयव्यतिरेकयोर्भिन्नकालयोः प्रतिपत्तिर्न संभवति । ततः साध्यसाधनयोस्त्रिकालविषयं व्याप्तिग्रहणं मन्वानस्य कथं न पूर्वापरव्याहतिः ४ । तथा क्षणक्षयमभिधाय ।

इत एकनवते कल्पे शक्त्या मे पुरुषो हतः ।
तत्कर्मणो विपाकेन पादे विद्धोऽस्मि भिक्षवः ॥

इत्यत्र श्लोके जन्मान्तरविषये मेशब्दास्मिशब्दयोः प्रयोगं क्षणक्षयविरुद्धं ब्रुवाणस्य बुद्धस्य कथं न पूर्वापरविरोधः ५ ।

तथा निरंशं सर्वं वस्तु प्रागप्रोच्य हिंसाविरतिदानचित्तस्वसंवेदनं तु स्वगतं सद्द्रव्यचेतनत्वस्वर्गप्रापणशक्त्यादिकं गृह्णदपि स्वगतस्य सद्द्रव्यत्वादेरेकस्यांशस्य निर्णयमुत्पादयति न पुनः स्वगतस्यापि द्वितीयस्य स्वर्गप्रापणशक्त्यादेरंशस्येति सांशतां पश्चाद्वदतः सौगतस्य कथं पूर्वापरविरुद्धं वचो न स्यात् ६। एवं निर्विकल्पकमध्यक्षं नीलादिकस्य वस्तुनः सामस्त्येन ग्रहणं कुर्वाणमपि नीलाद्यंशे निर्णयमुत्पादयति न पुनर्नीलाद्यर्थगतेक्षणक्षयेऽंश इति सांशतामभिदधतः सौगतस्य पूर्वापरवचोविरोधः सुबोध एव ७। तथा हेतोस्त्रैरूप्यं संशयस्य चोल्लेखद्वयात्मकतामभिदधानोऽपि स सांशं वस्तु यन्न मन्यते तदपि पूर्वापरविरुद्धम् ८। तथा परस्परानाश्लिष्टा एवाणवः प्रत्यासत्तिभाजः समुदिता घटादिरूपतया प्रतिभासन्ते न पुनरन्योन्यमङ्गाङ्गिभावरूपेणारब्धस्कन्धकार्यास्त इति हि बौद्धमतम्। तत्र चायं दोषः। परस्परमणूनामनाश्लिष्टत्वाद्घटस्यैकदेशे हस्तेन धार्यमाणे कृत्स्नस्य घटस्य धारणं न स्यात्। उत्क्षेपावक्षेपापकर्षाश्च तथैव न भवेयुः। धारणादीनि च घटस्यार्थक्रियालक्षणं सत्त्वमङ्गीकुर्वाणैः सौगतैरभ्युपगतान्येव तानि च तन्मतेऽनुपपन्नानि ततो भवति पूर्वापरयोर्विरोधः ९॥

अथ नैयायिकवैशेषिकमतयोः पूर्वापरतो व्याहतत्वं दर्श्यते सत्तायोगः सत्त्वमित्युक्त्वा सामान्यविशेषसमवायानां सत्तायोगमन्तरेणापि सद्भावं भाषमाणानां कथं न व्याहतं वचो भवेत् १। ज्ञानं स्वात्मानं न वेत्ति स्वात्मनि क्रियाविरोधादित्य-

भिधायेश्वरज्ञानं स्वात्मनि क्रियाविरोधाभावेन स्वसंवेदितमि-
च्छता कथं न स्ववचनविरोधः २। प्रदीपोऽप्यात्मानमात्म-
नैव प्रकाशयन् स्वात्मनि क्रियाविरोधं व्यपाकरोति ३।
परवञ्चनात्मन्यपि च्छलजातिनिग्रहस्थानानि तत्त्वरूपतयोपदि-
शतोऽस्यपादस्य वैराग्यव्यावर्णनं तमसः प्रकाशात्मकताप्रख्यापनमिव 5
कथं न व्याहन्यते ४। आकाशस्य निरवयवत्वं स्वीकृत्य तद्गुणः
शब्दस्तदेकदेश एव श्रूयते न सर्वत्रेति सावयवतां ब्रुवाणस्य कथं
न विरोधः ५। सत्तायोगः सत्त्वं योगस्य सर्वैर्वस्तुभिः
सांशतायामेव भवति सामान्यं च निरंशमेकमभ्युपगम्यते।
ततः कथं न पूर्वापरतो व्याहतिः ६। समवायो नित्य 10
एकस्वभावश्चेष्यते सर्वैः समवायिभिः संबन्धस्य नैयत्येन जाय-
मानोऽनेकस्वभावतायामेव भवति। तथा च पूर्वापरविरोधः
सुबोधः ७। अर्थवत्प्रमाणमित्यत्रार्थः सहकारी यस्य तदर्थ-
वत्प्रमाणमित्यभिधाय योगिप्रत्यक्षमतीताद्यर्थविषयमभिदधानस्य
पूर्वापरविरोधः स्यात्, अतीतादेः सहकारित्वायोगात् ८। 15
तथा स्मृतिर्गृहीतग्राहित्वेन न प्रमाणमिष्यते, अनर्थजन्यत्वेन
वा। गृहीतग्राहित्वेन स्मृतेरप्रामाण्ये धारावाहिज्ञानानामपि
गृहीतग्राहित्वेनाप्रामाण्यप्रसङ्गः। न च धारावाहिज्ञाना-
नामप्रामाण्यं नैयायिकवैशेषिकैः स्वीक्रियते, अनर्थजन्यत्वेन
तु स्मृतेरप्रामाण्येऽतीतानागतादिविषयस्याप्यनर्थजन्यत्वेनाप्रामाण्यं 20
भवेत्, त्रिकालविषयं चानुमानं शब्दवदिष्यते, धूमेन हि
वर्तमानोऽग्निरनुमीयते मेघोन्नत्या भविष्यन्ती वृष्टिर्नदी-

पूरेण च सैव भूतेति, तदेवं धारावाहिज्ञानैरनुमानेन च स्मृतेः सादृश्ये सत्यपि यत्स्मृतेरप्रामाण्यं धारावाहिज्ञानादीनां च प्रामाण्यमिष्यते स पूर्वापरविरोधः ८। ईश्वरस्य सर्वार्थविषयं प्रत्यक्षं किमिन्द्रियार्थसंनिकर्षनिरपेक्षमिष्यत आहो-
5 स्विदिन्द्रियार्थसंनिकर्षोत्पन्नम् ज्ञानव्यपदेश्यमित्यक्ष सूत्रे संनिकर्षोपादानं निरर्थकं भवेत्, ईश्वरप्रत्यक्षसंनिकर्षं विनापि भावात्। अथेश्वरप्रत्यक्षमिन्द्रियार्थसंनिकर्षोत्पन्नमेवाभिप्रेयत इति चेत्। उच्यते। न ह्यीश्वरसंबन्धिमनसो ऽणुपरिमाणत्वाद्युगपत्सर्वार्थैः संयोगो भवेत्। ततश्चैकमर्थं स यदा
10 वेत्ति तदा नापरान् सतोऽप्यर्थान्; ततोऽस्मदादिवन्न तस्य कदापि सर्वज्ञता, युगपत्संनिकर्षासंभवेन सर्वार्थानां युगपद्वेदनात्। अथ सर्वार्थानां क्रमेण संवेदनात् सर्वज्ञ इति चेत्। न, बहुना कालेन सर्वार्थसंवेदनस्य खण्डपरशाविवास्मदादिष्वपि संभवात्तेऽपि सर्वज्ञाः प्रसजेयुः। अपि च। अतीता-
15 नागतानामर्थानां विनष्टानुत्पन्नत्वादेव मनसा संनिकर्षो न भवेत्, सतामेव संयोगसंभवात्तेषां च तदानीमसत्त्वात्। ततः कथं महेश्वरस्य ज्ञानमतीतानागतार्थग्राहकं स्यात्। सर्वार्थग्राहकं च तज्ज्ञानमिष्यते। ततः पूर्वापरो विरोधः सुबोधः। एवं योगिनामपि सर्वार्थसंवेदनं दुर्धरविरोधदुष्टमवबोधव्यम् १०।
20 कार्यद्रव्ये प्रागुत्पन्ने सति तस्य रूपं पश्चादुत्पद्यते निराश्रयस्य रूपस्य गुणत्वात्प्रागनुत्पादेनेति पूर्वमुक्त्वा पश्चाच्च कार्यद्रव्ये विनष्टे सति तद्रूपं विनश्यतीत्युच्यमानं पूर्वापरविरुद्धं भवेत्,

यतोऽत्र रूपं कार्ये विनष्टे सति निराश्रयं स्थितं. सत् पश्चाद्विनश्येदिति ११॥

सांख्यस्य त्वेवं स्ववचनविरोधः। प्रकृतिर्नित्यैका निरवयवा निष्क्रियाव्यक्ता चेष्यते। सैवानित्यादिभिर्महदादिविकारैः परिणमत इति चाभिधीयते। तच्च पूर्वापरतोऽसंबद्धम् १। अर्थाध्यवसायस्य बुद्धिव्यापारत्वाच्चेतना विषयपरिच्छेदरहितार्थं न बुध्यत इत्येतत्सर्वलोकप्रतीतिविरुद्धम् २। बुद्धिर्महदाख्या जडा न किमपि चेतयत इत्यपि स्वपरप्रतीतिविरुद्धं ३। आकाशादिभूतपञ्चकं स्वरादितन्मात्रेभ्यः सूक्ष्मसंज्ञेभ्य उत्पन्नं यदुच्यते तदपि नित्यैकान्तवादे पूर्वापरविरुद्धं कथं श्रद्धेयम् ४। यथा पुरुषस्य कूटस्थनित्यत्वान्न विकृतिर्भवति नापि बन्धमोक्षौ, तथा प्रकृतेरपि न ते संभवन्ति कूटस्थनित्यत्वादेव। कूटस्थनित्यं चैकस्वभावमिष्यते। ततो ये प्रकृतिर्विकृतिर्बन्धमोक्षौ चाभ्युपगम्यन्ते परैः, ते नित्यत्वं च परस्परविरुद्धानि॥

मीमांसकस्य पुनरेवं स्वमतविरोधः। न हिंस्यात्सर्वभूतानीति न वै हिंस्रो भवेदिति चाभिधाय महोक्षं वा महाजं वा श्रोत्रियाय प्रकल्पयेदिति जल्पतो वेदस्य कथं न पूर्वापरविरोधः १। तथा न हिंस्यात्सर्वभूतानीति प्रथममुक्त्वा पश्चात्तदागमे पठितमेवम्।

षट्शतानि नियुज्यन्ते पशूनां मध्यमेऽहनि।
अश्वमेधस्य वचनान्न्यूनानि पशुभिस्त्रिभिः॥

तथा "अग्नीषोमीयं पशुमालभेत" 'सप्तदश प्राजापत्या-न्पशूनालभेत" इत्यादि वचनानि कथमिव न पूर्वापरविरोध-मनुरुध्यन्ते २ । तथानृतभाषणं प्रथमं निषिध्य पश्चादूचे ब्राह्मणार्थेऽनृतं ब्रूयादित्यादि । तथा ।

5 न नर्मयुक्तं वचनं हिनस्ति
न स्त्रीषु राजन्न विवाहकाले ।
प्राणात्यये सर्वधनापहारे
पञ्चानृतान्याहुरपातकानि ॥ ३ ॥
M. Bh.

तथादत्तादानमनेकधा निरस्य पश्चादुक्तम् । यद्यपि ब्राह्मणो 10 हठेन परकीयमादत्ते छलेन वा, तथापि तस्य नादत्तादानं, यतः सर्वमिदं ब्राह्मणेभ्यो दत्तं ब्राह्मणानां तु दौर्बल्याद्वृषलाः परिभुञ्जते । तस्मादपहरन् ब्राह्मणः स्वमादत्ते स्वमेव ब्राह्मणो भुङ्क्ते । स्वं वस्ते स्वं ददातीति ४ । तथापुत्रस्य गतिर्नास्तीति लपित्वोक्तम् ।

15 अनेकानि सहस्राणि कुमारब्रह्मचारिणाम् ।
दिवंगतानि विप्राणामकृत्वा कुलसंततिम् ॥ इत्यादि ॥

तथा ।

न मांसभक्षणे दोषो न मद्ये न च मैथुने ।
प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला ॥

20 इति स्मृतिगते श्लोके । यदि प्रवृत्तिर्निर्दोषा, तदा कथं ततो निवृत्तिस्तु महाफलेति व्याहतमेतत् ६ । वेदविहिताहिंसा धर्महेतुरित्यत्र प्रकट एव स्ववचनविरोधः । तथाहि । धर्म-

हेतुश्चेद्धिंसा कथं, हिंसा चेद्धर्महेतुः कथम् । न हि भवति माता च वन्ध्या चेति । धर्मस्य च लक्षणमिदं श्रूयते ।

श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम् ।
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥ ६ ।

इत्यादि 5

अर्चिर्मार्गप्रपन्नैर्वेदान्तवादिभिर्गर्हिता चेयं हिंसा ।

अन्धे तमसि मज्जामः पशुभिर्ये यजामहे ।
हिंसा नाम भवेद्धर्मो न भूतो न भविष्यति ॥ इति ॥ ७

तथा भवान्तरं प्राप्तानां तृप्तये च श्राद्धादिविधानं तदप्य-विचारितरमणीयम् । तथा च तद्यूथिनः पठन्ति । 10

मृतानामपि जन्तूनां श्राद्धं चेत्तृप्तिकारणम् ।
तन्निर्वाणप्रदीपस्य स्नेहः संवर्धयेच्छिखाम् ॥ इति ॥ ८ ।

एवमन्यान्यपि पुराणोक्तानि पूर्वापरविरुद्धानि संदेहसमु-च्चयशास्त्राद्व्यावतार्थं वक्तव्यानि । तथा नित्यपरोक्षज्ञानवादिनो भट्टाः स्वात्मनि क्रियाविरोधाज्ज्ञानं स्वाप्रकाशकमभ्युपगच्छन्तः 15 प्रदीपस्य परं प्रकाशकमनङ्गीकुर्वन्तश्च कथं सद्भूतार्थभाषिणः । तथा ब्रह्माद्वैतवादिनोऽविद्याविवेकेन सन्मात्रं प्रत्यक्षात्प्रति-यन्तोऽपि न निषेधकं प्रत्यक्षमिति ब्रुवाणाः कथं न विरुद्ध-वादिनः, अविद्यानिरासेन सन्मात्रस्य ग्रहणात् ९ । तथा पूर्वो-त्तरमीमांसावादिनः कथमपि देवमनङ्गीकुर्वाणा अपि सर्वेऽपि 20 ब्रह्मविष्णुमहेश्वरादीन्देवान्पूजयन्तो ध्यायन्तो वा दृश्यन्ते । तदपि पूर्वापरविरुद्धम् १० इत्यादि ॥

अथवा ये ये बौद्धादिदर्शनेषु स्याद्वादाभ्युपगमाः प्राचीन-श्लोकव्याख्यायां प्रदर्शिताः, ते सर्वेऽपि पूर्वापरविरुद्धतयाचापि सर्वदर्शनेषु यथास्वं दर्शयितव्याः, यतो बौद्धादय उक्तप्रकारेण स्याद्वादं स्वीकुर्वन्तोऽपि तन्निरासाय च युक्तीः स्फोरयन्तः
5 पूर्वापरविरुद्धवादिनः कथं न भवेयुः । कियन्तो वा दधिमाष-भोजनात्कृष्णा विविच्यन्त इत्युपरम्यते ॥ चार्वाकस्तु वराक आत्मतदाश्रितधर्माधर्मानेकान्तस्वर्गापवर्गादिकं सर्वं कुग्रहि-लतयैवाप्रतिपद्यमानोऽवज्ञोपहत एव कर्तव्यः, न पुनस्तं प्रत्यनेकान्ताभ्युपगमोपन्यासेन पूर्वापरोक्तविरोधप्रकाशनेन वा
10 किमपि प्रयोजनं, सर्वस्य तदुक्तस्य सर्वलोकशास्त्रैः सह विरुद्धत्वात् । मूर्तेभ्यो भूतेभ्योऽमूर्तचैतन्योत्पादस्य विरुद्धत्वा-द्भूतेभ्य उत्पद्यमानस्यान्यत आगच्छतो वा चैतन्यस्या-दर्शनादात्मवच्चैतन्यस्याप्यैन्द्रियकप्रत्यक्षाविषयत्वादित्यादि, तदेवं बौद्धादीनामन्येषां सर्वेषामागमाः प्रत्युत स्वप्रणेतॄणामसर्वज्ञत्वमेव
15 साधयन्ति, न पुनः सर्वज्ञमूलतां, पूर्वापरविरुद्धार्थवचनोपे-तत्वात् । जैनमतं तु सर्वं पूर्वापरविरोधाभावात्स्वस्य सर्वज्ञ-मूलतामेवावेदयतीति स्थितम् ॥

अथानुक्तमपि किमपि लिख्यते । प्राप्यकारीण्येवेन्द्रिया-णीति कणभक्षाक्षपादमीमांसकसांख्याः समाख्यान्ति । चक्षुः-
20 श्रोत्रेतराणि तथेति ताथागताः । चक्षुर्वर्जानीति स्याद्वादाव-दातहृदयाः ॥ श्वेताम्बराणां संमतिर्नयचक्रवालः स्याद्वादरत्ना-करो रत्नाकरावतारिका तत्त्वार्थः प्रमाणवार्त्तिकं प्रमाण-

मीमांसा न्यायावतारोऽनेकान्तजयपताकानेकान्तप्रवेशो धर्मसंग्रहिणी प्रमेयरत्नकोशश्चेत्येवमादयोऽनेके तर्कग्रन्थाः । दिगम्बराणां तु प्रमेयकमलमार्तण्डो न्यायकुमुदचन्द्र आप्तपरीक्षाष्टसहस्री सिद्धान्तसारो न्यायविनिश्चयटीका चेत्यादयः ॥

इति श्रीतपागणनभोंगणदिनमणिश्रीदेवसुन्दरसूरिपदपद्मोपजीविश्रीगुणरत्नसूरिविरचितायां तर्करहस्यदीपिकायां षड्दर्शनसमुच्चयटीकायां जैनमतस्वरूपनिर्णयो नाम चतुर्थोऽधिकारः ॥

---

# पञ्चमोऽधिकारः ।

अथ वैशेषिकमतविवक्षया प्राह ।

**देवताविषयो भेदो नास्ति नैयायिकैः समम् ।**
**वैशेषिकाणां तत्त्वे तु विद्यतेऽसौ निदर्श्यते ॥ ५९ ॥**

अस्य लिङ्गवेषाचारदेवादि नैयायिकप्रस्तावे प्रसङ्गेन प्रागेव
5 प्रोक्तमम् । मुनिविशेषस्य कापोतीं वृत्तिमनुष्ठितवतो रथ्यानिप-
तितांस्तण्डुलकणानादायादाय कृताहारस्याहारनिमित्तात्कणाद
इति संज्ञाजनि । तस्य कणादस्य मुनेः पुरः शिवेनोलूकरूपेण मत-
मेतत्प्रकाशितम् । तत औलूक्यं प्रोच्यते । पशुपतिभक्तत्वेन पाशु-
पतं प्रोच्यते । कणादस्य शिष्यत्वेन वैशेषिकाः काणादा भण्यन्ते ।
10 आचार्यस्य च प्रागभिधानोपरिकर इति नाम समाम्नायते ॥

अथ प्रस्तुतं प्रस्तूयते । देव एव देवता । तद्विषयो भेदो
वैशेषिकाणां नैयायिकैः समं नास्ति । एतेन यादृग्विशेषण
ईश्वरो देवो नैयायिकैरभिप्रेतः, तादृग्विशेषणः स एव वैशेषि-
काणामपि देव इत्यर्थः । तत्त्वे तु तत्त्वविषये पुनर्विद्यते भेदः ।
15 तत्त्वविषयो भेदो निदर्श्यते प्रदर्श्यते । तमेवाह ।

**द्रव्यं गुणास्तथा कर्म सामान्यं च चतुर्थकम् ।**
**विशेषसमवायौ च तत्त्वषट्कं तु तन्मते ॥ ६० ॥**

द्रव्यं प्रथमं तत्त्वं, गुणो द्वितीयम् । तथाशब्दो भेदान्तर-
सूचने । कर्म तृतीयं, सामान्यं च चतुर्थमेव चतुर्थकम् । स्वार्थे

कप्रत्ययः। विशेषसमवायौ च पञ्चमषष्ठे तत्त्वे। उभयत्र चकारौ समुच्चयार्थौ। तुशब्दस्यावधारणार्थत्वे तत्त्वषट्कमेव नान्यूनाधिकं षडेव पदार्था इत्यर्थः। तन्मते वैशेषिकमते। अत्र पदार्थषट्के द्रव्याणि गुणाश्च केचिन्नित्या एव केचित्त्वनित्याः, कर्मानित्यमेव, सामान्यविशेषसमवायास्तु नित्या एवेति। केचित्त्वभावं सप्तमं 5 पदार्थमाहुः॥

अथ द्रव्यभेदानाह।

**तत्र द्रव्यं नवधा भूजलतेजोऽनिलान्तरिक्षाणि।**
**कालदिगात्ममनांसि च गुणाः पुनः पञ्चविंशतिधा॥६१॥**

तत्र तेषु षट्सु पदार्थेषु द्रव्यं नवधा। व्यवच्छेदफलं 10 वाक्यमिति न्यायान्नवधैव न तु न्यूनाधिकप्रकारम्। अत्र द्रव्यमिति जात्यपेक्षमेकवचनम्। एवं प्रागग्रे च ज्ञेयम्। ततो नवैव द्रव्याणीत्यर्थः। एतेन छायातमसी आलोकाभावरूपत्वान्न द्रव्ये भवत इत्युक्तम्। भूः पृथिवी काठिन्यलक्षणा मृत्पाषाणवनस्पतिरूपा। जलमापः, तच्च सरित्समुद्रकरकादिगतम्। 15 तेजोऽग्निः, तच्च चतुर्धा, भौमं काष्ठेन्धनप्रभवं, दिव्यं सूर्यविद्युदादिजं, आहारपरिणामहेतुरौदर्यं, आकारजं च सुवर्णादि। अनिलो वायुः। एतानि चत्वार्यनेकविधानि। अन्तरिक्षमाकाशं, तच्चैकं नित्यममूर्तं विभु च द्रव्यम्। विभुशब्देन विश्वव्यापकम्। इदं च शब्देन लिङ्गेनावगम्यते, आकाश- 20 गुणत्वाच्छब्दस्य। इत्थं भूजलतेजोनिलान्तरिक्षाणि। कालः

परापरव्यतिकरयौगपद्यायौगपद्यचिरचिप्रप्रत्ययलिङ्गो द्रव्यम् । तथाहि । परः पितापरः पुत्रो युगपद्युगपद्वा चिरं चिप्रं कृतं करिष्यते वेति यत्परापरादिज्ञानं तदादि क्रियाद्रव्यव्यतिरिक्तपदार्थनिबन्धनं, तत्प्रत्ययविलक्षणत्वात्, घटादिप्रत्ययवत् । 5 योऽस्य हेतुः स पारिभाष्यात्कालः, स चैको नित्योऽमूर्तो विभुर्द्रव्यं च । दिगपि द्रव्यमेका नित्यामूर्ता विभुश्च । मूर्तेष्वेव हि द्रव्येषु मूर्तं द्रव्यमवधिंकृत्वेदमस्मात्पूर्वेण दक्षिणेन पश्चिमेनोत्तरेण पूर्वदक्षिणेन दक्षिणापरेणापरोत्तरेणोत्तरपूर्वेणाधस्तादुपरिष्टादित्यमी दशप्रत्यया यतो भवन्ति, स दिगिति । 10 एतस्याश्चैकत्वेऽपि प्राच्यादिभेदेन नानात्वं कार्यविशेषाद्व्यवस्थितम् । आत्मा जीवोऽनेको नित्योऽमूर्तो विभुर्द्रव्यं च । मनश्चित्तं, तच्च नित्यं द्रव्यमणुमात्रमनेकमाशुसंचारि प्रतिशरीरमेकं च । युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् । आत्मनो हि सर्वगतत्वादयुगपदनेकेन्द्रियार्थसंनिधाने सत्यपि क्रमेणैव ज्ञानो- 15 त्पत्त्युपलम्भादनुमीयते । आत्मेन्द्रियार्थसंनिकर्षेभ्यो व्यतिरिक्तं कारणान्तरं मनोऽस्तीति, यस्य संनिधानाज्ज्ञानानामुत्पत्तिरसंनिधानाच्चानुत्पत्तिरिति । तस्य च मनसो मृतशरीरान्निर्गतस्य मृतशरीरप्रत्यासन्नमदृष्टवशादुपजातक्रियैरणुभिर्द्व्यणुकादिक्रमेणारब्धमतिसूक्ष्ममनुपलब्धियोग्यं शरीरं संक्रम्यैव स्वर्गादौ 20 गतस्य स्वर्गाद्युपभोग्यशरीरेण संबन्धो भवति । केवलस्य त्वेतावद्दूरंगतिर्न स्यात् । तच्च मरणजन्मनोरान्तरालं गतं शरीरं मनसः स्वर्गनारकादिदेशं प्रतिवहनधर्मकत्वादातिवाहिकमित्युच्यते ।

ततो द्वन्द्वे कालदिगात्ममनांसि । चः समुच्चये । तत्र पृथिव्याप-
स्तेजोवायुरित्येतच्चतुःसंख्यं द्रव्यं प्रत्येकं नित्यानित्यभेदाद्द्विप्रका-
रम् । तत्र परमाणुरूपं नित्यं सदकारणवन्नित्यमिति वचनात् ।
तदारब्धं तु द्व्यणुकादिकार्यद्रव्यमनित्यम् । आकाशादिकं
नित्यमेव, अनुत्पत्तिमत्त्वात् । एषां च द्रव्यत्वाभिसंबन्धाद्द्रव्य- 5
रूपता । द्रव्यत्वाभिसंबन्धश्च द्रव्यत्वसामान्योपलक्षितः समवायः ।
तत्समवेतं वा सामान्यम् । एतच्च द्रव्यत्वाभिसंबन्धादिकमित-
रेभ्यो गुणादिभ्यो व्यवच्छेदकमेषां लक्षणम् । एवं पृथिव्यादि-
भेदानामपि पाषाणादीनां पृथिवीत्वाभिसंबन्धादिकं लक्षण-
मितरेभ्योऽबादिभ्यो भेदव्यवहारहेतुर्द्रव्यत्वम् । अभेदवतां 10
त्वाकाशकालदिग्द्रव्याणामनादितच्छब्दवाच्यता द्रष्टव्या । इदं
च नवविधमपि द्रव्यं सामान्यतो द्वेधा, अद्रव्यं द्रव्यं अनेक-
द्रव्यं च द्रव्यम् । तत्राद्रव्यमाकाशकालदिगात्मनः परमाणवः
कारणद्रव्यानारब्धत्वात् । अनेकद्रव्यं तु द्व्यणुकादिस्कन्धाः ।
तत्र च द्वाभ्यां परमाणुभ्यां कार्यद्रव्य आरब्धेऽणुरिति व्यपदेशः, 15
परमाणुद्वयारब्धस्य द्व्यणुकस्यापरमाणुत्वात् । त्रिचतुरैः परमाणु-
भिरारब्धस्यापि कार्यद्रव्यस्याणुपरिमाणतैव स्यात्, परं द्व्यणुक-
व्यपदेशो न स्यात् । त्रिभिर्द्व्यणुकैश्चतुर्भिर्वारब्धे त्र्यणुकमिति-
व्यपदेशः, न तु द्वाभ्यां द्व्यणुकाभ्यामारब्धे, द्वाभ्यामारब्धस्य
ह्युपलब्धिनिमित्तं महत्त्वं न स्यात् । त्र्यणुकं च द्रव्यमुपलब्धि- 20
योग्यमिष्यते । ततश्चापरारब्धत्वे ऽपरापरद्रव्योत्पत्तिर्ज्ञेया ॥
गुणः पुनः पञ्चविंशतिधा स्पष्टम् ॥

गुणस्य पञ्चविंशतिविधत्वमेवाह ।

**स्पर्शरसरूपगन्धाः शब्दः संख्या विभागसंयोगौ ।**
**परिमाणं च पृथक्त्वं तथा परत्वापरत्वे च ॥ ६२ ॥**
**बुद्धिः सुखदुःखेच्छाधर्माधर्मप्रयत्नसंस्काराः ।**
**द्वेषः स्नेहगुरुत्वे द्रवत्ववेगौ गुणा एते ॥ ६३ ॥**

युग्मम् ॥ स्पर्शस्त्वगिन्द्रियग्राह्यः पृथिव्युदकज्वलनपवनवृत्तिः १ । रसो रसनेन्द्रियग्राह्यः पृथिव्युदकवृत्तिः २ । चक्षुर्ग्राह्यं रूपं पृथिव्युदकज्वलनवृत्ति । तच्च रूपं जलपरमाणुषु तेजःपरमाणुषु वायुपरमाणुषु च नित्यं, पार्थिवपरमाणुरूपस्य 10 त्वग्निसंयोगो विनाशकः । सर्वकार्येषु च कारणरूपपूर्वकं रूपमुत्पद्यते, उत्पन्नेषु हि द्व्यणुकादिकार्येषु पश्चात्तच्च रूपोत्पत्तिः, निराश्रयस्य कार्यरूपस्यानुत्पादात् । तथा कार्यरूपविनाशस्याश्रयविनाश एव हेतुः । पूर्वं हि कार्यद्रव्यस्य नाशः, तदनु च रूपस्य, आशुभावाच्च क्रमस्याग्रहणमिति ३ । गन्धो घ्राणग्राह्यः 15 पृथिवीवृत्तिः, स्पर्शादिषु गुणत्वे सति त्वगिन्द्रियग्राह्यादिकं लक्षणमितरव्यवच्छेदकम् ४ । शब्दः श्रोत्रेन्द्रियग्राह्यो गगनवृत्तिः क्षणिकश्च । श्रोत्रेन्द्रियं चाकाशात्मकम् । अथाकाशे निरवयव इदमात्मीयं श्रोत्रमिदं च परकीयमिति विभागः कथमिति चेत् । उच्यते । यदीयधर्माधर्माभिसंस्कृतकर्णशष्कु- 20 ल्यवरुद्धं यन्नभस्तत्तस्य श्रोत्रमिति विभागः । अत एव नाभिकादिरन्तरेण न शब्दोपलम्भः संजायते । तत्कर्णशष्कुली-

विघाताद्बाधिर्यादिकं च व्यवस्थाप्यत इति ५ । संख्या त्वेकादि-
व्यवहारहेतुरेकत्वादिलक्षणा । सा पुनरेकद्रव्या चानेकद्रव्या च ।
तत्रैकसंख्यैकद्रव्या, अनेकसंख्या तु द्वित्वादिसंख्या । तत्रैक-
द्रव्यायाः सलिलादिपरमाण्वादिगतरूपादीनामिव नित्यानित्य-
त्वनिष्पत्तयः । अनेकद्रव्यायास्त्वेकत्वेभ्यो ऽनेकविषयबुद्धिसहि- 5
तेभ्यो निष्पत्तिः । अपेक्षाबुद्धिविनाशाच्च विनाशः क्वचित्त्वाश्रय-
विनाशादिति ६ । प्राप्तिपूर्विका ह्यप्राप्तिर्विभागः, अप्राप्ति-
पूर्विका च प्राप्तिः संयोगः । एतौ च द्रव्येषु यथाक्रमं विभक्तसंयुक्त-
प्रत्ययहेतू । अन्यतरोभयकर्मजौ विभागसंयोगौ च यथाक्रमम् ।
८-७ । परिमाणव्यवहारकारणं परिमाणम् । तच्चतुर्विधं, महदणु 10
दीर्घं ह्रस्वं च । तत्र महद्द्विविधं, नित्यमनित्यं च । नित्य-
माकाशकालदिगात्मसु परममहत्त्वम् । अनित्यं त्र्यणुकादिषु
द्रव्येषु । अण्वपि नित्यानित्यभेदाद्द्विविधम् । परमाणुमनःसु
पारिमाण्डल्यलक्षणं नित्यम् । अनित्यं द्व्यणुक एव । बदराम-
लकबिल्वादिषु क्रमेण यथोत्तरं महत्त्वस्याणुत्वस्य च व्यवहारो 15
विभक्तोऽवसेयः, आमलकादिषूभयस्यापि व्यवहारात् । एव-
मिक्षौ समिद्वंशाद्यपेक्षया ह्रस्वत्वदीर्घत्वयोर्भाक्तत्वं ज्ञेयम् । ननु
महद्दीर्घयोस्त्र्यणुकादिषु वर्तमानयोर्द्व्यणुके चाणुत्वह्रस्वत्वयोः कोः
विशेषः । महत्सु दीर्घमानीयतां दीर्घेषु महदानीयतामिति
व्यवहारभेदप्रतीतेरस्ति तयोः परस्परतो भेदः । अणुत्वह्रस्व- 20
त्वयोस्तु विशेषो योगिनां तद्दर्शिनामध्यक्ष एव ८ । संयुक्तमपि
द्रव्यं यद्वशादन्येदं पृथगिति प्रत्ययोद्भियते, तदपोद्धारव्यवहार-

कारणं पृथक्त्वम् १० । इदं परमिदमपरमिति यतोऽभिधान-
प्रत्ययौ भवतः, तद्यथाक्रमं परत्वमपरत्वं च । द्वितयमप्येतत्,
दिक्कृतं कालकृतं च । तत्र दिक्कृतस्येत्थमुत्पत्तिः । एकस्यां
दिशि स्थितयोरेकस्य द्रष्टुरपेक्षया सन्निकृष्टमवधिं कृत्वैतस्मा-
5 द्विप्रकृष्टस्य परेण दिक्प्रदेशेन योगात्परत्वमुत्पद्यते, विप्रकृष्टं
चावधिं कृत्वैतस्मात्सन्निकृष्टस्यापरेण दिक्प्रदेशेन योगादपरत्व-
मुत्पद्यते । कालकृतं त्वेवमुत्पद्यते । वर्तमानकालयोरनियत-
दिग्देशसंयुक्तयोर्युवस्थविरयोर्मध्ये युवानमवधिं कृत्वा चिर-
कालीनस्य स्थविरस्य परेण कालप्रदेशेन योगात्परत्वमुत्पद्यते,
10 स्थविरं चावधिं कृत्वाल्पकालीनस्य यूनोऽपरेण कालप्रदेशेन
योगादपरत्वमुत्पद्यते । ११-१२ । बुद्धिर्ज्ञानान्तरग्राह्यम् ।
सा द्विविधा, विद्याविद्या च । तत्राविद्या चतुर्विधा संशयवि-
पर्ययानध्यवसायस्वप्नलक्षणा । विद्यापि चतुर्विधा प्रत्यक्षलैङ्गि-
कस्मृत्यार्षलक्षणा । प्रत्यक्षलैङ्गिके प्रमाणाधिकारे व्याख्यास्येते ।
15 अतीतविषया स्मृतिः । सा च गृहीतग्राहित्वान्न प्रमाणम् ।
ऋषीणां व्यासादीनामतीतादिष्वतीन्द्रियेष्वर्थेषु धर्मादिषु यत्प्रा-
तिभं तदार्षम् । तच्च प्रस्तारेणर्षीणां, कदाचिदेव तु लौकि-
कानां, यथा कन्यका ब्रवीति "श्वो मे भ्रातागन्तेति हृदयं
मे कथयति" इति । आर्षं च प्रत्यक्षविशेषः १३ । अनुग्रह-
20 लक्षणं सुखम् १४ । आत्मन उपघातस्वभावं दुःखं, तच्चामर्ष
दुःखानुभवविच्छायताहेतुः १५ । स्वार्थं परार्थं चाप्राप्तप्रार्थन-
मिच्छा । तस्याश्च कामोऽभिलाषो रागः संकल्पः कारुण्यं

वैराग्यं वस्त्वनिच्छा गूढभाव इत्यादयो भेदाः १६। कर्तृफल-दाय्यात्मगुण आत्ममनःसंयोगजः स्वकार्यविरोधी धर्माधर्म-रूपतया भेदवान् परोक्षो दृष्टाख्यो गुणः। तत्र धर्मः पुरुष-गुणः कर्तुः प्रियहितमोक्षहेतुरतीन्द्रियोऽन्त्यसुखसंविज्ञानवि-रोधी। अन्त्यस्यैव सुखस्य सम्यग्विज्ञानेन धर्मो नाश्यते, अन्त्यसुखकालं यावत् धर्मस्यावस्थानात्। स च पुरुषान्तःकरण-संयोगविशुद्धाभिसंधिजो वर्णाश्रमिणां प्रतिनियतसाधननि-मित्तः। साधनानि तु श्रुतिस्मृतिविहितानि सामान्यतोऽहिंसा-दीनि, विशेषतस्तु ब्राह्मणादीनां पृथक्पृथग्यजनाध्ययनादीनि ज्ञातव्यानि १७। अधर्मोऽप्यात्मगुणः कर्तुरहितः प्रत्यवाय-हेतुरतीन्द्रियोऽन्त्यदुःखसंविज्ञानविरोधी १८। प्रयत्न उत्साहः। स च सुप्तावस्थायां प्राणापानप्रेरकः प्रबोधकालेऽन्तःकरण-स्येन्द्रियान्तरप्राप्तिहेतुर्हिताहितप्राप्तिपरिहारोद्यमः शरीर-विधारकश्च १९। संस्कारो द्वेधा, भावना स्थितिस्थापकश्च। भावनाख्य आत्मगुणो ज्ञानजो ज्ञानहेतुश्च दृष्टानुभूतश्रुतेष्वर्थेषु स्मृतिप्रत्यभिज्ञानकार्योन्नीयमानसद्भावः। स्थितिस्थापकस्तु मूर्ति-मद्द्रव्यगुणः। स च घनावयवसंनिवेशविशिष्टं स्वमाश्रयं कालान्तरस्थायिनमन्यथाव्यवस्थितमपि प्रयत्नतः पूर्ववद्यथावस्थितं स्थापयतीति स्थितिस्थापक उच्यते। दृश्यते तालपत्रादेः प्रभूततरकालसंवेष्टितस्य प्रसार्यमुक्तस्य पुनस्तथैवावस्थानं संस्कार-वशात्। एवं धनुःशाखाशृङ्गदन्तादिषु भुग्नापवर्तितेषु च वस्त्रादिषु तस्य कार्यं परिस्फुटमुपलभ्यते २०। प्रज्वलनात्मको

द्वेषः, यस्मिन् सति प्रज्वलितमिवात्मानं मन्यते। द्रोहः क्रोधो मन्युरक्षमामर्ष इति द्वेषभेदाः २१। स्नेहोऽपां विशेषगुणः संग्रहमृजादिहेतुः। अस्यापि गुरुत्ववत् नित्यानित्यत्वनिष्पत्तयः २२। गुरुत्वं जलभूम्योः पतनकर्मकारणमप्रत्यक्षम्।
5 तस्यावादिपरमाणुरूपादिवत् नित्यानित्यत्वनिष्पत्तयः २३। द्रवत्वं स्यन्दनकर्मकारणं त्रिद्रव्यवृत्तिः। तद्द्वेधा, सहजं नैमित्तिकं च। सहजमपां द्रवत्वम्। नैमित्तिकं तु पृथिवीतेजसोरग्निसंयोगजं यथा सर्पिषः सुवर्णत्रप्वादेश्चाग्निसंयोगाद्द्रवत्वमुत्पद्यते २४। वेगः पृथिव्यप्तेजोवायुमनःसु मूर्तिमद्द्रव्येषु
10 प्रयत्नाभिघातविशेषापेक्षात्कर्मणः समुत्पद्यते नियतदिक्क्रियाकार्यप्रबन्धहेतुः स्पर्शवद्द्रव्यसंयोगविरोधी च। तत्र शरीरादिप्रयत्नाविर्भूतकर्मोत्पन्नवेगवशादिषोरपांतरालेऽपततः स नियतदिक्क्रियाकार्यसंबन्धोन्नीयमानसद्भावः। लोष्टाद्यभिघातोत्पन्नकर्मोत्पाद्यस्तु शाखादौ वेगः। केचित्तु संस्कारस्य
15 त्रिविधस्य भेदतया वेगं प्राहुः। तन्मते चतुर्विंशतिरेव गुणाः, शौर्योदार्यकारुण्यदाक्षिण्यौन्नत्यादीनां च गुणानामेष्वेव प्रयत्नबुद्ध्यादिषु गुणेष्वन्तर्भावान्नाधिक्यम् २५॥

स्पर्शादीनां गुणानां सर्वेषां गुणत्वाभिसंबन्धो द्रव्याश्रितत्वं निष्क्रियत्वमगुणवत्त्वं च। तथा स्पर्शरसगन्धरूपपरत्वापरत्वद्रवत्व-
20 स्नेहवेगा मूर्तगुणाः। बुद्धिसुखदुःखेच्छाधर्माधर्मप्रयत्नभावनाद्वेषशब्दा अमूर्तगुणाः। संख्यापरिमाणपृथक्त्वसंयोगविभागा उभयगुणा इत्यादि गुणविषयं विशेषस्वरूपं स्वयं समवसेयम्॥

अथ कर्मव्याचिख्यासुराह ।

**उत्क्षेपावक्षेपावाकुञ्चनकं प्रसारणं गमनम् ।**
**पञ्चविधं कर्मैतत्परापरे द्वे तु सामान्ये ॥ ६४ ॥**

उत्क्षेप ऊर्ध्वं क्षेपणं मुशलादेरूर्ध्वनयनमुत्क्षेपणं कर्मेत्यर्थः । तद्विपरीतो ऽवक्षेपोऽधोनयनमित्यर्थः । ऋजुनोऽङ्गुल्यादिद्रव्यस्य कुटिलत्वकारणं कर्माकुञ्चनम् । स्वार्थे कप्रत्यय आकुञ्चनकम् । येन वक्रोऽवयव्यृजुः संपद्यते तत्कर्म प्रसारणम् । यदनियतदिग्देशैः संयोगविभागकारणं तद्गमनम् । अनियतग्रहणेन भ्रमणपतनस्यन्दनरेचनादीनामपि गमन एवान्तर्भावो विभावनीयः । पञ्चविधमेव कर्म क्रियारूपमेतदनन्तरोक्तम् ॥ 10

अथ सामान्यमुच्यते । तुशब्दस्य व्यस्तसंबन्धात्सामान्ये तु द्वे परापरे परमपरं च द्विविधं सामान्यमित्यर्थः ॥

अथ परापरे व्याख्याति ।

**तत्र परं सत्ताख्यं द्रव्यत्वाद्यपरमथ विशेषस्तु ।**
**निश्चयतो नित्यद्रव्यवृत्तिरन्त्यो विनिर्दिष्टः ॥ ६५ ॥** 15

तत्र तयोः परापरयोर्मध्ये परं सामान्यं सत्ताख्यम् । इदं सदिदं सदित्यनुगताकारज्ञानकारणं सत्तासामान्यमित्यर्थः । तच्च त्रिषु द्रव्यगुणकर्मसु पदार्थेषु सत्सदित्यनुवृत्तिप्रत्ययस्यैव कारणत्वात्सामान्यमेवोच्यते, न तु विशेषः । अथापरमुच्यते "द्रव्यत्वादि" । द्रव्यत्वं गुणत्वं चापरं सामान्यम् । तत्र नवसु 20
द्रव्येषु द्रव्यं द्रव्यमितिबुद्धिहेतुर्द्रव्यत्वम् । एवं गुणेषु गुणत्वबुद्धि-

विधायि गुणत्वं कर्मसु च कर्मत्वबुद्धिकारणं कर्मत्वम्। तच्च द्रव्यत्वादिकं स्वाश्रयेषु द्रव्यादिष्वनुवृत्तिप्रत्ययहेतुत्वात्सामान्यमप्युच्यते, स्वाश्रयस्य च विजातीयेभ्यो गुणादिभ्यो व्यावृत्तिप्रत्ययहेतुतया विशेषोऽप्युच्यते। ततोऽपरं सामान्यमुभयरूपत्वा
5 त्सामान्यविशेषसंज्ञां लभते। अपेक्षाभेदादेकस्यापि सामान्यविशेषभावो न विरुध्यते। एवं पृथिवीत्वस्पर्शत्वोत्क्षेपणत्वघटत्वादीनामप्यनुवृत्तिहेतुत्वात्सामान्यविशेषभावः सिद्ध इति। अत्र सत्तायोगात्सत्त्वं यदिष्यते तद्द्रव्यगुणकर्मस्वेव न पुनराकाशादिषु, आकाशकालदिक्षु हि वस्तुस्वरूपमेवास्तित्वं स्वीक्रियते व्यक्त्य-
10 क्यादिकारणैः। तथा चोदयनः।

व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः।
रूपहानिरसंबन्धो जातिबाधकसंग्रहः॥ १॥

अस्य व्याख्या। व्यक्तेरभेद एकमनेकवर्ति सामान्यम्। आकाशे व्यक्तेरभेदान्न जातित्वम् १। पृथिवीत्वे जातौ यदि
15 भूमित्वमुच्यते, तदा तुल्यत्वम् २। परमाणुषु जातित्वेऽङ्गीकृते पार्थिवाप्यतैजसवायवीयत्वयोगात्संकरः ३। सामान्ये यदि सामान्यमङ्गीक्रियते, तदा मूलक्षतिकारिणी अनवस्थितिः ४। विशेषेषु यदि सामान्यं स्वीक्रियते, तदा विशेषस्य रूपहानिः ५। यदि समवाये जातित्वमङ्गीक्रियते, तदा संबन्धाभावः। केन
20 हि संबन्धेन तत्र सत्ता संबध्यते, समवायान्तराभावादिति ६॥

परे पुनः प्राहुः। सामान्यं त्रिविधं, महासामान्यं सत्तासामान्यं सामान्यविशेषसामान्यं च। तत्र महासामान्यं षट्स्वपि

पदार्थेषु पदार्थत्वबुद्धिकारि। सत्तासामान्यं त्रिपदार्थसिद्धबुद्धिविधायि। सामान्यविशेषसामान्यं तु द्रव्यत्वादि॥ अन्ये त्वाचक्षते। त्रिपदार्थसत्कारी सत्ता, सामान्यं द्रव्यत्वादि, सामान्यविशेषः पृथिवीत्वादिरिति। लक्षणभेदादेतेषां सत्तादीनां द्रव्यगुणकर्मभ्यः पदार्थान्तरत्वं सिद्धम्। अथेत्यानन्तर्ये। विशेषस्तु निश्चयतस्तत्त्ववृत्तित एव विनिर्दिष्टः, न पुनर्घटपटकटादिरिव व्यवहारतो विशेषः। तुशब्दोऽनन्तरोक्तसामान्यादस्यात्यन्तव्यावृत्तिबुद्धिहेतुत्वेन भृशं वैलक्षण्यं सूचयति। यत एव निश्चयतो विशेषः, तत एव नित्यद्रव्यवृत्तिरन्त्य इति। तत्र नित्यद्रव्येषु विनाशारम्भरहितेष्वणुकाशकालदिगात्ममनःसु वृत्तिर्वर्तनं यस्य, स नित्यद्रव्यवृत्तिः। तथा परमाणूनां जगद्विनाशारम्भकोटिभूतत्वात् मुक्तात्मनां मुक्तमनसां च संसारपर्यन्तरूपत्वादन्त्यत्वम्। अन्तेषु भवोऽन्त्यो विशेषो विनिर्दिष्टः प्रोक्तः, अन्तेषु स्थितस्य विशेषस्य स्फुटतरमालक्ष्यमाणत्वात्। वृत्तिस्तु तस्य सर्वस्मिन्नेव परमाण्वादौ नित्ये द्रव्ये विद्यत एव। अत एव नित्यद्रव्यवृत्तिरन्त्य इत्युभयपदोपादानम्। विशेषश्च द्रव्यं द्रव्यं प्रत्येकैक एव वर्तते नानेकः, एकेनैव विशेषेण स्वाश्रयस्य व्यावृत्तिसिद्धेरनेकविशेषकल्पनावैयर्थ्यात्। सर्वनित्यद्रव्याण्याश्रित्य पुनर्विशेषाणां बहुत्वेऽपि जातावेकवचनम्। तथा च प्रशस्तकारः। अन्तेषु भवा अन्त्याः, स्वाश्रयस्य विशेषकत्वात् विशेषाः, विनाशारम्भरहितेषु नित्यद्रव्येष्वण्वाकाशकालदिगात्ममनःसु प्रतिद्रव्यमेकशो वर्तमाना अत्यन्तव्यावृत्तिबुद्धिहेतवः। यथा-

स्मदादीनां गवादिष्वश्वादिभ्यस्तुल्याकृतिगुणक्रियावयवसंयोग-
निमित्ता प्रत्ययव्यावृत्तिर्दृष्टा यथा गौः शुक्लः शीघ्रगतिः पीन-
ककुद्मान् महाघण्ट इति तथास्मद्विशिष्टानां योगिनां नित्येषु
तुल्याकृतिगुणक्रियेषु परमाणुषु मुक्तात्ममनःसु चान्यनिमित्ता-
5 संभवाद्येभ्यो निमित्तेभ्यः प्रत्याधारं विलक्षणोऽयमिति प्रत्ययव्या-
वृत्तिर्देशकालविप्रकृष्टे च परमाणौ स एवायमिति प्रत्यभिज्ञानं
च भवति तेऽन्त्या विशेषा इति ॥ अन्ये तु नित्यद्रव्यवृत्तयो
ऽन्त्या विशेषा इति सूत्रमेवं व्याचक्षते । नित्यद्रव्येष्वेव वृत्तिरेव
येषामिति सावधारणं वाक्यमेतत् । नित्यद्रव्यवृत्तय इति
10 पदमन्त्यपदस्य विवरणमेतत् । तथा चोक्तम् । नित्यद्रव्याणु-
त्पत्तिविनाशयोरन्ते व्यवस्थितत्वादन्तशब्दवाच्यानि । तेषु भवा-
स्तद्वृत्तयो विशेषा अन्त्या इत्याख्यायन्त इति । अमी चात्यन्त-
व्यावृत्तिहेतवो द्रव्यादिभ्यो वैलक्षण्यात्पदार्थान्तरम् ॥

अथ समवायं स्वरूपतो निरूपयति ।

15 **य इहायुतसिद्धानामाधाराधेयभूतभावानाम् ।**
**संबन्ध इहप्रत्ययहेतुः स हि भवति समवायः ॥६६॥**

केचिद्धातुपारायणकृतो यु अमिश्रणे इति पठन्ति । तत
एवायुतसिद्धानामित्यादि वैशेषिकीयसूत्रे । अयुतसिद्धानाम-
पृथक्सिद्धानामिति व्याख्यातम् । तथा लोकेऽप्यभेदाभिधायी
20 युतशब्दः प्रयुज्यमानो दृश्यते । द्वावपि भ्रातरावेतौ युतौ
जातावित्यादि । ततोऽयमत्रार्थः । "इह" वैशेषिकदर्शने "अयुत-

सिद्धानामपृथक्सिद्धानां तन्तुषु समवेतपटवत् पृथगाश्रयाना-
मिति यावत् आधाराश्चाधेयाश्च आधाराधेया ते भवन्ति स्म
"आधाराधेयभूताः", ते च ते भावाश्चार्थाः, तेषां यः "संबन्ध
इहप्रत्ययहेतुः" इह तन्तुषु पट इत्यादेः प्रत्ययस्यासाधारणं
कारणं "स हि" स एव "भवति समवायः" संबन्धः। यतो हीह 5
तन्तुषु पट इह पटद्रव्ये गुणकर्मणी इह द्रव्यगुणकर्मसु सत्ता
इह द्रव्ये द्रव्यत्वं इह गुणे गुणत्वं इह कर्मणि कर्मत्वं इह द्रव्ये-
ष्वन्त्या विशेषा इत्यादि विशेषप्रत्यय उत्पद्यते, स पञ्चभ्यः पदार्थे-
भ्योऽर्थान्तरं समवाय इत्यर्थः। स चैको विभुर्नित्यश्च विज्ञेयः॥

तदेवं षट्पदार्थस्वरूपं प्ररूपितम्। संप्रति प्रमाणस्य 10
सामान्यतो लक्षणमाख्यायते। अर्थोपलब्धिहेतुः प्रमाणमिति।
अस्यायमर्थः। अव्यभिचारादिविशेषणविशिष्टार्थोपलब्धिजनि-
का सामग्री तदेकदेशो वा बोधरूपो वा ज्ञानप्रदीपादिः
साधकतमत्वात्प्रमाणम्। एतत्कार्यभूता वा यथोक्तविशेषण-
विशिष्टार्थोपलब्धिः प्रमाणस्य सामान्यलक्षणं, तथा स्वकारणस्य 15
प्रमाणाभासेभ्यो व्यवच्छिद्यमानत्वात्। इन्द्रियजत्वलिङ्गजत्वादि-
विशेषणविशेषिता सैवोपलब्धिः प्रमाणस्य विशेषलक्षणमिति॥

अथ प्रमाणसंख्यां प्राह।

**प्रमाणं च द्विधामीषां प्रत्यक्षं लैङ्गिकं तथा।**
**वैशेषिकमतस्यैष संक्षेपः परिकीर्तितः॥ ६७॥** 20

अमीषां वैशेषिकाणां प्रमाणं द्विधा द्विविधम्। चः पुनरर्थे।

कथमित्याह "प्रत्यक्षं"। तथेति समुच्चये। लिङ्गाज्जातं लैङ्गिकं च। तत्र प्रत्यक्षं द्वेधा, ऐन्द्रियं योगजं च। ऐन्द्रियं घ्राणरसनचक्षुस्त्वक्श्रोत्रमनःसन्निकर्षजमस्मदादीनां प्रत्यक्षम्। तद्द्वेधा, निर्विकल्पकं सविकल्पकं च। तत्र वस्तुस्वरूपालोचनमात्रं निर्वि-
5 कल्पकम्। तच्च न सामान्यमात्रं गृह्णाति, भेदस्यापि प्रतिभासनात्; नापि स्वलक्षणमात्रं सामान्याकारस्यापि संवेदनात् व्यक्त्यन्तरदर्शनेऽप्रतिसंधानाच्च; किं तु सामान्यं विशेषं चोभयमपि गृह्णाति। यदि परमिदं सामान्यमयं विशेष इत्येवं विविच्य न प्रत्येति, सामान्यविशेषसंबन्धिनोरनुवृत्तिव्यावृत्ति-
10 धर्मयोरग्रहणात्। सविकल्पकं तु सामान्यविशेषरूपतां विविच्य प्रत्येति, वस्त्वन्तरैः सममनुवृत्तिव्यावृत्तिधर्मौ प्रतिपद्यमानस्यात्मन इन्द्रियद्वारेण तथाभूतप्रतीत्युपपत्तेः। योगजमपि प्रत्यक्षं द्वेधा, युक्तानां प्रत्यक्षं वियुक्तानां च। तत्र युक्तानां समाधिमैकाग्र्यमाश्रितानां योगजधर्मबलादन्तःकरणे शरीराद्बहिर्निर्ग-
15 त्यातीन्द्रियार्थैः समं संयुक्ते सति यदतीन्द्रियार्थदर्शनं तद्युक्तानां प्रत्यक्षम्। ये चात्यन्तयोगाभ्यासोचितधर्मातिशयादसमाधिंप्राप्ता अप्यतीन्द्रियमर्थं पश्यन्ति, ते वियुक्ताः। तेषामात्ममन इन्द्रियार्थसन्निकर्षाद्देशकालस्वभावविप्रकृष्टार्थग्राहकं यत्प्रत्यक्षं तद्वियुक्तानां प्रत्यक्षम्। एतच्चोत्कृष्टयोगिनोऽवसेयं, योगिमात्रस्य
20 तदसंभवादिति। विस्तरस्तु न्यायकन्दलीतो विज्ञेयः। लैङ्गिकस्य पुनः स्वरूपमिदम्। लिङ्गदर्शनाद्यदव्यभिचारित्वादि-विशेषणं ज्ञानं तद्यतः परामर्शज्ञानोपलक्षितात्कारकसमूहाद्भवति

तल्लैङ्गिकमनुमानमिति यावत्। तच्चैवं भवति। अस्येदं कार्यं कारणं संयोगि समवायि विरोधि चेति लैङ्गिकम्। तत्र कार्यं कारणपूर्वकत्वेनोपलम्भादुपलभ्यमानं कारणस्य गमकं यथायं नदीपूरो वृष्टिकार्यो विशिष्टनदीपूरत्वात् पूर्वोपलब्धविशिष्टनदीपूरवत् १। कारणमपि कार्यजनकत्वेन पूर्वमुपलब्धेरुपलभ्यमानं कार्यस्य लिङ्गं यथा विशिष्टमेघोन्नतिर्वर्षकर्मणः २। तथा धूमोऽग्नेः संयोगी ३। समवायी चोष्णस्पर्शो वारिस्थं तेजो गमयतीति ४। विरोधी च यथाहिर्विस्फूर्जनविशिष्टो नकुलादेर्लिङ्गं वह्निर्वा शीताभावस्येति ५। "अस्येदं" इति सूत्रे च कार्यादीनामुपादानं लिङ्गनिदर्शनार्थं कृतं न पुनरेतावन्त्येव लिङ्गानीत्यवधारणार्थं, यतः कार्यादिव्यतिरिक्तान्यपि लिङ्गानि सन्ति, यथा चन्द्रोदयः समुद्रवृद्धेः कुमुदविकाशस्य च लिङ्गं न च चन्द्रोदयः समुद्रवृद्धिकुमुदविकाशौ च मिथः कार्यं कारणं वा भवन्ति, विशिष्टदिग्देशकालसंयोगात्कल्लोलपत्रविस्तारलक्षणानामुदयवृद्धिविकाशानां स्वस्वकारणेभ्य एवोत्पत्तेः। शरदि च जलस्य नैर्मल्यमगस्त्योदयस्य लिङ्गमित्यादि तत्सर्वं "अस्येदं" इति पदेन गृहीतं विज्ञेयम्। अस्य साध्यस्येदं संबन्धीति कृत्वा यद्यस्य देशकालाद्यविनाभूतं तत्तस्य लिङ्गमित्यर्थः। ततः "अस्येदं" इति सूत्रस्य नाव्यापकतेति। विशेषार्थिना तु न्यायकन्दली विलोकनीया। शब्दादीनां तु प्रमाणानामनुमान एवान्तर्भावात् कन्दलीकाराभिप्रायेणैतत्प्रमाणद्वितयमवोचदाचार्यः। व्योमशिवस्तु प्रत्यक्षानुमानशाब्दानि त्रीणि

प्रमाणानि प्रोचिवान्॥ उपसंहरन्नाह "वैशेषिकमतस्य" इत्यादि ।
वैशेषिकमतस्यैषोऽनन्तरोक्तः संक्षेपः परिकीर्तितः कथितः ॥

अथात्राप्यनुक्तं किंचिदुच्यते । व्योमादिकं नित्यम् । प्रदी-
पादि कियत्कालावस्थायि । बुद्धिसुखादिकं च क्षणिकम् ।
5 चैतन्यादयो रूपादयश्च धर्माः । आत्मादेर्घटादेश्च धर्मिणो
ऽत्यन्तं व्यतिरिक्ता अपि समवायसंबन्धेन संबद्धाः । स च
समवायो नित्यः सर्वगत एकश्च । सर्वगत आत्मा । बुद्धिसुख-
दुःखेच्छाधर्माधर्मप्रयत्नभावनाख्यसंस्कारद्वेषाणां नवानामात्मवि-
शेषगुणानामुच्छेदो मोक्षः । परस्परविभक्तौ सामान्यविशेषौ
10 द्रव्यपर्यायौ च प्रमाणगोचरः । द्रव्यगुणादिषु षट्सु पदार्थेषु
स्वरूपसत्त्वं वस्तुत्वनिबन्धनं विद्यते । द्रव्यगुणकर्मसु च सत्ता-
संबन्धो वर्तते सामान्यविशेषसमवायेषु च स नास्तीति ॥

षट्पदार्थी कणादकृता तद्भाष्यं प्रशस्तकरकृतं तट्टीका
कन्दली श्रीधराचार्यीया किरणावली तूदयनसंदृब्धा व्योमम-
15 तिर्व्योमशिवाचार्यविरचिता लीलावतीतर्कः श्रीवत्साचार्यीय
आत्रेयतन्त्रं चेत्यादयो वैशेषिकतर्काः ॥

इति श्रीतपागणनभोंगणदिनमणिश्रीदेवसुन्दरसूरिपदपद्मोप-
जीविश्रीगुणरत्नसूरिकृतायां तर्करहस्यदीपिकायां षड्दर्शन-
समुच्चयटीकायां वैशेषिकमतनिर्णयो नामा पञ्चमोऽधिकारः ॥

---

# षष्ठोऽधिकारः ।

अथ मीमांसकमतं जैमिनीयापराख्यं प्रोच्यते । जैमिनीया वेषेण सांख्या इवैकदण्डास्त्रिदण्डा धातुरक्तवाससो मृगचर्मोपवेशनाः कमण्डलुधरा मुण्डशिरसः संन्यासिप्रभृतयो द्विजाः । तेषां वेद एव गुरुर्न पुनरन्यो वक्ता गुरुः । त एव स्वयं तव संन्यस्तं संन्यस्तमिति भाषन्ते । यज्ञोपवीतं च प्रक्षाल्य त्रिर्जलं 5 पिबन्ति ॥ ते द्विधा एके याज्ञिकादयः पूर्वमीमांसावादिनः, अपरे तूत्तरमीमांसावादिनः । तत्र पूर्वमीमांसावादिनः कुकर्मविवर्जिनो यजनादिषट्कर्मकारिणो ब्रह्मसूत्रिणो गृहस्थाश्रमसंस्थिताः शूद्रान्नादिवर्जका भवन्ति । ते च द्वेधा भाट्टाः प्राभाकराश्च षट्पञ्चप्रमाणप्ररूपिणः । ये तूत्तरमीमांसावादिनः, 10 ते वेदान्तिनो ब्रह्माद्वैतमेव मन्यन्ते । "सर्वमेतदिदं ब्रह्म" इति भाषन्ते प्रमाणं च यथा तथा वदन्ति । एक एवात्मा सर्वशरीरेषूपलभ्यत इति जल्पन्ति । [एक एव हि भूतात्मा भूते व्यवस्थितः ॥

"एकधा बहुधा चैव दृश्यते जलचन्द्रवत्" । 15

इति वचनात् ।

"पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम्" ।

इति वचनाच्च । आत्मन्येव लयं मुक्तिमापद्यते न त्वपरां

कामपि मुक्तिं मन्यन्ते । ते च द्विजा एव भगवन्नामधेयास्तु-
र्धाभिधीयन्ते कुटीचर-बहूदक-हंस-परमहंस-भेदात् । तत्र
त्रिदण्डी सशिखो ब्रह्मसूत्री गृहत्यागी यजमानपरिग्रही
सकृत्पुत्रगृहे ऽश्नन् कुट्यां निवसन् कुटीचर उच्यते । कुटी-
5 चरतुल्यवेषो विप्रगेहनैराश्यभिक्षाशनो विष्णुजापपरो नदी-
नीरस्नायी बहूदकः कथ्यते । ब्रह्मसूत्रशिखाभ्यां रहितः कषा-
याम्बरदण्डधारी ग्रामे चैकरात्रं नगरे च त्रिरात्रं निवसन् विधू-
मेषु विगताग्निषु विप्रगेहेषु भिक्षां भुञ्जानस्तपःशोषितविग्रहो
देशेषु भ्रमन् हंसः समुच्यते । हंस एवोत्पन्नज्ञानश्चातुर्वर्ण्यगेह-
10 भोजी स्वेच्छया दण्डधार ईशानीं दिशं गच्छन् शक्तिहीन-
तायामनशनग्राही वेदान्तैकध्यायी परमहंसः समाख्यायते ।
एतेषु चतुर्षु परः परो ऽधिकः । एते च चत्वारो ऽपि केवल-
ब्रह्माद्वैतवादसाधनैकव्यसनिनः शब्दार्थयोर्निरासायानेका युक्तीः
स्फोरयन्तो ऽनिर्वाच्यतत्त्वे यथा व्यवतिष्ठन्ते तथा खण्डनतर्का-
15 दभियुक्तैरवसेयम् । नात्र तन्मतं वक्ष्यते । इह तु सामान्येन
शास्त्रकारः पूर्वमीमांसावादिमतमेव बिभणिषुरेवमाह ।

**जैमिनीयाः पुनः प्राहुः सर्वज्ञादिविशेषणः ।**
**देवो न विद्यते कोऽपि यस्य मानं वचो भवेत् ॥ ६८॥**

जैमिनीयास्तु ब्रुवते । सर्वज्ञादीनि विशेषाणि यस्य स
20 सर्वज्ञादिविशेषणः सर्वज्ञः सर्वदर्शी वीतरागः सृष्ट्यादिकर्ता
चेत्यादिविशेषणवान् कोऽपि प्रागुक्तदर्शनसंमतदेवानामेकतरो

ऽपि देवो दैवतं न विद्यते, यस्य देवस्य वचो वचनं मानं प्रमाणं भवेत्। प्रथमं तावद्देव एव वक्ता न वर्तते, कुतस्तत्प्रणीतानि वचनानि संभवेयुरिति भावः। तथाहि। पुरुषो न सर्वज्ञः, मानुषत्वात्, रथ्यापुरुषवत्। अथ किं करायमाणसुरासुरसेव्यमानता त्रैलोक्यसाम्राज्यसूचकच्छत्रचामरादिविभूत्यन्यथानुपपत्तिरस्ति सर्वज्ञे विशेष इति चेत्। न, मायाविभिरपि कीर्तिपूजालिप्सुभिरिन्द्रजालवशेन तत्प्रकटनात्। यदुक्तं लघूद्येनैव समन्तभद्रेण।

देवागमनभोयानचामरादिविभूतयः।
मायाविष्वपि दृश्यन्ते नातस्त्वमसि नो महान्॥१॥

अथ यथानादेरपि सुवर्णमलस्य क्षारमृत्पुटपाकादिप्रक्रियया विशोध्यमानस्य निर्मलत्वं, एवमात्मनो ऽपि निरन्तरज्ञानाद्यभ्यासेन विगतमलत्वात्सर्वज्ञत्वं किं न संभवेदिति मतिः, तदपि न। अभ्यासेन हि शुद्धेस्तारतम्यमेव भवेत्, न पुनः परमः प्रकर्षः। न हि नरस्य लङ्घनमभ्यासतस्तारतम्यवदृष्टमुपलभ्यमानं सकललोकविषयमुपलभ्यते। उक्तं च।

दशहस्तान्तरं व्योम्नो यो नामोत्प्लुत्य गच्छति।
न योजनशतं गन्तुं शक्तो ऽभ्यासशतैरपि॥२॥

अथ मा भून्मानुषस्य सर्वज्ञत्वं, ब्रह्मविष्णुमहेश्वरादीनां तु तदस्तु। ते हि देवाः, संभवत्यपि तेष्वतिशयसंपत्। यत्कुमारिलः।

अथापि दिव्यदेहत्वाद्ब्रह्मविष्णुमहेश्वराः।
कामं भवन्तु सर्वज्ञाः सार्वज्ञ्यं मानुषस्य किम्॥१॥ इति

तदपि न रागद्वेषमूलनिग्रहानुग्रहग्रस्तानां कामासेवनविह्व-
लानामसंभाव्यमिदमेषामिति । न च प्रत्यक्षं तत्साधकं संबद्धं
वर्त्तमानं च गृह्यते चक्षुरादिनेति वचनात् । न चानुमानं,
प्रत्यक्षदृष्ट एवार्थे तत्प्रवृत्तेः । न चागमः, सर्वज्ञस्यासिद्धत्वेन
5 तदागमस्यापि विवादास्पदत्वात् । न चोपमानं, तदपरस्यापि
सर्वज्ञस्याभावादेव । न चार्थापत्तिरपि, सर्वज्ञसाधकस्यान्यथा-
नुपपन्नपदार्थस्यादर्शनात् । ततः प्रमाणपञ्चकाप्रवृत्तेरभावप्रमा-
णगोचर एव सर्वज्ञः । प्रयोगश्चात्र । नास्ति सर्वज्ञः, प्रत्यक्षादि-
गोचरातिक्रान्तत्वात्, शशशृङ्गवदिति ॥

10 यदि न देवस्तद्वचनानि च न सन्ति, तर्हि कुतो ऽतीन्द्रियार्थज्ञानमित्याशंक्याह ।

**तस्मादतीन्द्रियार्थानां साक्षाद्द्रष्टुरभावतः ।**
**नित्येभ्यो वेदवाक्येभ्यो यथार्थत्वविनिश्चयः ॥ ६८ ॥**

तस्मात्ततः कारणात् कुतो हेतुत इत्याह । अतीन्द्रिया-
15 णामिन्द्रियविषयातीतपदार्थानामात्मधर्माधर्मकालस्वर्गनरकप-
रमाणुप्रभृतीनां साक्षात्स्पष्टप्रत्यक्षावबोधेन द्रष्टुर्ज्ञातुरभावतो
ऽसद्भावाद्धेतोः । नित्येभ्यो ऽप्रच्युतानुत्पन्नस्थिरैकस्वभावेभ्यो ऽव-
धारणस्येष्टविषयत्वाद्वेदवाक्येभ्य एव यथार्थत्वविनिश्चयः । अर्था-
नामनतिक्रमेण यथार्थं, तस्य भावो यथार्थत्वं यथावस्थितपदा-
20 र्थत्वं, तस्य विशेषेण निश्चयो भवति । नित्यत्वेनापौरुषेयेभ्यो
वेदवचनेभ्य एव यथावदतीन्द्रियाद्यर्थज्ञानं भवति, न पुनः

सर्वज्ञप्रणीतागमादिभ्यः, सर्वज्ञादीनामेवाभावादिति भावः। यथाऽऽह्लेत्।

अतीन्द्रियाणामर्थानां साक्षाद्द्रष्टा न विद्यते।
वचनेन हि नित्येन यः पश्यति स पश्यति ॥१॥

नन्वपौरुषेयाणां वेदानां कथमर्थपरिज्ञानमिति चेत्, 5
अव्यवच्छिन्नादिसंप्रदायेनेति ॥

अथैतदेव दृढयन्नाह।

**अत एव पुरा कार्यो वेदपाठः प्रयत्नतः।**
**ततो धर्मस्य जिज्ञासा कर्तव्या धर्मसाधनी ॥ ७० ॥**

अत एव सर्वज्ञाद्यभावादेव पुरा पूर्वं वेदपाठ ऋग्यजुः- 10
सामाथर्वणां वेदानां पाठः प्रयत्नतः कार्यः। ततः किं कर्तव्यमित्याह "ततो धर्मस्य" इति। ततो वेदपाठादनन्तरं धर्मस्य जिज्ञासा कर्तव्या। धर्मो ह्यतीन्द्रियः ; ततः स कीदृक्केन प्रमाणेन वा ज्ञास्यत इत्येवं ज्ञातुमिच्छा कार्या। सा कीदृशी। धर्मसाधनी धर्मसाधनस्योपायः ॥ 15

यतश्चैवं ततस्तस्य निमित्तं परीक्ष्यं निमित्तं च नोदना। निमित्तं हि द्विविधं जनकं ग्राहकं च। अत्र तु ग्राहकं ज्ञेयम्। एतदेव विशेषिततरं प्राह।

**नोदनालक्षणो धर्मो नोदना तु क्रियां प्रति।**
**प्रवर्तकं वचः प्राहुः स्वःकामोऽग्निं यथा यजेत् ॥ ७१ ॥** 20

नोद्यन्ते प्रेर्यन्ते श्रेयःसाधकद्रव्यादिषु प्रवर्त्यन्ते जीवा अन-
येति नोदना वेदवचनरूपा प्रेरणेत्यर्थः। धर्मो नोदनया लक्ष्यते
ज्ञायत इति नोदनालक्षणः। धर्मो ह्यतीन्द्रियत्वेन नोदयैव
लक्ष्यते नान्येन प्रमाणेन, प्रत्यक्षादीनां विद्यमानोपलम्भकत्वात्,
5 धर्मस्य तु कर्तव्यतारूपत्वात्, कर्तव्यतायाश्च त्रिकालशून्यार्थरूप-
त्वात्, त्रिकालशून्यकार्यरूपार्थविषयविज्ञानोत्पादिका चोदनेति
मीमांसाभ्युपगमात्। अथ नोदनां व्याख्याति "नोदना तु क्रियां
प्रति" इत्यादि। नोदना पुनः क्रियां हवनसर्वभूताहिंसन-
दानादिक्रियां प्रति प्रवर्तकं वचो वेदवचनं प्राहुर्मीमांसका
10 भाषन्ते। हवनादिक्रियाविषये यदेव प्रेरकं वेदस्य वचनं सैव
नोदनेति भावः। प्रवर्तकं तद्वचनमेव निदर्शनेन दर्शयति
"स्वःकामो ऽग्निं यथा यजेत्" इति। यथेत्युपदर्शनार्थः।
स्वः स्वर्गो कामो यस्य स स्वःकामः सन्। अग्निं वह्निं यजे-
त्तर्पयेत्। अत्रेदं श्लोकबन्धानुलोम्येनेत्यमुपन्यस्तम्। अन्यथा
15 त्वेवं भवति। अग्निहोत्रं जुहुयात्स्वर्गकाम इति प्रवर्तकवचन-
स्योपलक्षणत्वात्। निवर्तकमपि वेदवचनं नोदना ज्ञेया, यथा
"न हिंस्यात्सर्वभूतानि" इति। एवं न वै हिंस्रो भवेत्
इत्याद्यपि। आभिर्नोदनाभिर्नोदितो यदि यथानोदनं यैर्द्रव्य-
गुणकर्मभिर्यो हवनादौ प्रवर्तते निवर्तते वा, तदा तेषां
20 द्रव्यादीनां तस्याभीष्टफलस्वर्गादिफलसाधनयोग्यतैव धर्म इत्य-
भिधीयते। एतेन वेदवचनैः प्रेरितो ऽपि यदि न प्रवर्तते न
निवर्तते वा विपरीतं वा प्रवर्तते, तदा तस्य नरकाद्यनिष्ट-

फलसंसाधनयोग्यतैव द्रव्यादिसंबन्धिनी पापमित्युच्यत इत्यपि ज्ञापितं द्रष्टव्यम्। इष्टानिष्टार्थसाधनयोग्यतालक्षणौ धर्माधर्मा-विति हि मीमांसकाः। उक्तं च शाबरे।

य एव श्रेयस्करः स एव धर्मशब्देनोच्यते।

अनेन द्रव्यादीनामिष्टार्थसाधनयोग्यता धर्मः॥ 5

इति प्रतिपादितं शबरस्वामिना। भट्टोऽप्येतदेवाह।

श्रेयो हि पुरुषप्रीतिः सा द्रव्यगुणकर्मभिः।

चोदनालक्षणैः साध्या तस्मात्तेष्वेव धर्मता॥ १॥

एषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मता।

श्रेयःसाधनता ह्येषां नित्यं वेदात्प्रतीयते॥ २॥ 10

ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः। इति॥

अथ विशेषलक्षणं प्रमाणस्याभिधानीयं, तच्च सामान्य-लक्षणाविनाभूतम्। ततः प्रथमं प्रमाणस्य सामान्यलक्षण-मभिधीयते। अनधिगतार्थाधिगन्तृ प्रमाणमिति। अनधि-गतोऽगृहीतो योऽर्थो बाह्यः स्तम्भादिः, तस्याधिगन्तृ 15 आदिक्येन संशयादिव्युदासेन परिच्छेदकम्। अनधिगतार्था-धिगन्तृ प्रागज्ञातार्थपरिच्छेदकं; समर्थविशेषणोपादानाज्ज्ञानं विशेष्यं लभ्यते; अगृहीतार्थग्राहकं ज्ञानं प्रमाणमित्यर्थः। अत्र "अनधिगत" इति पदं धारावाहिज्ञानानां गृहीत-ग्राहिणां प्रामाण्यपराकरणार्थम्। "अर्थ" इति ग्रहणं संवेदनं 20 स्वसंविदितं न भवति, स्वात्मनि क्रियाविरोधात्, किं तु नित्यं परोक्षमेवेति ज्ञापनार्थम्। तच्च परोक्षं ज्ञानं भाट्टमते

ऽर्थप्राकट्यफलानुमेयं, भाट्टप्रभाकरमते संवेदनाख्यफलानुमेयं वा प्रतिपत्तव्यम् ॥

अथ प्रमाणस्य विशेषलक्षणं विवक्षुः प्रथमं तन्नामानि तत्संख्यां चाह।

5 **प्रत्यक्षमनुमानं च शाब्दं चोपमया सह।**
**अर्थापत्तिरभावश्च षट् प्रमाणानि जैमिनेः ॥ ७२ ॥**

प्रत्यक्षानुमानशाब्दोपमानार्थापत्त्यभावलक्षणानि षट् प्रमाणानि जैमिनिमुनेः संमतानीत्यध्याहारः। चकाराः समुच्चयार्थाः। तत्राद्यानि पञ्चैव प्रमाणानीति प्रभाकरोऽभावस्य 10 प्रत्यक्षेणैव ग्राह्यतां मन्यमानोऽभिमन्यते। षडपि तानीति भट्टो भाषते ॥

अथ प्रत्यक्षस्य लक्षणमाचष्टे

**तत्र प्रत्यक्षमक्षाणां संप्रयोगे सतां सति।**
**आत्मनो बुद्धिजन्मेत्यनुमानं लैङ्गिकं पुनः ॥ ७३ ॥**

15 "तत्र" इति निर्धारणार्थः। इयमत्राक्षरघटना। सतां संप्रयोगे सति आत्मनोऽक्षाणां बुद्धिजन्मप्रत्यक्षमिति। श्लोके तु बन्धानुलोम्येन व्यस्तनिर्देशः। सतां विद्यमानानां वस्तूनां संबन्धिनि प्रयोगे संबन्धे सति आत्मनो जीवस्येन्द्रियाणां यो बुद्ध्युत्पादः, तत्प्रत्यक्षमिति। सतामित्यत्र सत इत्येकवचनेनैव 20 प्रस्तुतार्थसिद्धौ षष्ठीबहुवचनाभिधानम्। बहूनामप्यर्थानां संबन्ध इन्द्रियस्य संयोगः कदाचन भवतीति ज्ञापनार्थम्। अत्र

जैमिनीयं सूत्रमिदं "संप्रयोगे सति पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षं" इति। व्याख्या। सता विद्यमानेन वस्तुनेन्द्रियाणां संप्रयोगे संबन्धे सति पुरुषस्य यो ज्ञानोत्पादः, तत्प्रत्यक्षम्। अयमत्र भावः। यद्विषयं विज्ञानं तेनैवार्थेन संप्रयोग इन्द्रियाणां प्रत्यक्षं, प्रत्यक्षाभासं त्वन्यसंप्रयोगजं यथा मरुमरीचिकादिसंप्रयोगजं जलादिज्ञानमिति। अथवा सत्संप्रयोगजत्वं विद्यमानोपलम्भनत्वमुच्यते। तत्र सति विद्यमाने सम्यक्प्रयोगोऽर्थेष्विन्द्रियाणां व्यापारो योग्यता वा, न तु नैयायिकाभ्युपगत एव संयोगादिः। तस्मिन्सति शेषं प्राग्वत्। इतिशब्दः प्रत्यक्षलक्षणसमाप्तिसूचकः॥

अथानुमानं लक्षयति पुनःशब्दस्य व्यस्तसंबन्धात्। अनुमानं पुनर्लैङ्गिकम् लिङ्गाज्ज्ञानं लैङ्गिकम्। लिङ्गालिङ्गिज्ञानमनुमानमित्यर्थः। तत्रेदमनुमानलक्षणस्य सूत्रामात्रमुक्तम्। संपूर्णं त्वित्थं तल्लक्षणं ज्ञातसंबन्धस्यैकदेशदर्शनादसंनिकृष्टेऽर्थे बुद्धिरनुमानमिति शाबरमनुमानलक्षणम्। व्याख्या। अवगतसाध्यसाधनाविनाभावसंबन्धस्य पुंस एकदेशस्य साधनस्य दर्शनादसंनिकृष्टे परोक्षेऽर्थे बुद्धिर्ज्ञानमनुमानमिति॥

अथ शाब्दमाह।

**शाब्दं शाश्वतवेदोत्थमुपमानं तु कीर्तितम्।**
**प्रसिद्धार्थस्य साधर्म्यादप्रसिद्धस्य साधनम्॥ ७४॥**

शाश्वतोऽपौरुषेयत्वान्नित्यो यो वेदः, तस्मादुत्था उत्थानं

यस्य, तच्छाश्वतवेदोत्थम् । अर्थादिदं शब्दजनितं ज्ञानं शाब्दं प्रमाणम् । अस्येदं लक्षणं "शब्दज्ञानादसन्निकृष्टेऽर्थे बुद्धिः शाब्दं" इति । अयं शब्दोऽस्यार्थस्य वाचक इति यज्ज्ञानं तच्छब्दज्ञानम् । तस्मादनन्तरं शब्दे श्रुते ज्ञानादसन्निकृष्टे-
5 ऽर्थेऽप्रत्यक्षेऽप्यर्थे घटादौ बुद्धिर्ज्ञानं शाब्दं प्रमाणम् । शब्दाप्रत्यक्षे वस्तुनि यज्ज्ञानमुदेति तच्छाब्दमित्यर्थः । अत्र मते शब्दस्येदं स्वरूपं प्ररूप्यते । नित्या आकाशवत्सर्वगतास्च वर्णाः । ते च ताल्वोष्ठादिभिरभिव्यज्यन्ते न पुनरुत्पाद्यन्ते । विशिष्टानुपूर्वीका वर्णाः । शब्दो नित्यः । शब्दार्थयोर्वाच्यवाचकसंबन्ध इति ॥

10 अथोपमानमाह "उपमानं तु" इत्यादि । उपमानं पुनः कीर्तितम् । तत्किंरूपमित्याह "प्रसिद्धार्थस्य" इत्यादि । प्रसिद्ध उपलब्धोऽर्थो गवादिर्यस्य पुंस स प्रसिद्धार्थः, ज्ञातगवादि-पदार्थ इत्यर्थः । तस्य गवयदर्शने साधर्म्याद्गवयगतसादृश्या-त्परोक्षे गवि अप्रसिद्धस्य पुरानुपलब्धस्य सादृश्यसाधनं
15 ज्ञानम् । अस्येदं सूत्रं "उपमानमपि सादृश्यादसन्निकृष्टेऽर्थे बुद्धिमुत्पादयति, यथा गवयदर्शनं गोस्मरणस्य" इति । व्याख्या । गवयसादृश्यादसन्निकृष्टेऽर्थे परोक्षस्य गोः सादृश्ये गोस्मरणस्येति । गवि स्मरणं यस्य पुंसः स गोस्मरणः, तस्य गोस्मर्तुरित्यर्थः । शेषं स्पष्टम् । तत्रेदं तात्पर्यम् । येन
20 प्रतिपन्नो गौरुपलब्धो न गवयो न चातिदेशवाक्यं "गौरिव गवयः" इति श्रुतं, तस्यारण्ये पर्यटतो गवयदर्शने प्रथम उपजायते परोक्षे गवि सादृश्यज्ञानं यदुत्पद्यते "अनेन सदृशो

गौः" इति, तदुपमानमिति । तस्य विषयः सादृश्यविशिष्टः परोक्षो गौः, तद्विशिष्टं वा सादृश्यमिति । अस्य चानधिगतार्थाधिगन्तृतया प्रामाण्यमुपपन्नं, यतोऽत्र गवयविषयेण प्रत्यक्षेण गवय एव विषयीकृतो न पुनरसन्निहितस्य गोः सादृश्यम् । यदपि तस्य पूर्वं गौरिति प्रत्यक्षमभूत्, तथापि तस्य गवयोऽत्यन्तमप्रत्यक्ष एवेति कथं गवि तदपेक्षं तत्सादृश्यज्ञानम् । तदेवं गवयसदृशो गौरिति प्रागप्रतिपत्तेरनधिगतार्थाधिगन्तृ परोक्षे गवि गवयदर्शनात्सादृश्यज्ञानम् ॥

अथार्थापत्तिलक्षणमाह ।

**दृष्टार्थानुपपत्त्या तु कस्याप्यर्थस्य कल्पना ।**
**क्रियते यद्बलेनासावर्थापत्तिरुदाहृता ॥ ७५ ॥**

प्रत्यक्षादिभिः षड्भिः प्रमाणैर्दृष्टः प्रसिद्धो योऽर्थः, तस्यानुपपत्त्यान्यथासंभवेन पुनः कस्याप्यन्यस्यादृष्टस्यार्थस्य कल्पना यद्बलेन यस्य ज्ञानस्य बलेन सामर्थ्येन क्रियते । दृष्टाद्यनुपपत्त्येति पाठे तु दृष्टः प्रमाणपञ्चकेन, आदिशब्दाच्छ्रुतः शाब्दप्रमाणेन तस्य दृष्टस्य श्रुतस्य चार्थस्यानुपपत्त्या । कस्याप्यर्थस्य कल्पना यद्बलेन क्रियत इति प्राग्वत् । असावदृष्टार्थकल्पनारूपं ज्ञानमेवार्थापत्तिरुदाहृता । अत्रेदं सूत्रं "अर्थापत्तिरपि दृष्टः श्रुतो वार्थोऽन्यथा नोपपद्यत इत्यदृष्टार्थकल्पना" इति । अत्र प्रमाणपञ्चकेन दृष्टः शब्देन श्रुतस्चार्थौ मिथोवैलक्षण्यज्ञापनार्थपृथक्कृत्योक्तौ स्तः । शेषं

तुल्यम् । इदमुक्तं भवति । प्रत्यक्षादिप्रमाणषट्कविज्ञातोऽर्थो येन विना नोपपद्यते तस्यार्थस्य कल्पनमर्थापत्तिः । तत्र प्रत्यक्षपूर्विकार्थापत्तिः, यथाग्नेः प्रत्यक्षेणोष्णस्पर्शमुपलभ्य दाहकशक्तियोगोऽर्थापत्त्या प्रकल्प्यते । न हि शक्तिरध्यक्ष-
5 परिच्छेद्या नाप्यनुमानादिसमधिगम्या, प्रत्यक्षया शक्त्या सह कस्यचिदर्थस्य संबन्धासिद्धेः । अनुमानपूर्विकार्थपत्तिः, यथा-दित्यस्य देशान्तरप्राप्त्या देवदत्तस्येव गत्यनुमाने ततो ऽनुमानाद्गमनशक्तियोगो ऽर्थापत्त्यावसीयते । उपमानपूर्विका-र्थापत्तिः, यथा "गवयवद्गौः" इत्युक्तेरर्थाद्वाहदोहादिशक्ति-
10 योगस्तस्य प्रतीयते, अन्यथा गोत्वस्यैवायोगात् । शब्दपूर्विका-र्थापत्तिः श्रुतार्थापत्तिरितीतरनामिका, यथा शब्दार्थप्रतीतौ शब्दस्यार्थेन संबन्धसिद्धिः । अर्थापत्तिपूर्विकार्थापत्तिः, यथोक्तप्रकारेण शब्दस्यार्थेन संबन्धसिद्धावर्थान्नित्यत्वसिद्धिः, पौरुषेयत्वे शब्दस्य संबन्धायोगात् । अभावपूर्विकार्थापत्तिः,
15 यथा जीवतो देवदत्तस्य गृहेऽदर्शनादर्थाद्बहिर्भावः । अत्र च षड्भिरर्थापत्तिभिः शक्तिः साध्यते, पञ्चम्या नित्यता, षष्ठ्या गृहाद्बहिर्भूतो देवदत्त एव साध्यत इत्येवं षट्प्रकारा-र्थापत्तिः । अन्ये तु श्रुतार्थापत्तिमन्यथोदाहरन्ति । पीनो देवदत्तो दिवा न भुङ्क्ते इति वाक्यश्रवणाद्रात्रिभोजनवाक्य-
20 प्रतीतिः । श्रुतार्थापत्तिः । गवयोपमितस्य गोस्तज्ज्ञानग्राह्यता-शक्तिरुपमानपूर्विकार्थापत्तिरिति । इयं च षट्प्रकारा-प्यर्थापत्तिर्नाध्यक्षं, अतीन्द्रियशक्त्याद्यर्थविषयत्वात् । अत एव

नानुमानमपि, प्रत्यक्षपूर्वकत्वात्तस्य। ततः प्रमाणान्तरमेवार्थापत्तिः सिद्धा ॥

अथाभावप्रमाणं स्वरूपतः प्ररूपयति।

**प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते।**
**वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता ॥ ७६ ॥** 5

सदसदंशात्मके वस्तुनि प्रत्यक्षादीनि पञ्च प्रमाणानि सदंशं गृह्णते न पुनरसदंशं गृह्णते। प्रमाणाभावलक्षणस्त्वभावो ऽसदंशं गृह्णीते न पुनः सदंशम्। अभावो ऽपि प्रमाणाभावलक्षणो नास्तीत्यर्थस्यासन्निकृष्टस्य प्रसिद्ध्यर्थं प्रमाणमिति वचनात्। अन्ये पुनरभावाख्यं प्रमाणं त्रिधा वर्णयन्ति। 10 प्रमाणपञ्चकाभावलक्षणोऽनन्तरोऽभाव १ प्रतिषिध्यमानाद्वा तदन्यज्ञानं २ आत्मा वा विषयग्रहणरूपेणानभिनिर्वृत्तस्वभावः ३ इति। ततः प्रस्तुतश्लोकस्यायमर्थः। प्रमाणपञ्चकं प्रत्यक्षादिप्रमाणपञ्चकं यत्र भूतलादावाधारे घटादेराधेयस्य ग्रहणाय न जायते न प्रवर्तते, तत्राधेयवर्जितस्याधारस्य 15 ग्रहणेऽभावप्रमाणताभावस्य प्रामाण्यम्। एतेन निषिध्यमानात्तदन्यज्ञानमुक्तम्। तथा प्रमाणपञ्चकं यत्रेति पदस्यात्रापि संबन्धाद्यत्र वस्तुरूपे घटादेर्वस्तुनो रूपेऽसदंशे ग्राहकतया न जायते, तत्रासदंशेऽभावस्य प्रमाणता। एतेन प्रमाणपञ्चकाभाव उक्तः १। तथा प्रमाणपञ्चकं वस्तुसत्तावबोधार्थं घटादिवस्तु- 20 सत्ताया अवबोधाय न जायते ऽसदंशे न व्याप्रियते, तत्र

सत्तानवबोधेऽभावस्य प्रमाणता । अनेनात्मा विषयग्रहणरूपे-
णापरिणत उक्तः ३ । एवमिहाभावप्रमाणं त्रिधा प्रदर्शितम् ।
तदुक्तम् ।

प्रत्यक्षादेरनुत्पत्तिः प्रमाणाभाव उच्यते ।
5 आत्मनो परिणामो वा विज्ञानं वान्यवस्तुनि ॥ १ ॥

अत्र वाशब्दोऽनुत्पत्तेर्विशेषणतया योज्य इति । सम्मति-
टीकायामभावप्रमाणं यथा त्रिधोपदर्शितं तथेहापि तद्दर्शितम् ।
रत्नाकरावतारिकायां तु प्रत्यक्षादेरनुत्पत्तिरित्यस्यैवोक्तस्य
बलेन द्विधा तद्दर्शितमास्ते । तत्र वाशब्दः पुल्लिङ्गः प्रमा-
10 णाभावस्य विशेषणं कार्य इति । तत्त्वं तु बहुश्रुता जानते ।
अथ येऽभावप्रमाणमेकधाभिदधति तन्मतेन प्रस्तुतश्लोको
व्याख्यायते । प्रमाणपञ्चकं प्रत्यक्षादिप्रमाणपञ्चकं यत्र यस्मिन्
वस्तुरूपे घटादिवस्तुरूपे न जायते न व्याप्रियते । वस्तुरूपं
द्वेधा, सदसद्रूपभेदात् । अतो द्वयो रूपयोरेकतरव्यक्तये प्राह
15 "वस्तुसत्ता" इत्यादि । वस्तुनो घटादेः सत्ता सद्रूपता सदंश
इति यावत् । तस्या अवबोधार्थं सदंशो हि प्रत्यक्षादि-
पञ्चकस्य विषयः । स चेत्तेन न गृह्यते, तदा तत्र वस्तुरूपे
शेषस्यासदंशस्य ग्रहणायाभावस्य प्रमाणतेति । "वस्त्वसत्तावबो-
धार्थं" इति क्वचित्पाठान्तरम् । तत्रायमर्थः । प्रमाणपञ्चकं
20 यत्र वस्तुनो रूपे न व्याप्रियते, तत्र वस्तुनो यासत्तासदंशः,
तदवबोधार्थमभावस्य प्रमाणतेति । अनेन च त्रिविधेनैकविधेन
वाभावप्रमाणेन प्रदेशादौ घटाभावो गम्यते न च प्रत्यक्षे-

णैवाभावोऽवसीयते, तस्याभावविषयत्वविरोधात्, भावांशे-
नैवेन्द्रियाणां संयोगात्। अथ घटानुपलब्ध्या प्रदेशे धर्मिणि
घटाभावः साध्यत इत्यनुमानगम्योऽभाव इति चेत्। न,
साध्यसाधनयोः कस्यचित्संबन्धस्याभावात्। तस्मादभावोऽपि
प्रमाणान्तरमेव। अभावस्य प्रागभावादिभेदभिन्नो वस्तुरूपोऽ-
भ्युपगन्तव्यः, अन्यथा कारणादिव्यवहारस्य लोकप्रतीतस्या-
भावप्रसङ्गात्। तदुक्तम्।

न च स्याद्व्यवहारोऽयं कारणादिविभागतः।
प्रागभावादिभेदेन नाभावो यदि भिद्यते॥ १॥
यद्वानुवृत्तिव्यावृत्तिबुद्धिग्राह्यो यतस्त्वयम्।
तस्माद्गवादिवद्वस्तुप्रमेयत्वाच्च गम्यताम्॥ २॥
न चावस्तुन एते स्युर्भेदास्तेनास्य वस्तुता।
कार्यादीनामभावः को भावो यः कारणादिना॥ ३॥
वस्तुसंकरसिद्धिश्च तत्प्रामाण्यं समाश्रिता।
क्षीरे दध्यादि यन्नास्ति प्रागभावः स उच्यते॥ ४॥
नास्तिता पयसो दध्नि प्रध्वंसाभावलक्षणम्।
गवि योऽश्वाद्यभावस्तु सोऽन्योन्याभाव उच्यते॥ ५॥
शिरसोऽवयवा निम्ना वृद्धिकाठिन्यवर्जिताः।
शशशृङ्गादिरूपेण सोऽत्यन्ताभाव उच्यते॥ ६॥
यदि चैतद्व्यवस्थापकमभावाख्यं प्रमाणं न भवेत्
तदा प्रतिनियतवस्तुव्यवस्था दूरोत्सारितैव स्यात्।
क्षीरे दधि भवेदेव दध्नि क्षीरं घटे पटः

शब्दे शुक्लं पृथिव्यादौ चैतन्यं न निरात्मनि ॥ ७ ॥
अप्सु गन्धो रसश्चाग्नौ वायौ रूपेण तौ सह ।
व्योम्नि संस्पर्शिता ते च न चेदस्य प्रमाणता ॥८॥ इति ॥

अथ निरंशसदेकरूपत्वाद्वस्तुनोऽध्यक्षेण सर्वात्मना ग्रहणे
5 कोऽपरो सदंशो यत्राभावः प्रमाणं भवेदिति चेत् । न,
स्वपररूपाभ्यां सदसदात्मकत्वाद्वस्तुनः, अन्यथा वस्तुत्वायोगात् ।
न च "सदंशादसदंशस्याभिन्नत्वात्तद्ग्रहणे तस्यापि ग्रहः" इति
वाच्यं, सदसदंशयोर्धर्मिभेदेऽपि भेदाभ्युपगमात् । तदेव प्रत्यक्षा-
द्यगृहीतप्रमेयाभावग्राहकत्वात्प्रमाणाभावः प्रमाणान्तरमिति ॥
10 अथोक्तमपि किंचिद्युक्तये लिख्यते । अनधिगतार्थाधिगन्तृ
प्रमाणं पूर्वं पूर्वं प्रमाणमुत्तरं तु फलं सामान्यविशेषात्मकं वस्तु
प्रमाणगोचरः । नित्यपरोक्षं ज्ञानं हि भाट्टप्रभाकरमतयोरर्थप्रा-
कट्याख्यसंवेदनाख्यफलानुमेयम् । वेदोऽपौरुषेयः । वेदोक्ताहिंसा
धर्माय । शब्दो नित्यः । सर्वज्ञो नास्ति । अविद्यापरनाम-
15 मायावशात्प्रतिभासमानः सर्वः प्रपञ्चोऽपारमार्थिकः । परब्रह्मैव
परमार्थसत् ॥

उपसंहरन्नाह ।

**जैमिनीयमतस्यापि संक्षेपोऽयं निवेदितः ।**
**एवमास्तिकवादानां कृतं संक्षेपकीर्तनम् ॥ ७७ ॥**

अपिशब्दात्र केवलमपरदर्शनानां संक्षेपो निवेदितो जैमि-
नीयमतस्याप्ययं संक्षेपो निवेदितः । वक्तव्यस्य बाहुल्यादयमो-

यस्मिन् सूत्रे समस्तस्य वक्तुमशक्यत्वात्संक्षेप एव प्रोक्तः ।
अथ प्रागुक्तमतानां सूत्रकृन्निगमनमाह "एवम्" इत्यादि ।
एवमित्थमास्तिकवादानां जीवपरलोकपुण्यपापाद्यस्तित्ववादिनां
बौद्धनैयायिकसांख्यजैनवैशेषिकजैमिनीयानां संक्षेपेण कीर्तनं
वक्तव्याभिधानं संक्षेपकीर्तनं कृतम् ॥

अत्रैव विशेषमाह ।

**नैयायिकमतादन्ये भेदं वैशेषिकैः सह ।**
**न मन्यन्ते मते तेषां पञ्चैवास्तिकवादिनः ॥ ७८ ॥**

अन्ये केचनाचार्या नैयायिकमताद्वैशेषिकैः सह भेदं
पार्थक्यं न मन्यन्ते । एकदेवतत्वेन तत्त्वानां मिथोऽन्तर्भावने 10
ऽल्पीयस एव भेदस्य भावाच्च नैयायिकवैशेषिकाणां मिथो
मतैक्यमेवेच्छन्तीत्यर्थः । तेषामाचार्याणां मते आस्तिकवादिनः
पञ्चैव न पुनः षट् ॥

अथ दर्शनानां संख्या षडिति या जगत्प्रसिद्धा सा कथ-
मुपपादनीयेत्याशङ्क्याह । 15

**षड्दर्शनसंख्या तु पूर्यते तन्मते किल ।**
**लोकायतमतक्षेपे कथ्यते तेन तन्मतम् ॥ ७९ ॥**

ये नैयायिकवैशेषिकयोर्मतमेकमाचक्षते तन्मते षड्दर्शन-
संख्या तु षण्णां दर्शनानां संख्या पुनर्लोकायता नास्तिकास्तेषां
यन्मतं तस्य क्षेपे मीलन एव । किलेत्याप्तवादे । पूर्यते 20

पूर्णीभवेत् । तेन कारणेन तन्मतं चार्वाकमतं कथ्यते स्वरूपतः प्ररूप्यते । अत्राद्यपादे षडक्षरं छन्दोऽन्तरमिति न छन्दःशास्त्रविरोधः शङ्कनीयः ॥

---

## [ अथ लोकायतमतम् ] ।

प्रथमं नास्तिकस्वरूपमुच्यते । कापालिका भस्मोद्धूलनपरा
5 योगिनो ब्राह्मणाद्यन्त्यजान्ताश्च केचन नास्तिका भवन्ति । ते च जीवपुण्यपापादिकं न मन्यन्ते । चतुर्भूतात्मकं जगदाचक्षते । केचित्तु चार्वाकैकदेशीया आकाशं पञ्चमं भूतमभिमन्यमानाः पञ्चभूतात्मकं जगदिति निगदन्ति । तन्मते भूतेभ्यो मद-शक्तिवच्चैतन्यमुत्पद्यते । जलबुद्बुदवज्जीवाः । चैतन्यविशिष्टः
10 कायः पुरुष इति । ते च मद्यमांसे भुञ्जते मात्राद्यगम्याग-मनमपि कुर्वते । वर्षे वर्षे कस्मिंश्चिदपि दिवसे सर्वे संभूय यथानामनिर्गमं स्त्रीभिरभिरमन्ते । धर्मं कामादपरं न मन्यते । तन्नामानि चार्वाका लोकायता इत्यादीनि । चर्व अदने । चर्वन्ति भक्षयन्ति तत्त्वतो न मन्यन्ते पुण्य-
15 पापादिकं परोक्षं वस्तुजातमिति चार्वाकाः । मावाकश्यामाके-त्यादिसिद्धहैमोणादिदण्डकेन शब्दनिपातनम् । लोका निर्विचाराः सामान्या लोकास्तद्वदाचरन्ति स्मेति लोकायता लोकायतिका इत्यपि । बृहस्पतिप्रणीतमतत्वेन बार्हस्पत्याश्चेति ॥

अथ तन्मतमेवाह।

**लोकायता वदन्त्येवं नास्ति जीवो न निर्वृतिः।**
**धर्माधर्मौ न विद्येते न फलं पुण्यपापयोः॥ ८०॥**

लोकायता नास्तिका एवमित्थं वदन्ति। कथमित्याह। जीवश्चेतनालक्षणः परलोकयायी नास्ति, पञ्चमहाभूतसमुद्भूतस्य 5 चैतन्यस्येहैव भूतनाशे नाशात्परलोकानुसरणासंभवात्। जीवस्थाने देव इति पाठे तु देवः सर्वज्ञादिर्नास्ति। तथा न निर्वृतिर्मोक्षो नास्तीत्यर्थः। अन्यच्च धर्मश्चाधर्मश्च धर्माधर्मौ न विद्येते पुण्यपापे सर्वथा न स्त इत्यर्थः। न चैव पुण्यपापयोः फलं स्वर्गनरकादिरूपमस्ति, धर्माधर्मयोरभावे 10 कुतस्त्यं तत्फलमिति भावः॥

सांप्रतं यथा ते स्वशास्त्रे प्रोचिरे तथैव दर्शयन्नाह।

**तथा च तन्मतम्।**
**एतावानेव लोकोऽयं यावानिन्द्रियगोचरः।**
**भद्रे वृकपदं पश्य यद्वदन्त्यबहुश्रुताः॥ ८१॥** 15

"तथा च" इत्युपदर्शने। तन्मतं प्रक्रमान्नास्तिकमतम्। तत्कीदृगित्याह। अयं प्रत्यक्षो लोको मनुष्यलोकः। एतावानेव एतावन्मात्र एव। यावान् यावन्मात्रः। इन्द्रियगोचर इन्द्रियाणि स्पर्शनरसनघ्राणचक्षुःश्रोत्राणि पञ्च, तेषां गोचरो विषयः; पञ्चेन्द्रियविषयीकृतमेव वस्तु विद्यते नापरं किमपि। 20

लोकग्रहणाल्लोकस्थाः पदार्थसार्था ग्राह्याः । ततो यत्परे जीवं पुण्यपापे तत्फलं स्वर्गनरकादिकं च प्राहुः, तन्नास्ति, अप्रत्यक्षत्वात् । अप्रत्यक्षमप्यस्तीति चेत्, शशशृङ्गवन्ध्यास्तनन्धयादीनामपि भावोऽस्तु । न हि पञ्चविधेन प्रत्यक्षेण मृदुकठोरादिवस्तूनि तिक्तकटुकषायादिद्रव्याणि सुरभिदुरभिभावान् भूभूधरभुवनभूरुहस्तम्भकुम्भाम्भोरुहादिनरपश्वापदादिस्थावरजङ्गमपदार्थसार्थान् विविधवेणुवीणादिध्वनींश्च विमुच्य जातुचिदप्यन्यदनुभूयते । यावता च भूतोद्भूतचैतन्यव्यतिरिक्तचैतन्यहेतुतया परिकल्प्यमानः परलोकयायी जीवः प्रत्यक्षेण नानुभूयते, तावता जीवस्य सुखदुःखनिबन्धनौ धर्माधर्मौ तत्प्रकृष्टफलभोगभूमी स्वर्गनरकौ पुण्यपापक्षयोत्थमोक्षसुखं चोपवर्ण्यमानानि, आकाशे विचित्रचित्रकर्मेव, कस्य नाम न हास्यानि । ततो येऽत्रास्पृष्टमनास्वादितमनाघ्रातमदृष्टमश्रुतमपि जीवादिकं मार्गयमाणाः स्वर्गापवर्गादिसुखलिप्सातिप्रलब्धबुद्धयः शिरस्तुण्डमुण्डनदुश्चरतरतपश्चरणाचरणसुदुःसहतपनातपसहनादिक्लेशैर्यत्सौवं जन्म वञ्चयन्ति, तन्नेषां महामोहोद्रेकविजृम्भितम् । तदुक्तम् ।

तपांसि यातनाश्चित्राः संयमो भोगवञ्चना ।
अग्निहोत्रादिकं कर्म बालक्रीडेव लक्ष्यते ॥ २ ॥
यावज्जीवेत्सुखं जीवेत्तावद्वैषयिकं सुखम् ।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः ॥ १ ॥ इत्यादि

ततः सुस्थितमिन्द्रियगोचर एव तात्त्विक इति ॥

अथ ये परोक्षे विषयेऽनुमानागमादीनां प्रामाण्येन जीवपुण्यपापादिकं व्यवस्थापयन्ति न तात्पर्यविदः सन्ति, तान् प्रबोधयितुं दृष्टान्तं प्राह "भद्रे वृकपदं पश्य" इति । अत्रायं संप्रदायः । कश्चित्पुरुषो नास्तिकमतवासितान्तःकरणो निजां जायामास्तिकमतनिबद्धमतिं स्वशास्त्रोक्तयुक्तिभिरभियुक्तः प्रत्यहं प्रतिबोधयति । सा तु यदा न प्रतिबुध्यते तदा स इयमनेनोपायेन प्रतिभोत्स्यत इति स्वचेतसि विचिन्त्य निशायाः पश्चिमे यामे तया समं नगरान्निर्गत्य तां प्रत्यवादीत् । "प्रिये य इमे नगरवासिनो नराः परोक्षविषयेऽनुमानादिप्रामाण्यमाचक्षाणा लोकेन च बहुश्रुततया व्यवह्रियमाणा विद्यन्ते, पश्य तेषां चारु विचारणायां चातुर्यं" इति । ततः स नगरद्वारादारभ्य चतुःपथं यावत्स्थूरतरप्रसृमरसमीरणसमीभूतपांशुप्रकरे राजमार्गे द्वयोरपि स्वकरयोरङ्गुष्ठप्रदेशिनीमध्यमाङ्गुलित्रयं मीलयित्वा स्वशरीरस्योभयोः पक्षयोः पांशुषु न्यासेन वृकपदानि प्रचक्रे । ततः प्रातस्तानि पदानि निरीक्ष्यालोको लोको राजमार्गेऽमिलत् । बहुश्रुता अपि तत्रागता जनान् प्रत्यवोचन् "भो भो वृकपदानामन्यथानुपपत्त्या नूनं निशि वृकः कश्चन वनतोऽत्रागच्छत्" इत्यादि । ततः स तांस्तथाभाषमाणान्निरीक्ष्य निजां भार्यामजल्पत् । हे भद्रे प्रिये वृकपदं (अत्र जातावेकवचनं) पश्य निरीक्षस्व । किं तदित्याह । यद्वृकपदं वदन्ति अल्पमत्यबहुश्रुता लोकरूढ्या बहुश्रुता अप्येते परमार्थ-

मद्यशाला भाषमाणा अबहुश्रुता एवेत्यर्थः । यद्वदन्ति बहुश्रुता इति पाठे त्वेवं व्याख्येयम् । लोकप्रसिद्धा बहुश्रुता इति तथा श्रुते वृकपदविषये सम्यगविदितपरमार्था बहवोऽप्येक-सदृशमेव भाषमाणा अपि बहुमुग्धजनव्यामोहमुत्पादयन्तोऽपि च ज्ञाततत्त्वानामादेयवचना न भवन्ति । तथा बहवोऽप्यमी वादिनो धार्मिकच्छद्मधूर्ताः परवञ्चनैकप्रवणा यत्किंचिदनुमानागमादिभिर्व्यामोह्य जीवाद्यस्तित्वं सदृशमेव भाषमाणा अपि मुधैव मुग्धजनान् स्वर्गादिप्राप्तिलभ्यसुखसंततिप्रलोभनया भक्ष्याभक्ष्यगम्यागम्यहेयोपादेयादिसंकटे पातयन्तो बहुमुग्धधार्मिकव्यामोहमुत्पादयन्तोऽपि च सतामवधीरणीयवचना एव भवन्तीति । ततः सा पत्युर्वचनं सर्वं मानितवती ॥

तदनु च तस्याः स पतिर्यदुपदिष्टवान् तदेव दर्शयन्नाह ।

पिब खाद च चारुलोचने
यदतीतं वरगात्रि तन्न ते ।
न हि भीरु गतं निवर्तते
समुदयमात्रमिदं कलेवरम् ॥ ८२ ॥

हे चारुलोचने शोभनाक्षि पिब पेयापेयव्यवस्थालोपेन मदिरादेः पानं कुरु । न केवलं पिब खाद च भक्ष्याभक्ष्यनिरपेक्षतया मांसादिकं भक्षय च । पिबखादक्रिययोरुप-

लक्षणत्वाद्गम्यागम्यविभागत्यागेन भोगानामुपभोगेन स्वयौवनं सफलीकुर्वित्यपि वचोऽत्र ज्ञातव्यम् । तद्यौवनाद्यतीतमतिक्रान्तं हे वरगात्रि हे प्रधानाङ्गि तद्भूयस्तव न भविष्यतीत्यध्याहार्यम् । चारुलोचने-वरगात्रीति-संबोधनद्वयस्य समानार्थत्वात्प्यादरानुरागातिरेकान्न पौनरुक्त्यदोषः । यदुक्तम् ।

अनुवादादरवीप्साभृशार्थविनियोगहेत्वसूयासु ।
ईषत्संभ्रमविस्मयगणनास्मरणेष्वपुनरुक्तम् ॥ १ ॥

अथ स्वेच्छाविरचिते पाने खादने भोगसेवने च सुपापा-परलोके कष्टपरंपरा सुलभं च सति भुक्तभंचये भवान्तरे भोगसुखयौवनादिकमिति पराशङ्कां पराकर्तुं प्राह । न हि नैव हे भीरु परलोकमार्गेण नरकादिप्राणदुःखभयाकुले । गतमितःभवादतिक्रान्तं सुखयौवनादि निवर्तते परलोके पुनरप्युपढौकते । परलोकसुखलिप्सया तपश्चरणादिकष्टक्रियाभिरित्यसुखोपेक्षणं व्यर्थमित्यर्थः । अथ शुभाशुभकर्मणारतन्त्र्येण जीवेनामुं कायमधुनाधिष्ठाय स्थितेनावश्यं परलोकेऽपि स्वकर्महेतुकं सुखदुःखादि वेदितव्यमेवेत्याशंक्य प्राह । समुदयमात्रं समुदयो भूतचतुष्टयसंयोगः तन्मात्रम् । मात्रशब्दोऽवधारणे । इदं प्रत्यक्षं कलेवरं शरीरं, एवमितोऽध्याहारः, न पुनर्भूतचतुष्टयसंयोगमात्रादपरो भवान्तरयायी शुभाशुभकर्मविपाकभोक्ता काये कश्चन जीवो विद्यते । भूतचतुष्कसंयोगस्य विद्युदुद्द्योत इव क्षणतो दृष्टो नष्टः । तस्मात्परलोकानपेक्षया यथेच्छं पिब खाद चेत्यर्थः ॥

अथ प्रमेयं प्रमाणं चाह ।

**किं च ।**

**पृथ्वी जलं तथा तेजो वायुर्भूतचतुष्टयम् ।**
**आधारो भूमिरेतेषां मानं त्वक्षजमेव हि ॥ ८३ ॥**

5 "किं च" इत्यभ्युच्चये । पृथ्वी भूमिः, जलमापः, तेजो-वह्निः, वायुः पवनः, भूतचतुष्टयमेतानि भूतानि चत्वारि । आधारो भूमिरेतेषां भूतानामाधारो ऽधिकरणं भूमिः पृथ्वी । "चैतन्यभूमिरेतेषां" इति पाठे तु चतुष्टयं किंविशिष्टं चैतन्यभूमिश्चैतन्योत्पत्तिस्थानम् । भूतानि संभूयैकं चैतन्यं 10 जनयन्तीत्यर्थः । "एतेषां चार्वाकाणां मते प्रमाणभूमिरेतेषां" इति पठान्तरे तु भूतचतुष्टयं प्रमाणभूमिः प्रमाणगोचरस्तात्त्विक एतेषां मते । मानं तु प्रमाणं पुनरक्षजमेव प्रत्यक्षमेवैकं न पुनरनुमानादिकं प्रमाणम् । हिशब्दोऽत्र विशेषणार्थो वर्तते । विशेषः पुनश्चार्वाकैर्लोकयात्रानिर्वाहणप्रवणं धूमाद्यनुमानमिष्यते 15 क्वचन न पुनः स्वर्गादृष्टादिप्रसाधकमलौकिकमनुमानमिति ॥

अथ भूतचतुष्टयीप्रभवाद्देहे चैतन्योत्पत्तिः कथं प्रतीयता-मित्याशंक्याह ।

**पृथ्व्यादिभूतसंहत्या तथा देहपरीणतेः ।**
**मदशक्तिः सुराङ्गेभ्यो यद्वत्तद्वच्चिदात्मनि ॥ ८४ ॥**

20 पृथिव्यादीनि पृथिव्यप्तेजोवायुलक्षणानि यानि भूतानि तेषां संहतिः समवायः संयोग इति यावत्, तया हेतुभूतया ।

तथा तेन प्रकारेण या देहस्य परीणतिः परिणामः, तस्याः सकाशात् चिदिति प्रयोगः। यद्वत् यथा सुराङ्गेभ्यो गुडधातक्यादिभ्यो मद्याङ्गेभ्यो मदशक्तिरुन्मादकत्वं भवति, तद्वत्तथा चिच्चैतन्यमात्मनि शरीरे। अत्रात्मशब्देनानेकार्थेन शरीरमेव ज्ञातव्यं, न पुनर्जीवः, तस्याभावात्। भूतचतुष्टयसम्बन्धाद्देहपरीणामः, ततश्च देहे चैतन्यमिति। अत्र परीणतिशब्दे घञ-भावेऽपि बाहुलकादुपसर्गस्य दीर्घत्वं सिद्धम्। पाठान्तरं वा।

"पृथ्व्यादिभूतसंहत्यां तथा देहादिसंभवः।
मदशक्तिः सुराङ्गेभ्यो यद्वत्तद्वत्स्थितात्मता॥"

पृथिव्यादिभूतसंहत्यां सत्यां, तथाशब्दः पूर्वश्लोकापेक्षया समुच्चये, देहादिसंभवः। आदिशब्दाद्भूधरादयो भूतसंयोगजा ज्ञेयाः। सुराङ्गेभ्यो यद्वन्मदशक्तिर्भवति, तद्वद्भूतसंबन्धाच्छरीर आत्मता सचेतनता स्थिता व्यवस्थितेति। यदुवाच वाचस्पतिः "पृथिव्यापस्तेजो वायुरिति तत्त्वानि तत्समुदाये शरीरविषयेन्द्रियसंज्ञाः, तेभ्यश्चैतन्यं" इति॥

एवं स्थिते यथोपदिशन्ति तथा दर्शयन्नाह।

**तस्माद्दृष्टपरित्यागाद्यददृष्टे प्रवर्तनम्।**
**लोकस्य तद्विमूढत्वं चार्वाकाः प्रतिपेदिरे॥ ८५॥**

यस्माद्भूतेभ्यश्चैतन्योत्पत्तिः, तस्मात्कारणाद्दृष्टपरित्यागाद्दृष्टं प्रत्यक्षानुभूतमैहिकं लौकिकं यद्विषयजं सुखं तस्य परित्यागात् अदृष्टे परलोकसुखादौ तपश्चरणादिकष्टक्रियासाध्ये यत्प-

वर्तते प्रवृत्तिः, तल्लोकस्य विमूढत्वमज्ञानमेवेति चार्वाकाः प्रतिपेदिरे प्रतिपन्नाः । यो हि लोको विप्रतारकवचनोपन्यासचालितमनाः प्रत्यक्षमित्यं सुखं विहाय स्वर्गापवर्गसुखप्रेप्सया तपोजपध्यानहोमादौ प्रयतते, तत्र तस्याज्ञानमेव
5 कारणमिति तन्मतोपदेशः ॥

अथ ये शान्तरसपूरितस्वान्ता निरुपमं शमसुखं वर्णयन्ति, तानुद्दिश्य यच्चार्वाका ब्रुवते तदाह ।

**माध्यवृत्तिनिवृत्तिभ्यां या प्रीतिर्जायते जने ।**
**निरर्था सा मते तेषां धर्मः कामात्परो न हि ॥ ८६ ॥**

10 माध्यं ध्यानं द्वेधा, उपादेयं हेयं च । उपादेयं धर्मशुक्लध्यानयुग्मं हेये चार्तरौद्रध्यानद्वये । अथवा माध्ये साधनीये कार्ये, उपादेये पुण्यकृत्ये तपःसंयमादौ, हेये च पापकृत्ये विषयसुखादिके क्रमेण वृत्तिनिवृत्तिभ्यां प्रवर्तननिवर्तनाभ्यां जने लोके या प्रीतिर्मनःसुखं जायते समुत्पद्यते, सा
15 तेषां चार्वाकाणां मते निरर्था निःप्रयोजना निःफलातात्त्विकीत्यर्थः । हि यस्मात् । धर्मः कामाद्विषयसुखसेवनाख्यात् परः । काम एव परमो धर्मः, तज्जनितमेव च परमं सुखमिति भावः । अथवा, ये धर्मप्रभावादिह लोकेऽपीष्टानिष्टकार्ययोः सिद्ध्यसिद्धी वदन्ति, तान्प्रति यच्चार्वाका
20 जल्पन्ति तद्ग्रन्थकार आह "माध्यवृत्तिनिवृत्तिभ्याम्" इत्यादि । तपोजपहोमादिभिः साध्यस्य प्रेप्सितकार्यस्य या वृत्तिः सिद्धि-